ॐम्

नमोऽन्तर्य्यामिणे

श्रीमदानन्दबोधभट्टारकाचार्य्यसङ्गृहीतः

# न्यायमकरन्दः

यद्भासा निखिलं वि भाति विषयो यो न स्वयं ज्योतिषां।
यस्याऽऽहु र्भु वनोद्भवस्थितिलयान् लीलामयान् सूरयः॥

"आचार्य्यचित्सुखमुनिविरचिता व्याख्या"

ओन्नमः शिवाय।

टी०—प्रारिप्सितग्रन्थस्याऽविघ्नेन परिसमाप्तिप्रचयगमनकामः शिष्टाचारपरिप्राप्ततया कृतमिष्टदेवतानमस्कारमाचारशिक्षार्थं प्रतिपादयन् प्रकरणस्याभिधेयसबन्धप्रयोजनानि नि दर्शयति— "यद्भासा" इत्यादिना श्लोकेन, तत्र जीवब्रह्मणोरेकत्वलक्षण विषयं दर्शयितुं ब्रह्मणस्तटस्थलक्षणमाह— "यस्याहुर्भुवनोद्भवस्थितिलयान्" इति। जगत्सर्जनार्थं स्वार्थं परार्थं वा प्रवृत्तिरनुपपन्ना, ऽवाप्तसकलकामत्वव्याघातात्, सृज्यमानानां दुःखबहुलत्वाऽनुपपत्तेश्चेतीमामाशङ्कामपाकरोति— "लीलामयान्" इति,

यं चाऽगोचरमामनन्ति मनसां वाचां च विश्वात्मने ।
तस्मै शुद्धसुखाद्वितीयवपुषे शश्वन्नमो विष्णवे ॥ १ ॥

---

अनेन "लोकवत्तु लीलाकैवल्यम्" * इत्यधिकरणसिद्धो न्यायो दर्शितः, असर्वज्ञस्य जगत्कारणत्वमनुपपन्नमिति मत्वा सर्वज्ञत्वं प्रतिपादयति— "यद्भासा निखिलं विभाति" इति, "सत्यं ज्ञानम्" इतिश्रुतिप्रतिपादितं ज्ञानस्वभाववत्त्वं स्वरूपलक्षणं वाऽऽह "यद्भासा" इत्यादि, तस्य सजातीय विजातीयागोचरतया स्वप्रकाशतां दिदर्शयिषुर्विजातीयाप्रकाश्यत्वं तावदाह- "विषयो यो न स्वयं ज्योतिषाम्" इति, ज्योतिषाम्= "न तत्र सूर्य्यो भाति" इति प्रतिपादितानाम् । सजातीयाऽप्रकाश्यत्वमाह— "यं चागोचरम्" इति,

---

* व्या सू अ २ पा १ सू ३३ । प्रेक्षावत्प्रवृत्ते' प्रयोजनोद्देशपूर्वकत्वेन व्याप्तत्वाद्,वाप्तसकलकामस्य परमात्मनश्च प्रयोजनोद्देशविरहान्न सृष्टौ प्रवृत्तिरित्याक्षेपनिरासार्थस्तु-शब्द , कैवल्यम् इत्यत्र स्वार्थे ष्यञ्, - लीला-शब्द प्रवृत्तिवचनः, सा च विलासरूपा-क्रियारूपा चेति द्विविधा, विलासरूपापि पुनर्द्विविधा, उद्यानविहारादिरूपाऽऽमोदजननप्रयोजनवत्येका,ऽऽमोदोत्तर जायमानाऽऽमोदोद्रेके हासगानादिरूपा निष्प्रयोजना चापरा, तत्राद्याया प्रवृत्तावामोदादिरूप कश्चित् प्रयोजनोद्देश सम्भाव्येतापि सुखितस्य हासगानादिरूपाया तु प्रवृत्तौ न कोपि प्रयोजनोद्देश सभाव्यते दुःखोद्रेके रोदनाश्रुमोचनादिवद्, एवं च सप्रयोजनविलासरूपप्रवृत्तिव्यावृत्त्यर्थमत्र कैवल्यपदम्, एवं क्रियारूपापि प्रवृत्तिर्द्विविधा प्रयोजनोद्देशयुक्ता तद्रहिता च, तत्र गमनादिरूपा प्रयोजनोद्देशयुक्तानेकविधा प्रसिद्धा, प्रयोजनोद्देशरहिता च स्वाभाविकी याद‍ृच्छिकी चेति द्विविधा, तत्र श्वासप्रश्वासप्रचाररूपा स्वाभाविकी सुषुप्तेपि दर्शनाद्, भाषणकालेऽङ्गुल्यादिचालनरूपा च यादृच्छिकी, अत्राप्यर्थे प्रयोजनोद्देशयुक्तक्रियारूपप्रवृत्तिव्यावृत्त्यर्थमत्र कैवल्यपद, तथा च यथा लोके हासविलास-स्वाभाविकयादृच्छिकरूपासु प्रवृत्तिषु प्रेक्षावत्प्रवृत्तित्वे सत्यपि न प्रयोजनोद्देशपूर्वकत्वमेवमीश्वरप्रवृत्तावपिन प्रयोजनोद्देशपूर्वकत्वमिति तत्त्वम, ॥

मू०—निबन्धपुष्पजालानि समालोच्य प्रयत्नतः
सन्न्यायमकरन्दानां सङ्ग्रहः क्रियते मया ॥ २ ॥

---

टी०—वाङ्मनसयोरगोचरत्वाभिधानेन तज्जन्यज्ञानाविषयतया सजातीयाप्रकाश्यत्वमुक्तमिति*मन्तव्यम्, यद्यपि वाङ्मनसागोचरतयैव स्वप्रकाशत्वं सिद्ध्यति तथापि लोके विजातीयप्रकाशप्रकाश्यत्वस्य संभावितत्वात् तत्परिहाराय श्रुत्यभिहितत्वेन † "विषयो यो न स्वयंज्योतिषाम्" इत्युक्तम्। तदेवं स्वप्रकाशत्वेन परोक्षत्वादिरहिततया तत्पदार्थः परिशोधित, त्वंपदार्थमाह- "सुखवपुष" इति, परप्रेमास्पदतया जीवस्य सुखरूपत्वात् । तं परि‡शोधयति "शुद्धे" ति, साधनपारतन्त्र्यसातिशयत्वादिधर्मरहिततया शुद्धं सुखम्, एकत्वसिद्ध्यर्थं सद्वितीयत्वमपाकरोति- " अद्वितीयवपुष " इति । परिशोधितपदार्थयोरैक्यमाह-" विश्वात्मन " इति । अर्थाच्च निरतिशयानन्दप्राप्तिरशेषबन्धनिवृत्तिश्च प्रयोजनं दर्शितम्, ।

अथ वा " यद्भासा " इत्यादिना द्रष्टृतया जीवस्त्वंपदार्थ उपक्षिप्तः, जगत्कारणत्वेनाऽऽनन्दरूपतया च तत्पदार्थः, स्वप्रकाशत्वेनाद्वितीयतया च तयोः परिशोधनं ' विश्वात्मन ' इत्यनेन च तयोरेकत्वमुक्तमिति मन्तव्यम् ।

यद्वा "आनन्दादयः प्रधानस्य"§ इत्यनेनाधिकरणेन निर्दिष्टानि नित्यत्व-ज्ञानत्वाऽऽनन्दत्वात्मत्वपरिपूर्णत्वलक्षणानि पञ्च ब्र-

---

* साजात्य चात्राध्यात्मिकत्वेन ज्ञेयम्

† "न तत्र सूर्यो भाति" इत्यादिश्रुत्या विजातीयप्रकाशागोचरत्वस्य पृथगुक्तत्वेनात्रापि तदनुसृत्य पृथक्कृतदभिहितमिति भाव,

‡ एवंविधेषु विश्लेषस्यौचित्येपि विभ्रम्योच्चारण मा भूदिति न स आदृतः,

§ व्या सू अ ३ पा ३ सू ११ । सविशेषविषयासु प्राणाद्युपास्तिषु गुणोपसंहारोस्तु नाम निर्विशेषब्रह्मविद्यायान्तु नास्योपयोगो, निर्विशेष ह्यखण्ड ब्रह्म स्

मू०—इह खलु केचित्प्रतिक्षेत्रं क्षेत्रज्ञभेदमाचक्षाणास्तत्र व्यवस्थान्यथानुपपत्तिं प्रमाणमाचक्षते, तथाहि-अभेदे सत्येकस्मिन् सुखिनि सर्वे सुखिनः स्युर्दुःखिनि वा दुःखिनः स्युर्नचैवमास्ति, तथाचाहपरमर्षिः-“ नानात्मानो-व्यवस्थात ” * इति, यत्त्वेतदभिधीयते—यथैकस्मिन्नेव

---

ह्मरूपनिर्वाहकाणि मुखतो निर्दिष्टानि, अर्थाच्च विषयसंबन्धप्रयोजनानीत्यवगन्तव्यम् ॥ १ ॥

टी०—विश्वात्मन इत्यनुपपन्नं चेतनानां भेदाद्, अद्वितीयत्वं वाऽनुपपन्नमुक्तहेतोरित्याक्षिपति “इहखलु” इति, एकत्वेऽनुपपत्ति माह-“तथाहि”इति, व्यवस्थानुपपत्तेरभिधास्यमानखण्डनतयातितुच्छत्वादेतन्निराकरणे मायावादिनोतिमन्दमतितामाशङ्केतेति काणादसूत्रं दर्शयति- “ तथाच ”इतिं, अर्थापत्तेरन्यथाप्युपपत्तिमाशङ्क्य परिहराति पूर्ववादी-“ यत्त्वेतद् ” इति । यत्रौपाधिको भेदः पारमार्थिकैकत्वं तत्र वेदनानुसन्धानं दृष्टमिह च तन्निवर्तमानं

---

त्यादिवाक्यप्रतिपाद्य, तादृशब्रह्मावगतेश्चैकेनैव पदेन सम्भवादित्येकस्यामपि शाखायां पदान्तर नापेक्षित कुतः शाखान्तराम्नातगुणोपसहार इति शङ्कायां यद्यपि निर्विशेष ब्रह्म परमार्थतस्तथापि तत्रासत्त्वानानन्दत्वादिभ्रान्तयस्तेषु तेषु पुरुषेषु सम्भवन्ति ततश्च तादृग्भ्रान्तिनिरासाय प्रधानस्य परमात्मन सम्बन्धिनो ये धर्मा आनन्दादयस्तत्रतत्राम्नातास्ते सर्वे सर्वत्रोपसहर्तव्या इति सिद्धान्तितमत्र, यद्यपि लक्ष्ये निर्विशेषे विशेषणानि न सन्ति तथापि लक्षके वाच्ये वाक्यार्थे ऽनानन्दत्वादिविरुद्धानन्दत्वादिधर्मानुसन्धानात् सा शङ्का निवृत्ता भवतीति वाच्यार्थकोटावारोपितानां धर्माणामुपसहारो ध्यानैकप्रयोजनोऽपेक्षित, तथाच-यथा- “सत्य ज्ञान' 'विज्ञानमानन्द” “एष महानज आत्मा” इत्यादितत्तच्छाखागतविशेषणैरनित्यत्व,जडत्वा,नानन्दत्वा, नात्मत्व, परिच्छिन्नत्वव्यावृत्तिप्रणाड्या नित्यत्वादीनि पञ्च ब्रह्मरूपनिर्वाहकाणि निर्दिष्टानि तथात्रापि “यस्याङ्घ्र.” 'यद्भासा” 'सुखवपुषे” “विश्वात्मने” “विष्णवे” इत्यादिविशेषणैस्तानि निर्दिष्टानीति सक्षेपः ।

* वै० सू० अ० ३ आन्हि० २ सू० २० व्याख्यानृधृतपाठस्तु- “व्यवस्थातो नाना” इत्येवमाकारः ।

शरीरे पादाद्युपाधिनिबन्धनावेदनाव्यवस्था तथाऽनेकेष्वपि देहेष्वेकस्यैव देहिनो वेदनादिव्यवस्थोपाधिनिबन्धनोपपद्यत इति, तदसुन्दरम्, तथा सति यथा तत्र पादे मे वेदना शिरसि मे वेदनेत्यनेकवेदनास्वेकस्यैवानुसन्धानं, तथानेकशरीरोपाधिव्यवस्थितानेकवेदनास्वेकस्यैवानुसन्धानप्रसङ्गात्, नचैतदस्ति,

अन्यथा चरणतललग्नकण्टकोद्धरणाय पाणितलव्यापारवच्चैत्रशरीरलग्नकण्टकोद्धरणार्थं मैत्रशरीरव्यापारप्रसङ्गादिति ।

अपरे पुनरेवमाहुः-आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना, अश्रावणविशेषगुणाधिकरणत्वाद्

---

स्वव्याप्यमौपाधिकं भेदं निवर्तयतीत्यर्थः, यदि चैत्रशरीराधिष्ठाता मैत्रशरीराधिष्ठातुरभिन्नः स्यात् तदा मैत्रशरीरवेदनानुसन्धाता स्यात् मैत्रशरीराधिष्ठातृवद् इति प्रसङ्गार्थः, अन्यथौपाधिकभेदस्य तात्त्विकैकत्वस्योभयस्य वा सर्वशरीरानुसन्धानेन व्याप्त्यभावादाभास एव प्रसङ्गः स्याद् । विपर्य्यये पर्य्यवसानमाह "नचैतद्" इति ।

अनुसन्धाने दोषमाह- "अन्यथा" इति, यद्ययं मैत्रशरीरवेदनाऽनुसन्धाता स्यात्तदातद्धेतुपरिहाराय चैत्रशरीरं व्याप्रियेत तदधिष्ठातृवदेवेति प्रसङ्गार्थः ।

अर्थापत्तिमनुमानान्तर्भूतां ये न मन्यन्ते तन्मतेनात्मभेदं साधयति- "अपरे पुनर्" इति, द्रव्यत्वव्यतिरिक्तापरजात्याधारनिष्ठभेदेन भेदवानिति यावद् । सत्ताधारनिष्ठभेदवत्त्वस्यसिद्धसाधन-

मू०—यदुक्तसाधनं तदुक्तसाध्यं यथा घटादि, किञ्चात्मोक्तविधया नाना शरीरात्मसम्बन्धसम्बन्धित्वाच्छरीरवद्। यद्वा विवादपदानि शरीराणि स्वसङ्ख्यासङ्ख्येयात्मभिरात्मवन्ति शरीरत्वात् सम्प्रतिपन्नशरीरवद्,

---

टी०-ता माभूद् इत्यपरजात्याधारपदं, द्रव्यत्वाधारनिष्ठभेदवत्त्वेन सिद्धसाधनतापरिहारार्थं द्रव्यत्वव्यतिरिक्तेतिविशेषण, तथाचान्यनिष्ठभेदेनान्यस्यभेदवत्त्वानुपपत्तेरात्मनोद्रव्यत्वव्यतिरिक्तापरजात्याधारतया भेदवत्ता सिध्यतीत्यधिकरणसिद्धान्त*न्यायेनात्मभेदः सिद्धः।

उक्तविध†जात्याधारप्रतियोगिकभेदवत्त्वे पुनः सिद्धसाधनतैव, गुणादेरुक्तविधजात्याधारतया तत्प्रतियोगिकभेदवत्त्वस्यात्मनि विद्यमानत्वादितिद्रष्टव्यम्, ‡ आकाशदिगादौव्यभिचारवारणार्थमश्रावणविशेषगुणेति क्रमेण विशेषणद्वय। न च द्रव्यत्वव्यतिरिक्तापरजात्याधारतैवास्तु कृतं तन्निष्ठभेदवत्त्वेनेति वाच्यं साक्षाद्भेदवत्त्वप्रश्ने तथाविधप्रयोगस्यैव वक्तव्यत्वाद्, अन्यथाऽऽत्माऽऽत्मप्रतियोगिकभेदवानित्येवास्तु कृतं द्रव्यत्वव्यतिरिक्तापरजात्याधारेणेति पर्य्यनुयेगे कः प्रतीकारः स्यात्।

---

* यत्सिद्धावन्यप्रकरणसिद्धि सोऽधिकरणसिद्धान्त। न्या० सू० अ० १ आ० १ सू० ३०। यस्यार्थस्य सिद्धौ जायमानायामेवान्यस्य प्रकरणस्य=प्रस्तुतस्य सिद्धिर्भवति सोधिकरणसिद्धान्तः, यथा तद्व्यणुकादिकं पक्षीकृत्योपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीश्वरस्य, एव हेतुबलादपि यथा दर्शनस्पर्शनादिभिरेकार्थग्रहणादिन्द्रियव्यतिरिक्त आत्मनि साधित इन्द्रियनानात्व, तथा च यदर्थसिद्ध विना योऽर्थ प्रमाणान्तरान्नासिद्ध्यति सोऽधिकरणसिद्धान्त। 'यस्मिन्नर्थे ज्ञायमाने तदनुषङ्गिणोऽर्थास्तदन्तर्भावेणगम्यन्ते सोऽर्थ साक्षादधिक्रियमाणस्तदनुषङ्गिना चाधारस्तदाश्रयत्वात्सिद्धः, स पक्षो वा भवतु हेतुर्वाऽनेन रूपेणाधिकरणसिद्धान्त' इतितात्पर्यटीका॥

† प्रतियोगिकपद विहाय निष्ठपदसन्निवेशस्य फलमाह "उक्तविध" इत्यादिना

‡ द्रव्यत्वव्याप्यजात्या नाना इत्यपिसुवच, स्ववृत्तिर्या द्रव्यत्वव्याप्यजाति तद्विशिष्टान्यासमवेतवहुत्वसख्यावान् इति च तदर्थः॥

मू०—नचैतत्सकलमप्यागमविरुद्धमिति साम्प्रतम्, आगमस्याऽन्यार्थत्वाद्, ऐकात्म्यपरोह्यागमःपरमात्मन ऐक्यमाह 'एकएवायं परमात्मा नानेके परमात्मानः सन्ति' इति, अथवैकमपि तत्त्वमभिन्नकालदेशमेवमात्मानोऽपि नित्यविभुतयाऽभिन्नकालदेशा इत्यैक्यमुपचर्य्यते । तदेवमागमस्यार्थान्तरलब्धावकाशस्य नान्यथासिद्धानुमानाद्यपबाधने सामर्थ्यसंभवः,

---

टी०—सकलमहाविद्यानुमान* साधारणतया चास्य वचनीयत्वात् "शरीरात्मसंबन्धसंबन्धित्वाद्"इति, शरीरसंबन्धित्वादितिवा, आत्मसंबन्धित्वादितिवा, उभयसबन्धित्वादितिवाऽभिधाने सत्ताद्रव्यत्वादिभिरनैकान्तिको हेतुस्तत्परिहाराय सकलविशेषणानि । नन्वागमस्य कथमन्यार्थत्वम् "एको देव" इत्येकत्वप्रतिपादनपरत्वादित्यत आह "ऐकात्म्यपरोहि" इति । तटस्थपक्षे† परमात्मनि सर्वभूतान्तरात्मत्वासंभवादपरितोषात्पक्षान्तरमाह "अथवा" इति, भिन्नानामेकत्वोपचारे निमित्तमाह "एकम्" इति, ननु श्रुतिविरोधे ऽनुमानमेववाध्येत न पुनरनुमानेन श्रुतिरित्याशङ्क्य श्रुतेरनुमानेन स्वविषयप्रच्यावनन्यायमुपसंहृतिव्याजेनाह—"तदेवम्" इति । 'सावकाशनिरवकाशयोर्निरवकाशं बलवद् इति न्यायादनवकाशमनुमानमेव श्रुतिमन्यथयेदिति भावः । नचैवमन्यत्राऽदृष्टचरमित्याह—

---

* पक्षे प्रकारान्तरेण साध्योपसंहारशालित्वे सति दृष्टान्ते प्रकारान्तरेण साध्योपसंहारशालित्व महाविद्यानुमानत्वम्, स्पष्टाचेय रीतिस्तत्त्वप्रदीपिकायाम् । वादीन्द्रस्येद कौशलमधिकरणसिद्धान्तन्यायमूलमितिध्येयम् ।

† "एको देव" इति मन्त्रे प्रत्यगात्मभिन्नस्य परमात्मन प्रतिपाद्यत्वे ऽभ्युपगम्यमाने (सर्वभूतान्तरात्मा) इति मन्त्रशेष कुप्येतातो न तस्य परमात्मपरत्वमिति भाव ।

मू०—आदित्यवर्णाद्यागमस्यैवारूपाद्यनुमानापबाधने, तत्सिद्धं प्रतिक्षेत्रं क्षेत्रज्ञभेद इति ।

---

टी०—"आदित्यवर्ण" इति, अत्रादित्यस्य वर्ण इव वर्णो यस्येति चेतनस्य रूपवत्त्वप्रतीतावपि 'विभुत्वादरूप आत्माऽऽकाशवद्' इत्यनुमानविरोधे श्रुति रन्यथा* नीयते यथा तद्वत् । वर्णश्रुतेर्नानुमानविरोधादुपचरितत्वं किन्नाम "अशब्दमस्पर्शमरूपमव्ययम्" इति श्रुत्यन्तराविरोधाद् इति चेद्, अत्रापि तर्हि "द्वासुपर्णासयुजा†सखाया" "अजामेकाम्"‡ इत्यादिचेतनभेदप्रतिपादकश्रुतिविरोधादेकत्वश्रुतेरुपचरितार्थतेति समानम् । न च तत्परैकत्वश्रुति विरोधे भेदश्रुतीनामेवोपचरितत्वम्, अनुमानानुगृहीतभेदश्रुतिविरोधादुदाहृतश्रुतीनामेकत्वे तात्पर्य्यस्य वक्तुमशक्यत्वादिति भावः ।

---

* "आदित्यवर्ण तमस· परस्ताद्" इति श्रुतिरविद्याविलक्षणस्वप्रकाशस्वरूपप्रतिपादनपरेति भाव ।

† 'समान वृक्ष परिषस्वजाते, तयोरन्य· पिप्पल स्वाद्वत्त्यनश्नन्नन्योभिचाकशीति" इतिमन्त्रशेषः, द्वा-इत्यादौ सर्वत्र छान्दसो द्विर्वचनस्याऽऽकारादेशः, द्वौ सुपर्णौ, शरीररूपवृक्षवाससामान्यात्, सयुजौ = नियन्तृनियन्तव्यभावेन युक्तौ, सखायौ = उपासनतत्फलप्रदानाभ्यां परस्पर प्रीणयन्तौ, समानम्, = एकं, = वृक्षं, = शरीर, परिषस्वजाते, परिषङ्ग =सबन्ध·,अन्य·, = एको जीव पिप्पल, = कर्मफल,स्वादु, = शुभाशुभ,अत्ति = भुङ्क्ते,अन्य = ईश्वर , अनश्नन्, = कर्मफलासस्पृष्टः सन् , =साक्षितया = अभिचाकशीति = प्रकाशते, । "जुष्ट यदा पश्यत्यन्यमीशम्' इत्युत्तरमन्त्रानुसारेणेद व्याख्यानम् = पैङ्गिरहस्यब्राह्मणे तु = बुद्धिक्षेत्रज्ञस्वरूपविवेकपरतयेद व्याख्यातमित्यन्यत्रव्यक्तम्, यद्यपि क्षेत्रज्ञभेदप्रस्तावे नास्यमन्त्रस्योपन्यासो युक्तोऽर्थद्वयेपि प्रकृतानुपयोगात् तथापि कथञ्चिच्चेतनभेदपरत्वाशमादायात्रोपन्यासो बोध्य· ।

‡ अजामेकामितिमन्त्रोत्तरार्द्धे = " अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोन्य, " इत्यनेन एकोऽज', = बुद्धिसत्वादात्मनो विवेकमबुध्यमान पुरुष प्रकृति जुषमाणः, = तत्तादात्म्यापन्नत्वेन बुद्धिस्थान् सुखादीनात्मन्यभिमन्यमानः, अनुशेते, = सुखी दुःखी मूढोह मित्यनुशयेन ससरति, अन्योज = सत्वपुरुषान्यताख्यातिमान् एनां भुक्तभोगां, = निष्पादितभोगापवर्गत्वेनसमाप्ताधिकारां प्रकृतिं, जहाति, = अनात्मतया त्यजति, इत्येवं व्यक्तमेव बद्धमुक्तक्षेत्रज्ञपृथक्त्वमाम्नातम् ।

मू०—तदिदं न समञ्जसं, तथा हि—यत्तावद् व्यवस्थान्यथानुपपत्तिः प्रमाणमिति, तत्रेदं भवान् प्रष्टव्यः केयं व्यवस्थेति, चैत्रः सुखी मैत्रः दुःखीत्यैषैव चेत्,

कथन्तर्हि चैत्रमैत्रभेदासिद्धावेषा सिध्येत्, तद्भेदन्त्वनयैव साधयतो दुष्परिहरः परस्पराश्रयदोषः, सिद्धे भेदे व्यवस्थासिद्धिः सिद्धा च व्यवस्था तत्साधिकेति,

अथावधीरिताधारभेदः सुखादिभेदो व्यवस्थेति, सापि कथं क्षेत्रज्ञभेदमाक्षिपेत्, न खल्वेकस्मिन्ननेकधर्मासम्भवो येनाधारभेदः प्रमीयेत, मा भूद् दहनपचनाद्यनेकधर्मासम्भवो वन्हेः ।

---

टी०—आदिशब्देन 'आत्मा निराधारो निरवयवद्रव्यत्वात् कालवद्' इत्याद्यनुमानविरोधात् "स्वे महिम्नि" इत्यादिश्रुतीनामप्यन्यपरतानयनं* द्रष्टव्यम् ।

भिन्नाधिकरणानेकधर्मता व्यवस्था, अथ धर्मभेदमात्रं वा, विरुद्धानेकधर्मता वा, इति विकल्प्याद्यं दूषयति "कथन्तर्हि" इति, ननु व्यवस्थयैव चैत्रमैत्रभेदोपि सिद्ध्यतीति, नेत्याह "तद्भेदन्तु" इति । द्वितीयमुत्थाप्य दूषयति "अथावधीरिते" ति, एकस्मिन्ननेकधर्मासम्भवे दोषमाह "माभूद्" इति, यद्येकस्मिन्ननेकधर्मासम्भवस्तर्हि वह्नावपि दहनपचनादयो धर्मा न भवेयुः सम्भवन्ति च, तस्माद् वन्हेर्दहनपचनाद्यनेकधर्मासम्भवो माभूदि-

---

* स्वातिरिक्ताधाराभावपरतया नयनम् ।

मू०—अथ विरुद्धानेकधर्मता व्यवस्था-परस्परविरुद्धात्मानः सुखादय इति, कोऽयं विरोधः सुखादीनां, न तावत्सहानवस्थानं, खरतरदिनकरकरव्रातपातनिर्दग्धकायस्य* शिशिरसलिलावगाढापरभागस्यापर्य्यायमेव सुखदुःखोपलम्भसम्भवात्, तथाहि - एकमेव त्वगिन्द्रियमनेकदेशाभ्यां शीतोष्णाभ्यामपर्य्यायं सन्निकृष्यते, तौ च सान्नि-

---

टी०—त्येवमर्थमेकस्मिन्ननेकधर्मासम्भवो न वक्तुमुचित इत्यर्थः। तृतीयमुत्थापयति "अथविरुद्धे" ति, किं सहानवस्थानलक्षणो विरोधः, किं वध्यघातकभावो वा, भावाऽभावो वा, इति विकल्प्याद्यं दूषयति "नतावद्" इति। युगपत्सुखदुःखयोरुपलम्भं दिदर्शयिषुः प्रथमं तयोर्युगपदुत्पादसामग्रीं सम्पादयति-"तथाहि" इति, ननूर्ध्वाधःकायभागयोरपि त्वगिन्द्रियस्य भिन्नत्वादणुपरिमाणस्य च मनसः क्रमेणैव तत्सन्निकर्षात् क्रमेणैव शीतोष्णविज्ञानोत्पाद इति तत्राह "एकम्" इति, स्पर्शोपलब्धेरन्यथानुपपत्त्या वा, तस्याः† कार्य्यतया करणकार्य्यत्वानुमानेन वा त्वगिन्द्रियमवगम्यमानमेकमेवाऽवगम्यते, प्रत्यवयवमनेकत्वगिन्द्रियकल्पनायां कल्पनागौरवप्रसङ्गाद्, युगपत्सर्वाङ्गीणशीतोष्णयोरनुपलब्धिप्रसङ्गाच्चैकमेव तदित्यर्थः। भवतु सन्निकर्षयोर्यौगपद्यं तथापि मनसाधिष्ठानं तयोः क्रमेणैवेत्यत आह-

---

* प्रचण्डमार्तण्डमरीचिनिकरम्बाभिघातमतप्तकलेवरस्य।

† तस्या = स्पर्शोपलब्धे,

मू०—कर्षौ सकृदेवेन्द्रियद्वारा मनसैवाधिष्ठीयेते नयनद्वारेव तत्सन्निकर्षाः कुम्भादीनां, तदधिष्ठितौ च शीतोष्णविषयात्मिकामेकामेव धियमादधाते, साचात्मनि भोगायतनदेहवर्तिनि मनःसंयोगविशेषजुषि जनयत्यपर्य्यायमेवसुखदुःखे।

नैवास्त्यात्मविशेषगुणानामपर्य्यायेणोत्पत्तिरिति चेत्,

---

टी०—"तौच" इति, नच कुम्भादिसन्निकर्षाणामपि क्रमेणैवाधिष्ठानादसम्प्रतिपन्नो दृष्टान्त इति वाच्यम्, तथा सति दश घटा इति समूहालम्बनविज्ञानानुदयप्रसङ्गात्, नच तत्रापि क्रमोत्पन्नतत्तद्विज्ञानसमुपजनितसंस्कारकारणकः समूहविषयः प्रत्ययोऽन्य एवेति वाच्यं सन्निकर्षवत्संस्काराणामप्यनेकेषामेकसमूहालम्बनविज्ञानकारणतानुपपत्तेः, तेषां च सकृदेव मनसाधिष्ठितानां तथात्वे प्रकृतेपि समं समाधानमन्यत्राभिनिवेशादिति भावः।

ततः किमित्यत आह—"तदधिष्ठितौ च" इति। एवंसुखदुःखयोर्निमितकारणयौगपद्यमभिधाय समवाय्यसमवायिनोरपि तदाह—"सा च" इति। आत्मनि—भोगायतनदेहवर्त्तिनि—मन संयोगविशेषजुषि—इति विशेषणत्रयेण निमित्त-समवाय्यसमवायिनां क्रमेण निर्देशः। आत्मनः सर्वगतत्वेन सर्वत्रसुखदुःखयोरुत्पत्तिं व्यावर्तयति- "देहेति, शवशरीरसंयोगं व्यावर्त्तयति—भोगेति, नव तार्किकरीत्या वा शरीरात्मसंयोगोऽसमवायिकारणान्तरं निर्दिशति—"भोगायतने,ति, विशेष=पदेन सौषुप्तिकमनःसयोगं व्यावर्तयति।

गूढाभिसन्धिः शङ्कते—"नैव" इति,—

मू०—न, नियामकाभावाद्, अथापि स्यादात्मविशेषगुणा बुद्ध्यादयो न युगपदुत्पद्यमाना उपलभ्यन्ते गन्धरसादिधियां पर्य्यायेणोदयदर्शनाद्, इति, तदिदमसुन्दरं, तत्कारणेन्द्रियमनःसंयोगक्रमस्य कार्य्यक्रमहेतोस्तत्रसम्भवाद्, इह तु शीतोष्णविज्ञानवदात्ममनःसंयोगस्यापर्य्यायेण सुखदुःखोत्पादनसमर्थस्य सम्भवाद्, उपपन्नः सुखदुःखयोरात्मसमवेतयोरन्तःकरणेन संयुक्तसमवायनिबन्धनैकोपलम्भगोचरभाव इति ।

अलं वा विवादेन, अस्तु वा पर्य्यायेण सुखदुःखयोरुत्पादः, विनश्यदविनश्यतोस्तु युगपद्भावादपर्य्यायेणोपलम्भगोचरभावोपपत्तिरिति ।

---

टी०—गूढाभिसन्धिरुत्तरमाह– "न नियामकाभावाद्" इति । पूर्ववादी स्वाभिप्रायमुद्घाटयति—"अथापि स्याद्" इति, सुखदुःखे पर्य्यायेणैव जायेते आत्मविशेषगुणत्वाद् रूपरसादिज्ञानवद् इत्यनुमानं नियामकमिति भावः । तदनुमानं क्रमवत्सामग्रीमत्त्वोपाधिना दूषयति– "तदिदम्" इति, उपाधेः साधनव्यापकत्वमाशङ्क्य परिहरति– "इहतु" इति, युगपत्सामग्रीसम्भवस्य न्यायेनोपपादनाच्च तद्विरोधे साधनव्यापकतेति भावः । युगपदुत्पादमभिधायापर्य्यायेण सुखदुःखयोरुपलम्भमाह —"उपपन्न" इति ।

क्रमेणोत्पादमङ्गीकृत्यापि सहोपलम्भमाह "अस्तु वा" इति, विनश्यदविनश्यतोः सहावस्थानादुपलंभाच्च सुखदुःखयोः सहानवस्थानं न विरोध इति भाव ।

मू०—अथोर्द्ध्वाधःकायभागोपाधिकपुरुषप्रदेशसमवायिनोर्न युगपदेकत्र भावः सुखदुःखयोरिति, तर्हीहापि देहभेदोपाधिकैकपुरुषप्रदेशविशेषाश्रयतयोपपन्नव्यवस्थानान्न वास्तवाधारभेदाक्षेपकत्वासम्भवः सुखादीनाम् ॥

योऽपि मन्यते शरीरपरिमाणःखल्वात्मा तेनास्य शरीरवद् भागसम्भवात् तद्भागभेदवर्त्तिनोरेव सुखदुःखयोरेकशरीरेप्यसङ्करः, तथा च शरीरभेदेपि पारमार्थिकः सुखाद्याधारभेदाक्षेप इति, न, तस्यापि तत्राप्यात्मभागा एव सुखदुःखभेदभाजो भवेयुश्चेतनाभिसम्बन्धनियमात्सुखादीनां, तथाचात्मभागा अपि चेत्तद्भाजस्तेऽपि चेतये-

टी०-सुखदुःखयोः प्रदेशभेदेन सहानवस्थानमाशङ्कते-"अथ" इति, औपाधिकात्मप्रदेशादेव प्रकृतेपि व्यवस्थासम्भवाद् इत्यर्थापत्तेरन्यथाप्युपपत्तिरिति परिहरति "तर्हि" इति, देहोपाधिको य एकः पुरुषः तस्य प्रदेशविशेषः, स एव वा प्रदेशविशेषः, तदाश्रयतयोपपन्ना व्यवस्था येषां ते तथा तेषामुपपन्नव्यवस्थानां, तस्माद्वा * हेतौ पञ्चमी।

जनमतेन सहानवस्थानविरोधमाशङ्कते "योपि" इति, प्रकृते किमायातमित्यत आह "तथाच" इति, किमवयवानां सुखदुःखसम्बन्धः किंवाऽवयविन इति विकल्प्याद्यं दूषयति "न तस्यापि" इति, भवतु चेतनाभिसंबन्धनियमः सुखादीनां तथापि कथमवयवेषु तद्भाव इति तत्राह "तथाच" इति।

---

* तस्माद्वा — व्यवस्थान'द्वा इति पञ्चम्यन्तपाठो वा,

मू०—रन्, इत्येकस्मिन्नेव काये चेतनावाननेक इति स्याद्, एवं च भिन्नाभिप्रायानेकचेतनाधिष्ठितमेकदैव विरुद्धदिक्क्रियं शरीरमुन्मथ्येत,* अक्रियं वा प्रसज्येता, तोऽचेतनावयस्यात्मन एव चैतन्यमास्थेयं, तथा च तत्रैव सुखादयोऽपीति कथमेषामव्यतिकरः, अतः काल्पनिक्येव कायैक्ये सुखदुःखव्यवस्थेति सिद्धम्, एवं च न कायभेदेपि पारमार्थिकपुरुषभेदाक्षेपकतासम्भव इत्यभिहितमधस्ताद् ।

यत्त्विदं चोद्यते देहैक्यवदात्मैक्ये देहभेदेप्यनुसन्धानप्रसङ्ग इति ।

अत्र ब्रूमः—न तावत् तत्रापि प्रदेशः प्रदेशान्तरभो-

---

टी०–भवतु चैतन्यं को दोष इत्यत आह "एकस्मिन्नेव" इति, तथापि किमनिष्टमिति, तत्राह "एवं च" इति । विरुद्धा दिशि क्रिया यस्य तत्तथा। तस्मादवयविनश्चैतन्यमिति द्वितीयपक्षः परिशिष्यते तत्र च सहावस्थानमेवेत्याह—"तथाच" इति, अव्यतिकरः= असाङ्कर्य्यम् । साधितं दृष्टान्तमुपसंहरति—"अत" इति, दार्ष्टान्तिके फलितमाह—"एवंच" इति, किमेकदेहेन्द्रियैर्विशिष्टस्य देहान्तरे भोगानुसन्धानमापाद्यते किंवा तदुपलक्षितस्य, नाद्यः निदर्शनेपि तत्तदवयवविशिष्टात्मप्रदेशस्यावयवान्तरे भोगानुसन्धानाभावादित्याह—"न तावद्" इति, ननु तत्रापि प्रदेशः प्रदेशान्तरे भोगमनुसन्धत्तेऽपरथा यश्चक्षुषा रूपमद्राक्षं यश्च पादे वेदनावानस्मि स एवाहमिदानीं गन्धं जिघ्राणीति शिरसि सुखमनुभवामीति च प्रतिसन्धानाभावप्रसङ्गाद् इतिचेद्, न, विकल्पासहत्वात् किं

* उन्मथ्येत = विदीर्य्येत ।

मू०—गमनुसंधत्ते तथेहापि न जीवो जीवान्तरभोगमनु-संदधातीति समानं, स्वरूपानुसन्धाने तु नास्माकं का चन क्षतिः।

अथैवमपि चरणतललग्नकण्टकोद्धरणाय पाणितलव्यापारवच्चैत्रशरीरोपाधिकवेदनाहेतुपरिहाराय मैत्रगात्र-

---

टी०—नयनविशेषितघ्राणविशेषितयोश्शिरश्चरणोपाधिकयोश्चाभेदः किम्भेदो वा नाद्यः विशिष्टयोरभेदे विशेषणीभूतनयनादीनामप्यभेदप्रसङ्गाद्, नयननाशे च घ्राणावयविनोऽपि नाशप्रसङ्ग इति गन्धमपि न गृह्णीयाद्, एवं नयनविकलोऽपि रूपं पश्येद् घ्राणावच्छिन्नस्य विद्यमानत्वात् तदभेदेनेतरस्यापि विद्यमानत्वात्, शिरश्चरणावच्छिन्नयोरभेदेन पादवेदनां शिरःसुखं च पादेप्यनुसंदधीत, नापि द्वितीयः, अतिप्रसङ्गपरिहाराय किंचिदवयवविशेषितस्यावयवान्तरे भोगाननुसन्धानस्यानिच्छताप्यभ्युपगमनीयत्वाद्, औपाधिकभेदेन कुम्भापवरकनभसोरल्पत्वमहत्त्वव्यवस्थाया लोके दृष्टत्वाद्, इन्द्रियस्यातीन्द्रियत्वेन चक्षुषा रूपमद्राक्षं, घ्राणेन गन्धमनुभवामि, इतिप्रत्यभिज्ञानुपपत्ते, कालद्वयोपलक्षितस्य सोयमितिप्रत्यभिज्ञाविषयत्ववत् तदुपलक्षितस्यैव रूपमन्वभूवं गन्धमनुभवामीतिप्रत्यभिज्ञासंभवात् प्रदेशान्तरविशिष्टस्य न प्रदेशान्तरे भोगसम्भवः, तथा शरीरान्तरविशिष्टस्य न शरीरान्तरभोगसम्भव इति भावः।

उपलक्षितस्यानुसन्धानप्रसङ्ग इति द्वितीयं पक्षं दूषयति—"स्वरुपानुसन्धान" इति,

भोगाभावेपि वेदनाहेतुपरिहारः किमिति न भवेदित्यत आह—

मू०—व्यापारप्रसङ्गो दुर्वार इति, न, इहानुसन्धातुरभोक्तृत्वाद्, भोगप्रयोजकत्वाच्च वेदनापरिहारस्य, इह हि ब्रह्मैवैषां स्वरूपमनुसन्धातृ श्रुतिशिरःशतसमाधिगतं, नच तस्य भोगसम्भवः "अनश्नन्नन्योऽभिचाकशीति" इतिश्रुतेः, * नचेहाऽन्यत्वं वास्तवमभिप्रेतमपि त्वनाद्यविद्यावच्छेदमात्रापेक्षं "तत्त्वमसि" इत्यसकृदैकात्म्यश्रुतेः, नचास्याप्यनुसन्धातृत्वादेव भोगो जीववदिति साम्प्रतम्, आगमापवाधितानुमानस्यानुत्थानाद्, नरशिरः-

---

टी०—"भोगे,ति, भोगः प्रयोजको यस्यासौ भोगप्रयोजकस्तस्यभावस्तत्त्वं, तस्मात्, तथाच प्रयोजकभोगाभावे तत्प्रयोज्यवेदनाहेतुपरिहारोपि व्यावर्त्तत इति भावः। अनुसन्धातुर्भोगाभावं दर्शयितुं तस्य ब्रह्मस्वरूपतामाह—"इहहिब्रह्मैव"इति, एषां जीवानां पारमार्थिकं रूपं ब्रह्मैवानुसन्धातृ श्रुतिशिरःशतसमधिगतमित्यन्वयः। तथापि कथं भोगाभाव इति तत्राह— "नच" इति। ननु सोयं शान्ते कर्मणि वेतालोदयो, ऽभेदं साधयितुं प्रवृत्तेन भेदश्रुतेरुदाहृतत्वादित्यत आह— " नचेहान्यत्वम् " इति। भेदश्रुतिविरोधादभेदश्रुतेरेव कस्मान्नबाध इत्यत आह—"असकृद्" इति। 'असकृद्' इत्यभ्यासप्रदर्शनमुपक्रमादितात्पर्य्यलिङ्गान्तरोपलक्षणपरं, तेन षड्विधतात्पर्य्यलिङ्गैरभेदश्रुतेस्तत्परत्वादेव तद्विरोधे भेदश्रुतिरेव बाध्यत इति भावः।

---

* एतेन ( भोक्तृजीवाभिन्नत्वेन ब्रह्मणोऽपि भोक्तृत्वापत्ति ) इत्यपि निरस्त वेदितव्यम्-केचित्तु- बिम्बप्रतिबिम्बवद् व्यवस्थोपपत्तेर्न ब्रह्मणो भोक्तृत्वमित्याहुः-।

कपालशुद्धतानुमानवद्, आगमस्य तु सिद्धेपि तत्त्वे प्रमाणभावमुपपादयिष्यामः ।

कथं च सुखादीनां सहानवस्थानविरोधोऽधिगतः, अधिकरणभेदनियमोपलम्भाद्, इति चेत्, तत्किमिदानीं सिद्धोऽधिकरणभेदःप्राग् व्यवस्थायाः, तथाच कृतमनेन व्यवस्थानुपपत्त्युपन्यासदुर्व्यसनेन, कुतश्चायं प्रमाणात्प्राक्सिद्धः, न तावत्प्रत्यक्षात्, परपुरुषस्य प्रत्यक्षगोचरभावानभ्युपगमाद्, नाप्युन्नीतानुमानकलापात्, तस्याग्रे निराकरिष्यमाणत्वाद्,नचास्ति सम्भवः प्रमाणान्तरस्य ।

---

अनुमानवद्= नरकपालं शुद्धं प्राण्यङ्गत्वात् शङ्खवद, इत्यनुमानं 'नारं * स्पृष्ट्वाऽस्थि सस्नेहं सचैलो जलमाविशेद्' इतिस्मृत्यनुमितागमेन बाधितविषयं यथा नोदेति तद्वदित्यर्थः । ननु "तत्त्वमसि" इत्याद्यागमानां कार्य्य एवार्थे प्रामाण्यान्न सिद्धे ब्रह्मणि प्रामाण्यम, इति तत्राह—"आगमस्यतु" इति, ( सिद्धार्थप्रामाण्यवादे ) इति शेषः ।

ग्राहकप्रमाणाभावादपि सहानवस्थानं न संभवतीत्याह— "कथं च" इति, सिद्धत्वे दोषमाह—"तथाच" इति, मानान्तरतस्तत्सिद्धिरपि नास्तीत्याह—"कुतश्च" इति, न्यूनतापरिहारार्थमाह—"नचास्ति" इति ।

---

* नार = नरकलेवरसबन्धि ।

मू०—अथ वध्यघातकभावो विरोधः, तत्रापि नाजात एकोऽन्यं हन्ति नाप्यन्याधारं, तत्रैकाधारयोर्वध्यघातकभावे कथमसावाधारभेदं गमयेत्, अथ भावाभावात्मता विरोधः, तथा च सुखादय इति, नैषोऽप्यधिकरणभेदापादनायालम्, एकत्रैव गगने विहगतदभावयोरुपलम्भाद्, अथ काल्पनिकप्रदेशभेदाददोषः, स न प्रकृते दण्डवारितः ।

एतेनेदमपिपरास्तं यथाहुरेके— " जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च, पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्च " इति ।

किंच जननादयः क्षेत्रसमवायिनः क्षेत्रज्ञस्य भेदः

---

टी०—द्वितीयं पक्षमुत्थाप्य निराकरोति " अथ " इति ।

उक्तन्यायं साङ्ख्यपक्षेप्यतिदिशति " एतेन " इति, क्वचिज्जन्म, क्वचिन्मरणं, क्वचिच्चक्षुरादीनां सत्त्वमन्यत्र चासत्त्वमिति नियमः, । अयुगपत्प्रवृत्ति =जननादीनां भिन्नकालत्वं । त्रयो गुणाः=सत्त्वरजस्तमांसि, त्रिगुणा एव त्रैगुण्यं, तस्य विपर्य्ययः=कश्चित्सात्त्विकः कश्चिद्राजसः कश्चित्तामस इति ।

' विप्रतिपन्ना जीवा बहवो विरुद्धधर्माक्रान्तत्वाद् ' इत्यनुमानं चेत् तत्राह- " किञ्च " इति । तत्रापि जननादीनां भिन्नाधिकरणत्वप्रतिनियमः, किं वा भेदमात्रम्, उत विरोध इति विकल्पानां तद्दूषणानां तुल्यत्वाद् इदमप्यपास्तमित्यर्थः ।

मू०—प्रसाध्यत इति किं केन सङ्गतम्,* अपक्षधर्मत्वाद् हेतोः, तत्सिद्धं न व्यवस्थानुपपत्तिर्भेदसाधिकेति ॥

यद्यप्यभाणि ( आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नानाऽश्रावणविशेषगुणाधिकरणत्वाद् यदुक्तसाधनं तदुक्तसाध्यं यथा घटादि ) इति, तदप्यचारु, हेतोरसिद्धत्वाद्, न खल्वात्मैकत्ववादिनो विशेषगुणाधिकरणतामात्मनोऽङ्गीकुर्वते येनायं हेतुः सिध्येत्,

नच वेद्यानां वेदनादीनां वेदितृगुणभावो युक्तः रू-

---

टी०—न केवलं प्रतिवादिनामनभ्युपगमादसिद्धिः, विपरीतप्रमाणसद्भावाच्चेत्याह– " नचवेद्यानाम् " इति। यद्वा 'आकाशं विशेषगुणाधिकरणविश्वन्यद् मेयत्वाद् घटवद् ' इत्यात्मनो विशेषगुणवत्त्वप्रसाधकमनुमानं सत्प्रतिपक्षतया दूषयति– " नच वेद्यानाम् " इति, " अस्थूलमनणु " इति निर्धर्मकत्वप्रतिपादकश्रुतिविरोधेनानुमानस्य कालात्ययापदिष्टत्वाद्।

आकाशं श्रोत्रेन्द्रियग्राह्यविशेषगुणाधिकरणविश्वन्यन्मेयत्वाद् घटवद् इत्याभाससमानयोगक्षेमत्वाच्चानुत्थानमेव यद्यपि तथापि प्रौढ्या सत्प्रतिपक्षत्वमुक्तवान्।

ज्ञानादयो न वेदितृधर्मा वेद्यत्वाद् रूपवद्, इति प्रयोगः, नच वेदितृधर्माणामप्रसिद्ध्या तत्प्रतियोगिकनिषेधासिद्धावप्रसिद्धविशेषणता मायावादिनः, परप्रसिद्धिमात्रेणापि तदुपपत्तेः, अवेदितृधर्मा इति साध्यनिर्देशेन वाऽप्रसिद्धविशेषणता परिहरणीया, नच विवादा-

* जन्म चात्रापूर्वदेहेन्द्रियाद्यभिसबन्ध', मरण चोपात्तदेहादित्याग, इत्याश्रयणे तु सङ्गतमेव।

पादिषु तथाभावानुपलम्भाद्, नचानित्यगुणं नित्यं पश्यामो येनानित्या एव वेदनादयो नित्यस्य वेदितुर्गुणा भवेयुः,

---

ध्यासिता अनन्तःकरणधर्मो वेद्यत्वाद् रूपादिवद्, इति साम्प्रतं, "ह्रीर्धीर्भीर्" इत्येतत्सर्वं मन एवेति श्रुतिविरोधेन कालात्ययापदिष्टत्वाद्, नच मनोनिमित्तकत्वान्मन एवेतिनिर्देशः, लोके निमित्तकारणकार्य्ययोः कुलालघटयोः सामानाधिकरण्यस्यादर्शनाद्-अत्र च तद्दर्शनेनोपादानपरत्वस्य निश्चितत्वाद्, मनो विशेषगुणवद् मूर्तत्वाद्, इति प्रयोगसम्भवाच्चेति भावः।

गुणराहित्ये प्रमाणान्तरमाह- "नचानित्यगुणंनित्यम्" इति। आत्मा, अनित्यगुणरहितः. नित्यत्वाद्, नचाद्रव्यत्वमुपाधिः, यद्द्रव्यं तदनित्यगुणवद्, इतिव्यतिरेकेऽनित्यत्वस्यैवोपाधित्वाद्, नच परमाण्वादिषु साध्याव्याप्तिः, तेषामपिनित्यत्वाऽसंप्रतिपत्तेः, नच* समव्याप्त्यभावो दोषः, विषमव्याप्तिकस्याप्युपाधित्वादिति भावः।

---

* यदनित्यगुणवत् तदनित्य यथाघटादिकमित्येवमनित्यत्वोपाधे साध्यव्यापकत्वसम्भवेपि यदनित्य तदनित्यगुणवदितिव्याप्तेर्गुणादौ व्यभिचारेणासम्भवात्साध्यस्योपाधिव्यापकत्वाभावेन नानित्यत्वस्योपाधित्व सम्भवति, साध्योपाध्योः परस्परव्याप्यव्यापकभावस्थल एवोपाधित्वस्य स्वीकारादित्याशङ्कयाह- " नच समव्याप्त्यभावो दोष " इति, तत्र हेतुमाह- " विषमव्याप्तिकस्य " इति।

" एकसाध्याविनाभावे मिथ सबन्धशून्ययोः, साध्याभावाविनाभावी स उपाधिर्यदत्यय " इत्युदयनाचार्य्योक्तोपाधिलक्षणस्य समासमव्याप्तिकयोस्तुल्यत्वादिति भाव,

अपेत बाध्य-स्वव्यावृत्त्या साध्यस्य पक्षाद्व्यावृत्त्या व्यापकप्रमित्युत्पत्तिप्रतिबन्धो वा, हेतोरपहृतसाध्यतया विपक्षभूते पक्षे वर्तमानस्यानैकान्तिकतापादन वोपाधे कृत्य, तच्च समव्याप्तिवद्विषमव्याप्तिरपि शक्नोति सम्पादयितुमग्निमत्त्वमिव निवर्तमान धूमवत्त्व व्यावर्तयितुम्, अतो विषमव्याप्तिरपि सम्भवत्येवोपाधि., यथाहु -"पक्षादुपाधिव्यावृत्त्या साध्यस्य विनिवर्तनम्, उपाधिफलमस्मिश्च समवद्विषमः क्षम" इति,-नचैतददृष्टचर, "समवाय समवेत सबन्धत्वात् सयोगवद्" इति प्रयोगे सबन्धत्वे सति समवेतत्वे कार्य्यत्वमुपाधिरित्येव विषमव्यापकोपाधिरुद्योतकराचार्य्यैरङ्गीकारात्, यत्र कार्य्यत्व तत्र सबन्धत्व सति समवेतत्वमिति व्याप्तेर्गुणादौ व्यभिचारेणासम्भवादत्र विषमव्याप्तिकता ज्ञेया।

मू०—नचानित्यगुणस्यापि नभसो नित्यतेति साम्प्रतं, तस्याऽप्यनुमानागमाभ्यामनित्यत्वाध्यवसायात्, तथाहि-विवादास्पदमनित्यं जडत्वाद् यदित्थं तत्तथा यथा कुम्भादि, तथाचामुमेवार्थमप्रत्यूहमाह श्रुतिः "आत्मन आकाशः सम्भूत" इति, विस्तरतश्चैतद्विपञ्चितं वियदधिकरण* इत्युपरम्यत इति,

एतेन परमाण्वादयोपि व्याख्याताः ।

---

टी०-आकाशेऽनैकान्तिकत्वमाशङ्क्य परिहरति- "नचानित्यगुणस्य" इति, श्रुतिः=श्रुतार्थापत्तिः, न पुनःश्रुतिरेव, तस्मिन् वाक्येऽनित्यत्वाप्रतिपादनाद्, उत्पत्तेरेव प्रतिपादितत्वात्, तथाचानित्यत्वमनुपपत्त्या † ऽवसीयत इत्यवगन्तव्यम्-

नन्वाकाशोत्पत्तिश्रुतिर्गौणीति ‡ तत्राह- "विस्तरत" § इति। नित्यत्वहेतोः परमाण्वादिष्वनैकान्तिकत्वमाशङ्क्य परिहरति- "एतेन" इति ।

---

* शारीरकीयद्वितीयाध्यायतृतीयपादादिमाधिकरण इत्यर्थः ॥

† अनुपपत्त्या=आकाशोत्पत्तिश्रुत्यन्यथानुपपत्त्याऽनित्यत्वमवसीयते, ।

‡ आकाश नोत्पद्यते कारणसामग्र्यसम्भवादित्यादियुक्तिविरोधेनाकाशोत्पत्तिश्रुति 'आकाश कुरु' इतिलौकिकप्रयोगवद्गौणीत्यर्थः ।

§ आकाशस्याकार्यत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपरुध्येत, यो यो विभागः स सर्वो विकारव्याप्य इति लौकिकन्यायश्चविरुध्येतेत्येव विस्तरतस्तत्र निरूपितमिति भावः ।

न च सामग्र्यसम्भवो, ध्वंसस्यकारणत्रयाभावेपि जन्यत्वाभ्युपगमाद्-नच भावविषयोय नियम इति वाच्य शुक्तिरजतादेर्भावस्यापि द्रव्यद्वयसंयोगरूपासमवायिकारण विनैवोत्पत्तिदर्शनाद्, इति सङ्क्षेपः ।

मू०—यदपीदमवादि—'आत्मोक्तविधया नाना शरीरात्मसम्बन्धसम्बन्धित्वाच्छरीरवद्' इति, तदपि न पेशलं, सत्तादिनानैकान्त्याद्, अथोक्तविधसम्बन्धाधारत्वं हेतुः, तथाप्यन्यथासिद्धः, कायादेरपि कार्य्यताधीनत्वादुक्तविधया नानात्वस्य, *

अवश्याऽऽश्रयणीयं चैतद् अन्यथाऽऽकाशादेरपि तत्सम्बन्धाधारत्वादनेकताया दुष्परिहरत्वाद् ।

---

टी०-शरीरात्मनोर्यः सम्बन्धस्तत्संसर्गित्वादिति वा हेत्वर्थः किं वा तदाधारत्वादिति विकल्पाद्यं दूषयति - "तदपि न पेशलम्" इति, शरीरात्मनोः सम्बन्धः संयोगस्तत्संसर्गिणी च सत्तागुणत्वे न च तयोर्द्रव्यत्वव्यतिरिक्तापरजात्याधारत्वं सामान्यस्य निःसामान्यत्वाद्, अतस्तत्र व्यभिचार इत्यर्थः । द्वितीयं पक्षमुत्थाप्य सोपाधिकत्वेन दूषयति- "अथ" इति । नच परमाण्वादिषूक्तजात्याधारत्वसम्भवेपि कार्य्यत्वाभावेन साध्याऽव्याप्तिः, तेषामनित्यत्वोपपादनाद्, नापि प्रध्वंसे साध्याव्याप्तिः, भावरूपत्वे सतीतिविशेषणस्य विवक्षितत्वात्, प्रागभावोपलक्षितसत्तायोगित्वस्य वा † परीक्षकाभिमतकार्य्यत्वस्याभ्युपगमादिति भावः ।

कार्यत्वस्य विपक्षबाधकतर्केणानुपाधित्वमपाकरोति- "अवश्याऽऽश्रयणीयं च" इति, आकाशादिकमुक्तविधया नाना शरीराकाशसम्बन्धित्वाद्. इतिप्रयोगे भवतापि कार्य्यत्वस्यैवोपाधिता वर्णनीया सा च प्रकृतेपि समानैवेत्यर्थ ॥

---

* दृष्टान्तीभूतकायादेरपि नानात्वस्य कार्य्यत्वाधीनत्वाद्, इत्युक्त्याऽत्रानुमाने कार्य्यत्वमुपाधिरिति सूचितम् ॥

† एव च ध्वंसस्य सत्तायोगित्वाभावान्न कार्य्यत्वमिति तत्त्वम् ।

मू०—यदप्यगादि—'विवादपदानि शरीराणि स्वसंख्यासङ्ख्येयात्मभिरात्मवन्ति शरीरत्वात् सम्प्रतिपन्नशरीरवद्' इति ।

तदपि न विचक्षणपरीक्षाक्षममीक्षामहे, सिद्धसाधनत्वात्, तथाहि यान्येवशरीराण्येकत्वाधिकरणानि तान्येव परस्परापेक्षाणि परसङ्ख्याधिकरणभावं भजन्ते, तथाचामीषामेकत्वसङ्ख्यापि स्वकीया, तत्संख्येयाऽऽत्मवत्त्वं च परेषां सिद्धमिति कथं न सिद्धसाधनता, * अथ स्वसमवेतसकलसङ्ख्यासङ्ख्येयात्मवत्ता साध्या तथापि क्रमभाव्येकपुरुषाधिष्ठेयाऽनेकशरीरैरनैकान्तः । अथ वर्तमानशरीरत्वादिति हेतुः, तथापि वर्तमानमृतशरीरैरनेकान्तः ।

अथाधिष्ठानाधिष्ठेयभावस्याऽसाध्यत्वाद् अशेषानैकान्तिकतापरिहाराय वा 'जीवच्छरीरत्वाद्' इतिविशेषणाददोष इति ।

---

स्वसमवेतयत्किंचित्संख्यासङ्ख्येयात्मत्वमात्रं साध्यम् उत स्वसमवेतसकलसङ्ख्यासङ्ख्येयात्मत्वमिति विकल्प्य क्रमेणैव दूषयति—"तदपि" इति ।

शवशरीरैरनैकान्तिकतापरिहारमाशङ्कते—"अथाधिष्ठाने"ति । शवशरीरेपि स्वसमवेतसङ्ख्यासङ्ख्येयात्मत्वमस्त्येव शवशरीराणां मूर्तत्वेनात्मसंयोगित्वाद्, भवतु वात्माधिष्ठितत्वं साध्यं तथापि नानैकान्तिकता जीवच्छरीरत्वादिति हेतुस्वीकारादिति परिहारान्तरमाह—"अशेष" इति ।

---

* कल्पितसमसङ्ख्यात्वमाश्रयापि सिद्धसाधनता बोध्या ।

मू०—एवमपि भागासिद्धताप्रसङ्गः शुकशकुनिशशादादिशरीराणां विवादविषयाणामेवाजीववत्त्वाद्, अथ जीवच्छरीराणामेव पक्षीकरणम्, एवमपि स्वसमवेतसकलसङ्ख्यासङ्ख्येयात्मवत्तासिद्धेः साध्यविकलतादृष्टान्तस्य।

अपिचागमापबाधितविषयः सकलोयं हेतुकलापः, श्रूयते खलु- "एको देवः सर्वभूतेषु" इत्यादि, भवन्ति चात्र स्मृतयः-"एक एव हि भूतात्मा भूते भूते व्यवस्थितः, एकधा बहुधा चैव दृश्यते जलचन्द्रवद्" इत्यादिकाः, नचैतासां परमात्मैकतागोचरतैव न पुनर्जीवभेदापबाधसम्भव इति शङ्कितुमपि शक्यं, जलचन्द्रदृष्टान्तावष्ट

टी०—दूषयति -"एवमपि" इति । शवशरीराणामपि पूर्वं प्राणादिमत्त्वदशायामेकानेकाधिष्ठितत्वविवादाद् विवादपदेन च तेषामपि पक्षीकाराज् जीवच्छरीरत्वहेतोश्च तत्राभावाद् भागासिद्धतेत्यर्थः।

शुकशकुनिशशादादिपदैर्योगिनो गृह्यन्ते, तेषां च परकायप्रवेशेन तदीयानि शरीराणि विषयाः* तेषु च तदा न जीवच्छरीरत्वमस्तीति भागासिद्धतेति केचिद् ।

प्रत्येकमनुमानानां दूषणमभिधाय साधारणं दूषणमाह "अपिच" इति,। "जलचन्द्रदृष्टान्तावष्टम्भेन" इति, भूते भूत एकधा बहुधा व्यवस्थितो यो दृश्यते स एक एवेति प्रतिभासमानपुरुषभेदनिराकरणपरत्वप्रतीतेः, परमात्मनश्च प्रतिभूतं भेदेन प्रतिभासाभावान्न तद्भेदनिराकरणपरतेत्यर्थः,

(*) विवादविषयीभूतत्वेन तान्यपि पक्षान्तर्भूतानीत्यर्थः ।

मू०—भेन प्रतिभूतं प्रतिभासमानपुरुषभेदापाकरणपरतोपलम्भाद्, 'एक एव देवः सर्वभूतान्तरात्मा' इति च प्रतिभूतं पुरुषभेदापाकरणपरत्वस्य स्पष्टत्वात्, परमात्मनानात्वापाकरणपरतायां चाप्रसक्तप्रतिषेधप्रसङ्गात्, सत्यां च गतौ तस्याऽयोगाद्, नच परमात्मा

---

टी०—'एक एव इति—"*तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम्" इति न्यायाद् 'एकएव' इति च परमात्मन्येवकाराद् 'यः सर्वज्ञः सर्वभूतान्तरात्मा' इति जीवभेदानुवादेन 'स एक एव' इति परमात्मतावन्मात्रत्वविधानाज्जीवभेदापाकरणं स्पष्टमित्यर्थः। परमात्मभेदनिराकरणपरत्वे दूषणमाह– "परमात्मे" ति, लोकतः श्रुतितः परीक्षकसंमत्या वा परमात्मभेदाप्रसक्तेस्तन्निराकरणेऽप्रसक्तप्रतिषेध एव स्यादित्यर्थः। 'नान्तरिक्षे न† दिवि' इत्यादावप्रसक्तप्रतिषेधोपि दृश्यत इति तत्राह "सत्यां च गतौ" इति, अनधिगतार्थबोधकत्वे संभवति नित्यानुवादकत्वमयुक्तमित्यर्थः। परमात्मनो भेदनिराकरणपरत्वेपि जीवभेदनिराकरणपरत्वं सिद्ध्यति जीवपरमात्मनोरभेदादित्याह "नच" इति, यद्वा प्रतिशरीरं जीवभेदनिराकरणे तेषामेवैकत्वं नतु परमात्मन इति शङ्कां परिहरति— "नच" इति, अधस्ताद्= अन्यत्वं नच वास्तवम्' इत्यत्रावेदितमित्यर्थः॥

---

* तद्वृत्त = तच्छब्दनिष्पन्नरूप. उपादेय = तात्पर्यविषयीभूतत्वेन विधेयतया ग्राह्यम्।

† अग्निश्चेतव्य—इतिशेषः।

मू०—जीवात्मनस्तत्त्वतो व्यतिरिच्यत इत्यापादितमधस्ताद् । एवं चादित्यवर्णाद्यागमदृष्टान्तः प्रत्यूढः ।

अपि चाणुपरिमाणपक्षे निखिलशरीरव्यापिवेदनानुसन्धानानुपपत्तेः, शरीरपरिमाणत्वे तु सावयवतयाऽनित्यतापत्तेश्च परममहत्त्वे पुरुषस्यावश्याश्रयणीये तत्तत्कर्णशष्कुलीमण्डलावच्छिन्नस्य नभसस्तत्र तत्र श्रोत्रभाववत्*

---

टी०-"एवं च" इति, उक्तरीत्योपन्यस्तप्रमाणानामाभासीकृतत्वाच्च तद्विरोधेन श्रुतेरन्यपरत्वं प्रकृतेपि कल्पनीयम् 'आदित्यवर्णं तमसः परस्ताद्' इत्यस्य तु परविद्याप्रकरणस्थत्वेन रूपवत्त्वप्रतिपादनासामर्थ्याद् आदित्यवर्णं = प्रकाशरूपम्, इत्यपि योजयितुं शक्यत्वाद् अरूपानुमानमेव तत्र प्रबलमिति वैषम्यमित्यर्थः ॥

कल्पनागौरवप्रसङ्गादप्यात्मभेदो निराकरणीय इति दर्शयितुं पक्षान्तरनिराकरणेनात्मनः सर्वगतत्वं साधयति "अपि च" इति, भेदे कल्पनागौरवमाह—"तत्तद्" इति ॥

प्रतीतिसिद्धत्वाद् भेदस्य तत्कल्पनैव नास्ति कुतस्तरां गौरवमिति प्रभाकरमतमुत्थापयति "यत्पुनर्" इत्यादिना "तद्-

---

* यथा स्वकर्णपुटपरिच्छिन्नगगने नाशोपलम्भे भागान्तरवर्त्तिवियति नाशानुपलम्भ एवमत्राप्यवच्छेदकभेदात्सुखदुःखाद्युपलम्भानुपलम्भौ, नचात्मभेदे कर्णपुटाना तत्तदीयत्वनियामकवदेकात्मवादे सर्वदेहाना स्वीयत्वेन तत्तदीयत्वनियमाभावेन व्यवस्थानुपपत्तिरिति वाच्य, तवात्मभेदेनेवावच्छेदकाज्ञानादिभेदेन मम व्यवस्थोपपत्तेः,-अभेद बोध्य- शरीररूपोपाधिभेदस्याननुसन्धानप्रयोजकत्वेऽभ्युपगम्यमाने बाल्यानुभूतस्य यौवने, जातिस्मरेण पूर्वजन्मानुभूतस्य, योगिना नानाशरीरानुभूतस्य च स्मरण न स्यात्ततोऽन्त करणरूपोपाधिभेदमज्ञानभेद वा ऽननुसन्धानप्रयोजकमास्थेय नेतरत्, नच चक्षुरादिकरणभेदेप्यनुसन्धानदर्शनान्नान्तःकरणभेदोऽननुसन्धानप्रयोजक इति वाच्यम -अन्यकरणभेदेन तथादर्शनेप्यन्तः करणभेदस्य तदैक्याध्यासापन्न आत्मन्यननुसन्धानप्रयोजकत्वस्य कल्पनादिति दिग्—

मू०—तत्तद्भोगायतनाद्यवच्छेदलब्धजीवभावभेदस्य तत्र तत्र भोगोपपत्तौ किमनेकात्मकल्पनादुर्व्यसनेन ।

यत्पुनरिदं कैश्चिदुच्यते—'यस्तावत्प्रतिपत्ता परायतनस्वामिनं स्वप्रयत्नपूर्विकात्मीयशरीरसमवेतचेष्टासमानचेष्टादर्शनादनुमानतः परिछिनत्ति नासौ† तं ग्राहकैकरसं स्वात्मभूततया किन्तु ग्राह्यकोटिनिविष्टमनात्मभूतमेव, तेन प्रतीतिसिद्धत्वाद्भेदस्य 'अलमात्मभेदाभ्युपगमेन'

---

टी०-प्यसमीक्षिताभिधानम्" इत्यन्तेन ग्रन्थेन । 'परायतनस्वामिनं=परशरीरस्वामिनम्',अनुमानतः परिछिनत्तीत्यन्वय ,अनुमीयत इत्यनुमानं=लिङ्गम्, अनुमितिपरत्वे पुनस्तद्व्यतिरिक्तव्यापकपरिच्छेदस्याभावादौपचारिक एव प्रयोगः स्यादिति । लिङ्गमेवदर्शयति "स्वप्रयत्ने"ति । स्वप्रयत्नपूर्विका याऽऽत्मीयशरीरसमवेतचेष्टा तत्समानचेष्टायाः परशरीरे दर्शनादिति यावद्, 'इयं शरीरचेष्टा प्रयत्नपूर्विका स्वतन्त्रचेष्टात्वात् मदीयचेष्टावद्' इत्यनुमानेनात्माऽनुमीयत इत्यर्थः । भवत्वात्मानुमानं तथापि कथं प्रतीतिसिद्धो भेद इत्यत आह "नासौ" इति, ग्राहकैकरसं=ग्राहकस्वभावं, तदेकस्वभावत्वेन ग्राह्यतां निवर्तयति । (कल्पनागौरवप्रसङ्गादलमात्मभेदाभ्युपगमेन) इति यन्मायावादिनो मतं तदकिंचित्करं भेदस्य प्रतीतिसिद्धत्वादित्यर्थः ।

नन्वात्मत्वादनुमीयमानस्यापि ग्राहकत्वेनैवावगमः किन्नस्यादि-

---

† असौ=अनुमाता, तं स्वात्मभूततया न परिच्छिनत्ति किन्तु स्वात्मभिन्नतयेति भाव ।

मू०—इति वचनमकिंचित्करं, नहि परायतनस्वामिन्येवमनुमानमुदेतुमलं यथा मम शरीरे मदीयप्रयत्नपूर्विका चेष्टा तथा परशरीरेपि मत्प्रयत्ननिबन्धनैवेति, प्रत्यक्षविरोधात्—प्रत्यक्षेण हि स्वात्मनि समवयन्* प्रयत्न उपलभ्यते, न हि परशरीरे चेष्टानुगुणः प्रयत्नः स्वात्मनि पुरुषाणां प्रत्यक्षो भवती,ति पर एव प्रयतिता परशरीरेऽनुमीयत इति ।

तदप्यसमीक्षिताभिधानं—काल्पनिकपुरुषप्रदेशभेदादेव ग्राह्यग्राहकभावव्यवस्थितिवत् प्रयत्नोपलम्भानुपलम्भयोरुपपत्तौ वास्तवपुरुषभेदपरिकल्पनस्याप्रामाणिकत्वाद् । यथा खलु स्वकर्णपुटपरिच्छिन्ननभोभागसमवायिशब्दो-

---

टी०—त्यत आह "नहिपरायतनस्वामिनि" इति । प्रयत्नत्वादेवेतरप्रयत्नोपि प्रत्यक्षः किन्न स्यादित्यत आह "नहि परशरीरे"ति, दूषयति "तदपि" इति । काल्पनिकपुरुषप्रदेशवशादेव यथा ग्राह्यग्राहकभावव्यवस्थितिस्तथाप्रयत्नोपलम्भानुपलम्भयोरप्युपपत्तिः, ग्राहकनिष्ठप्रयत्नस्य प्रत्यक्षेणोपलम्भो ग्राह्यनिष्ठप्रयत्नस्यानुमानतः, एवं तयोरुपपत्तौ वास्तवपुरुषभेदो न कल्पनीय इत्यर्थः ।

प्रदेशभेदवशादुपलम्भानुपलम्भयोरुपपत्तावुदाहरणमाह "यथा खलु" इति ॥

---

* समवयन = समवायसम्बन्धेन वर्तमानः ।

मू०—पलम्भेपि भागान्तरपरिवर्तिनादानुपलम्भस्तथा प्रयत्नोपलम्भाऽनुपलम्भव्यवस्थितिरपि परिकल्पितपुरुषप्रदेशविशेषवशादेव किन्नाश्रीयते ।

तत्सिद्धमेतन्न प्रतिक्षेत्रं क्षेत्रज्ञभेदः प्रमाणपदवीमध्यास्त इति ।

विपर्य्यये तु श्रुतिस्मृतीतिहासपुराणवाक्यान्यनेकानि प्रमाणभावं भजन्ते तान्यपि दर्शितान्येव लेशतः। तथाचानुमानमपि—विवादपदानि शरीराणि उभयवाद्यविवादास्पदेनैवात्मनाधिष्ठितानि जीवच्छरीरत्वाद् यदुक्तसाधनं तदुक्तसाध्यं यथोभयवाद्यविवादास्पदं शरीरं तथा चेमानि तस्मादुक्तसाध्यानि इति ।

यः पुनः परमेश्वरस्याप्यखिलकार्य्यकारणाधिण्ठातृ-

---

टी०-विपर्य्ययेतु=आत्मैकत्वे तु ।

यद्यप्यात्मैकत्वमागमैकगम्यमेवेति रहस्यं तथापि कस्यचित् तर्ककर्कशधियो नानुमानं विना मनः प्रीणातीति तत्प्रीणनायाऽनुमानमारचयति "तथा चानुमानम्" इति। प्रतिवादिशरीरातिरिक्तानि सर्वाण्येव जीवच्छरीराणि विवादपदान्युच्यन्ते ।

दृष्टान्तदार्ष्टान्तिकभावकृतभेदप्रतीतिवाधपरिहाराय 'एवकारः।

ईश्वराङ्गीकारपक्षे प्रतिवादिशरीरस्य जीवेश्वराभ्यामधिष्ठितत्वेन साध्यविकलो दृष्टान्त इत्याशङ्क्य प्रयोगान्तरमाह "यः पुनर्" इति ।

मू०—तामङ्गीकुर्वाणः साध्यविकलतां दृष्टान्तस्याचष्टे तं प्रति अविवादास्पदस्यैव भोगायतनानीति साधनीयम् ।

यद्वा आत्मा द्रव्यत्वव्यतिरिक्तापरजात्याधारभेदेन नाना न भवति नित्यत्वाद्विभुत्वान्निरवयवद्रव्यत्वाद्वा गगनवद् इति परप्रसिद्धदृष्टान्तेन परेषामनिष्टापत्तिः, नच परमाणूनामपि निरवयवादिसंप्रतिपत्तिर्येनानैकान्त, इत्यलमतितर्करसावसेकेन ॥

टी०—"गगनवद्" इति । ननु नित्यत्वस्य गगने मायावादिभिरनङ्गीकारात् साधनविकलो दृष्टान्तः, विभुत्वस्य सर्वमूर्तसंयोगलक्षणस्यात्मनि निर्धर्मेऽसंभवात्स्वरूपाऽसिद्धिरिति गङ्गापुरीया इति चेन्न परसंमतहेतुद्वयाङ्गीकारेण परं प्रत्यनिष्टापादनाद्, नचैतददृष्टचरं (चैत्तानां* च न चिद्धर्मत्वं नाणूनां चाजत्वम्) इत्यादीष्टसिद्धिकारप्रयोगेषु चिद्धर्माणामणूनां च धर्मिणां परसंमतानामेव स्वीकारोपलम्भाद् ।

परमाण्वादिष्वनैकान्तिकतामाशङ्क्य परिहरति "न च परमाणूनाम्" इति ॥

"इति क्षेत्रज्ञभेदोच्छेदवादः"

* चैत्तपद सुगतसङ्केतेन सुखादिपरम् ।

मू०—प्रत्यक्षेपि प्रतिक्षेत्रं भेदः पुंसां प्रमाणतः,
प्रत्येतव्यगते भेदे* न प्रमेत्यधुनोच्यते ॥१॥

इह खलु नीलपीतभेदाध्यवसायस्य प्रत्यक्षादिप्रमाणाधीनतामङ्गीकुर्वाणाः केचिद् भेदनिराकरणपराणामागमवचसां गौणार्थतामङ्गीकुर्वते, तत्रेदं पर्य्यनुयुज्यते-

---

टी०—वृत्तकथनपूर्वकमनन्तरवादस्य पातनिकामाह -"प्रत्यक्षेपि" इति, ॥

यद्वा प्राचीनवादेनैवात्माद्वैतस्यसिद्धेः किमपरमवशिष्यते यदर्थं वादान्तरारम्भ इति शङ्का पराकरोति "प्रत्यक्षेपि" इति

अथ वा 'सुखाद्वितीयवपुष' इत्यत्र सजातीयविजातीयस्वगतनानात्वराहित्यमुक्तं, तत्र प्रथमवादेन सजातीयनानात्वाभावं प्रसाध्य विजातीयनानात्वमपाकरोति - "प्रत्यक्षेपि" इति, चिण्वदिटि लुङि प्रयोगः - प्रत्यक्षेपि = प्रतिक्षिप्तः - निराकृत इति यावद् ।

प्रत्येतव्यभेदं निराकर्तुं भूमिकामारचयाति "इहखलु" इति, । ननु "एकमेवाद्वितीयं, 'नेह नानास्ति किञ्चन" इति समस्तभेदस्य श्रुत्या स्पष्टमेव निराकृतत्वात्किमर्थं वादारम्भ इति शङ्कां वारयति "इहखलु" इति, । ग्रावप्लवनश्रुतिवत्प्रत्यक्षविरोधे†नोपचरितार्थ-

---

* प्रतीतिकर्तृप्रमातृगत भेद प्रत्याख्याय प्रतीतिकर्मानात्मगतं भेद प्रत्याख्यातुमुपक्रमते-"प्रत्येव्यगते· भेद" इति,-प्रत्येतव्यम् = ज्ञेय, यथा ज्ञातृगते भेदे न कोपि यथार्थानुभव इत्यभिहितमेव ज्ञेयगते भेदेपि न कोपि यथार्थानुभव इति साम्प्रतमभिधीयत इत्यर्थ, "प्रत्येतव्यगतो भेदो न प्रमा (प्रमाणसिद्धः) इति पाठन्तु सम्यञ्च प्रतिपद्ये,-

† प्रत्यक्षविरोधेनोपचरितार्थत्वाशङ्कायां = यथा खल्वस्मिन्पत्तनेऽयमेक एवाद्वितीय पुरुष इत्यत्र शौर्यौदार्यातिशयादिमानन्यः सजातीय· पुरुषः प्रतिषिध्यते न

मू०—कथन्तावत्प्रत्यक्षेण भेदाध्यवसायः, तत्किं भेदमेव गोचरयेत्* किं वा वस्त्वपि, यदि वस्त्वपि तदा भेदपूर्वकं वा तद् गोचरयेत्, तत्पूर्वकं वा भेदम्, अपर्य्यायेण वोभयं, न तावदाद्यः कल्पः† अनाकलितव्यवच्छेद्य व्यवच्छेदावधे र्व्यतिरेकविज्ञानानुपलम्भाद् ‡ नाप्यतएव वस्तुग्रहेपि

---

टी०—रेवाशङ्कायां तत्परिहारायायमुपक्रम्यत इत्यर्थः।

व्यवच्छेद्यः=धर्मी, व्यवच्छेदावधिः=प्रतियोगी, तावनाकलितौ येन तस्येतियावद्, व्यतिरेकज्ञानं='भेदज्ञानं,।'किंवा वस्त्वपि' इति द्वितीयविकल्पे भेदपूर्वको वस्तुग्रह इति प्रथमं पक्ष दूषयति-"नापि" इति, 'अतएव' इतिप्रथमपक्षनिराकरणहेतोः परामर्शः। द्वितीयं दूषयति "नापितत्पूर्वक" इति,।

---

तदितरत्समस्त वस्तुजात, तत्कस्यहेतोस्तस्य तस्य वस्तुनस्तत्तत्प्रमाणोपनीततयाऽशक्यनिषेधत्वात् तद्वदिहापि समस्तमध्यक्षादिमानोपनीत वस्तु निषेद्धुमशक्नुवाना ऽद्वैतश्रुतिस्तत्सजातीय ब्रह्मान्तर निषेधतीत्येवमुपचरितार्थत्वसम्भावनायामित्यर्थः। एव 'नेहनानास्ति' इतिवाक्यमपि इहपदावमृष्टे प्रस्तुते ब्रह्मणि नानात्व निषेधति ब्रह्म न नाना किन्त्वेकमिति न तदन्यत्किञ्चिदिति बोध्यम्।

* कि वस्त्वेव गोचरयेद् इति विकल्पस्तु प्रतिवाद्यनर्थबीजमिति परित्यक्तः।

† प्रथमविकल्पे प्रथमः=कि भेदमेवगोचरयेदित्येवमाकार, इत्यर्थ।

‡ कारणीभूतधर्मिप्रतियोगिवस्तुप्रतिपत्तिमन्तरेण कार्य्यभूतभेदप्रतिपत्तेरसम्भवादिति भावः।

मू०—भेदपूर्वकस्तद्ग्रहः, नापि तत्पूर्वको वा भेदग्रह इति युक्तं, क्षणभङ्गिन्या वित्तेर्व्यापारक्रमानुपपत्तेः *

येप्याहुर्न वयमिह पूर्वापरभागविकलकालकलावस्थितिलक्षणां क्षणिकतामाचक्ष्महे बौद्धा इव बुद्धेर,पित्वाशुतरविनाशितालक्षणाऽस्यां द्वित्रिक्षणावस्थायिन्यामास्थीयत† इति, न तन्मतेपि जननातिरिक्तव्यापारसम्भवो वित्तेः ।

ननु जननातिरिक्तव्यापारदर्शनान्नयनादिकारकाणां भवितव्यममुष्या अपि व्यतिरिक्तेनैव व्यापारेण, नच

---

टी०—वित्तेस्त्रिक्षणावस्थायित्वाद् व्यापारक्रमः संभवतीति शङ्कते "येप्याहुः" इति, कालस्य कला कालकला, पूर्वापरभागविकला चासौ कालकला पूर्वापरभागविकलकालकला, तस्यामवस्थितिलक्षणा, वस्तुप्रागभावेन सहानवस्थितित्वे सति तन्निवृत्त्यनन्तरमवस्थिता कालकला, तत्रावस्थाने स्वोत्पत्त्यनन्तरक्षणध्वंसप्रतियोगिता लक्षणा क्षणिकता फलति, सा चास्माभिर्न स्वीक्रियत इत्यर्थः ॥

कारकत्वेन जननातिरिक्तव्यापारवत्त्वं चक्षुरादाविवेति शङ्कते-"ननु" इति, जन्मनो व्यापारत्वासम्भवादपि तदतिरिक्तव्यापारेण भवितव्यमित्याह-"नच" इति, 'व्यापारवत्सम-

---

* शब्दबुद्धिकर्मणां विरम्य व्यापाराभावस्य तत्र तत्र तान्त्रिकैरभ्युपेतत्वादिति भाव, शब्द खल्वेकं बोधमुत्पाद्योपरतव्यापारः सन्न शाब्दबोधान्तर जनयति, तथा बुद्धिरप्येकस्मिन्नर्थे ज्ञातता सस्कारं वा जनयित्वा न ज्ञाततान्तर संस्कारान्तर वोत्पादयति, तथा कर्माप्येकत्र विभागमुत्पाद्य न विभागान्तरजनक भवतीति तत्त्वम ।

† द्वित्रिक्षणावस्थायिन्यामस्मा बुद्धावाशुतरविनाशिता लक्षणा क्षणिकतास्माभिरास्थीयते न बौद्धैरिव स्वोत्पत्त्यनन्तरक्षणध्वंसप्रतियोगिता लक्षणा क्षणिकतापेयत इत्यर्थ ।

मू०—जननं व्यापारः सम्भवति, तद्धि जातस्य भवेद् अजातस्य वा, नतावज्जातस्य, तस्य जन्मासम्भवाद्, नो खलु जातं जन्मना युज्यते, नाप्यजातस्य जन्म व्यापारः, व्यापारवत्समवेतो हि सः, नचासन्नाश्रयः, समसमययोरेवाश्रयाश्रयिभावनियमोपलम्भाद्, इति । मैवं, न खल्वस्यास्तत्त्वतः कारकतामर्थावग्रहे सङ्गिरन्ते येनायमुपालम्भः, कुर्वाणं हि कार्य्यं कारकं, न चेयमर्थाश्रयं कुरुते कंचनातिशयं, प्रध्वस्तानागतयोस्तदयोगाद्, नह्यस्ति सम्भवः प्रध्वस्तोऽप्रत्युत्पन्नो* वा धर्मी धर्मश्चास्य प्रत्युत्पन्न इति, तस्माद् रूपमेवास्या अर्थाव-

---

टी०—वेत' इति व्यापारयोग्यताविशिष्टो धर्मी लक्ष्यते, अन्यथा व्यापारवत्यङ्गीकारे पुनरात्माश्रयादिदोषप्रसङ्गाद्,। कारकत्वं हेतुमसिद्धत्वेन दूषयति –"नखलु" इति, कारकत्वाभावं दर्शयितुं कारकलक्षणमाह-"कुर्वाणंहि" इति, कुर्वाणमित्यत्र व्यापारवत्त्वे सति इतिविशेषणमवगन्तव्यम्, अन्यथा व्यापारेतिव्याप्तेः, तेन व्यापारवत्कारणं कारकमिति लक्षणं फलतीति भाव । बुद्धेरपिकार्य्यकरत्वमस्तीति तत्राह–"नचेयम्" इति, तर्हि विज्ञानमर्थं गृह्णाति, ज्ञानेनार्थः प्रकाश्यत इति कथं भेदव्यवहारइति तत्राह—

---

* अप्रत्युत्पन्न = अनागतः,-प्रत्युत्पन्न = वर्तमान ।

मू०—ग्रहः, अभेदेपि च कथंचिद् भेदविवक्षया लोकसंव्यवहारोपपत्तिः, पुरुषस्य*चैतन्यं, राहोः शिर इति वद्, रूपं चास्या जन्माधीनमिति जन्मैव व्यापारः तदाहुः क्षणभङ्गवादिनः—

"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति,†

एतदेवाभिप्रेत्याभिहितम्—"अपि च जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपायाः" इति,

नाप्यपर्य्यायेणोभयग्रहोपपत्तिः, व्यतिरेकविज्ञानस्य व्यवच्छेद्यव्यवच्छेदावधिधीजन्यतया समसमयसंभवानुपपत्तेः, नचोचितं वक्तुं व्यवच्छेद्यादिवित्त्यपेक्षैव

---

टी०—"अभेदेपि च" इति, कथं तर्हि "तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते" इति जन्मनो व्यापारत्वमुक्तं वार्तिककारैरिति तत्राह–"रूपं चास्या" इति, जन्मनो व्यापारत्वे सुगतानामपि सम्मतिमाह–"तदाहुः" इति, भूतिः=उत्पत्तिः, क्रिया=व्यापारः ।'अभिहितम्'–ब्रह्मसिद्धिकारैरिति शेषः । तज्जन्यत्वाभावेपि तदपेक्षत्वसंभवात्समसमयत्वसम्भवः सम्भवतीत्यत आह—"नचोचितम्" इति, अपेक्षार्थानिरूपणाद्=अपेक्षाशब्दस्यार्थानि-

---

* यदा चितिरेव पुरुषस्तदा किं केन विशेष्यते, ऽभेदे विशेष्यविशेषणभावाभावाद् विशेष्यते च यथा चैत्रस्य गौरिति भेदे, एवं च यथाऽत्र वस्तुशून्यत्वेपि शब्दज्ञानानुपातित्वाद्विकल्पवृत्त्या व्यवहारस्तथात्रापीति भावः ॥

† कार्य्यानुकूलव्यापाराविष्टानामेव कारणानां कार्य्यजनकत्वेन कार्य्योत्पत्तेः प्राग् व्यापाराश्रयतया व्यापारोत्पत्त्यनन्तरमपि कारणावस्थानस्यापेक्षितत्वात्कथं क्षणिकत्वम् इत्याशङ्कायामिदं सौगतं वार्तिकमिति ज्ञेयम्—उत्पत्तिव्यतिरेकेण न कारणानां व्यापारान्तरापेक्षेति भावः ॥

मू०—व्यतिरेकधर्मिनि पुनस्तज्जन्येति, तथा सत्यपेक्षार्थानिरूपणाद्, यस्य हि यत्र किंचिदायतते तत् तदपेक्षत इत्यभिधीयते, तथा च न चेदमुष्या उत्पादस्तदधीनः कुतोऽस्यास्तदपेक्षेति ।

नच तस्याः प्रमित्यर्थक्रिययोस्तदपेक्षेत्यस्त्येवायुष्मतामपि सम्प्रतिपत्तिः ।

अपि चासन्निहितव्यवच्छेदे सान्निहितैकालम्बनाया अध्य-

---

टी०—रूपणाद् । अनिरूपणं वक्तुं सापेक्षस्य लक्षणमाह— "यस्य हि" इति, यस्य कार्य्यस्य यत्र कारणे किञ्चिद् जन्म आयतते= आयत्तं भवति (त्वय्यायत्तं कृषिफलमिति वद्) तत्कार्य्यं तत्कारणमपेक्षत इत्युच्यते । तत. किमित्यतआह—"तथाच" इति, ननु तत उत्पत्त्यभावेपि लोके घटःप्रदीपमपेक्षते देवदत्तश्च कुठारं, तद्वत् किन्न स्यादित्यत आह—"नच" इति, न हि भेदज्ञाने स्वविषयप्रकाशने स्वार्थक्रियायां धर्मिप्रतियोगिज्ञानमपेक्षत इति परीक्षकैरङ्गीक्रियते तज्जन्यत्वेनैव तदपेक्षा वचनीया, तस्माज्जनकजन्यबुद्ध्योर्न समकालीनतेत्यर्थः ।

यत्र धर्मिप्रतियोगिनोरन्यतरस्याप्रत्यक्षत्वं तत्र भेदज्ञानस्य धर्मिप्रतियोगिज्ञानजन्यत्वेन व्याप्तत्वादुभयप्रत्यक्षतायामपि भेदज्ञानस्य तत्पूर्वकत्वमनुमातुं शक्यमित्याह "अपिच" इति, असन्निहितस्य सन्निहितात्, सन्निहितस्यासन्निहिताद्वा व्यवच्छेदोऽसन्निहितव्यवच्छेदः, तस्मिन्, तत्र सन्निहितैकालम्बना भेदबुद्धिर्धर्मिणां प्रति-

मू०—क्षावच्छेदधियोऽसन्निहितव्यवच्छेद्यादिविषयभावाभावेनाऽवश्याश्रयणीये विभिन्नतद्गोचरस्मरणापेक्षत्वे, तद्दृष्टान्तावष्टम्भत एव सान्निहितव्यवच्छेदेपि विभिन्नव्यवच्छेद्यादिवित्त्यपेक्षा व्यतिरेकधियो दुर्वारा, तथाचान्यत्वे सत्यपेक्षमाणस्यावश्यंभावात्प्रागभावस्य,* अयोगाच्च यौगपद्येनोत्पादस्य प्रत्ययानां, नापर्य्यायेणोभयग्रहोपपत्तिः।

---

टी०-योगिनं वाऽवलम्बत इत्यर्थः । तस्या† असन्निहितव्यवच्छेद्यादिविषयभावाभावेन=असन्निहितधर्मिप्रतियोगिविषयभावाभावेन, इति यावत् । विभिन्नतद्गोचरस्मरणापेक्षत्वे = भेदग्राहकप्रत्यक्षाद्यतिरिक्तधर्मिप्रतियोगिविषयस्मरणापेक्षत्वे । एव सिद्धे दृष्टान्ते दार्ष्टान्तिकेपि तदनुमातुं शक्यतइत्याह—"तद्दृष्टान्तावष्टम्भतएव" इति ।

सन्निहितव्यवच्छेदे=सन्निहितात्सन्निहितस्य व्यवच्छेदे, उभयप्रत्यक्षस्थल इति यावद्, विमतं भेदज्ञानं धर्मिप्रतियोगिज्ञानजन्यं भेदज्ञानत्वाद् मेरोर्घटो भिन्न इति भेदज्ञानवदित्यर्थः । अस्तु तदपेक्षत्वं तथापि बुद्ध्योस्तुल्यकालीनता किमिति न भवेदित्याह—"तथाच" इति, अङ्कुरजननेऽवनिसलिलतेजसामेककालीनानामन्योऽन्याऽपेक्षावदत्रापि किमिति न भवेदित्यत्राह "अयोगाच्च" इति, अस्तु तर्हि प्रथमतो धर्मिप्रतियोगिज्ञानं तत्पूर्वकमेवभेदविषये

---

* अपेक्षमाणस्य धर्मिप्रतियोगिवस्तुप्रतिपत्ते प्रागभावस्य=भेदप्रतिपत्तेः प्राक्सत्त्वस्य, अवश्यभावाद्, यौगपद्येन च प्रत्ययानामुत्पादस्यायोगाद्, न युगपदुभयग्रहोपपत्तिरित्यर्थ ॥

† तस्याः=भेदप्रत्यक्षधियः ॥

मू०—नच वित्त्यन्तरसिद्धमेव व्यवच्छेद्यमध्यक्षधिया व्यवच्छिद्यत इति वाच्यं न खल्वस्पृशदेव व्यवच्छेद्यं व्यवच्छेतुमलं विज्ञानं, व्यवच्छेदमात्रं हि तदा स्यान्न पुनर्व्यवच्छेद्यविशेषस्य*न चेत्थमस्तिसम्भवः । न च वित्त्यन्तरसिद्धव्यवच्छेद्यविशेषस्यैव व्यवच्छेदान्न व्यवच्छेदमात्रमिति वाच्यम्, परस्परवार्तानभिज्ञत्वात्पूर्वोत्तरयोर्वित्त्योः ।

---

टी०-ज्ञानान्तरमिति तत्राह "नचवित्त्यन्तरसिद्धम्" इति, द्वितीयं ज्ञानं भेदमात्रं गोचरयति किञ्च वस्त्वपीति विकल्प्याद्यं दूषयति- "नखलु" इति । भेदमात्रगोचरत्वे वस्तुविशेषितं भेदज्ञानं न भवेदित्यर्थः, कोष्ठगत्या† पूर्वज्ञानगोचरविषये तदुत्तरज्ञानेन भेदस्य परिच्छेदात्तद्विशेषितं भेदज्ञानं स्यादित्यत आह "नच" इति, पूर्वोत्तरज्ञानयोः परस्परविषयागोचरत्वात् कोष्ठगतेरावेदकसङ्कलनात्मकप्रत्ययस्यानङ्गीकाराद्, नच धर्मिभेदप्रत्यययोः प्रत्येतुरेकत्वेन सङ्कलनम्, प्रत्येतुरपि प्रत्ययमन्तरेण घटकत्वायोगात्, प्रत्यययोश्च परस्परवार्तानभिज्ञत्वादित्यर्थः । पूर्वज्ञानजन्यसंस्कारसहितमिन्द्रियं धर्मिप्रतियोगिविशेषितभेदज्ञानं जनयति सुरभिचन्दनमिति ज्ञानवदिति द्वितीयपक्षस्य कः प्रतीकार इति चेद्, मैवं विकल्पासहत्वात् किं प्रथमज्ञानं धर्मप्रतियोगिनावेकत्वेन गृह्णाति भेदेन वा स्वरूपेण वा, नाद्यः एकप्रत्ययविरोधेन तदुत्तरप्रत्ययस्यैवानुत्थानाद्, नापिद्वितीयः युगपद्ग्रहणस्य निरस्तत्वात्, तत्रापि ज्ञानान्तरस्वीकारे चानवस्थापाताद्, नो तृतीयः स्वरूपेणगृहीतयो-

---

* व्यवच्छेद्यविशेषस्य = धर्मिविशेषस्य, भेदज्ञानम् इति शेषः ।

† धर्मिभेदप्रत्यययोः प्रत्येतुरेकत्वेनाविरुकप्रत्ययसकलन कोष्टगतिः ॥

मू०—योप्याह—प्रत्यक्षमेवाविकल्पकमेकाकारप्रतिनियतं विधि*व्यवच्छेदरूपविकल्पद्वयप्रसवहेतुः, तथाहि नीलाकारमालोचनं † नीलं परिछिन्दन्नीलाभावं व्यवच्छिन्नति तदव्यवच्छेदे तत्परिच्छेदानुपपत्तेः, स्वाभावव्यवच्छेदरूपत्वात्सर्वभावानां, तदभावाविनाभाविनश्च पीतादय इति नीलाकारैकप्रतिनियतं तानपि व्यवच्छिन्नति, तदिदं नीलाकारतया नीलमिदमिति च, तन्नियततया नान्यदिति च विकल्पौ प्रसूते, तदनध्यवसाये तु

---

टी०—भेदज्ञाने धर्मिणोपि प्रतियोगिनोपि धर्मिप्रतियोगिभेदप्रसङ्गाद्, यत्र दैवगत्या भेदोपि तत्रैव तत्प्रत्ययनियमान्नातिप्रसङ्ग इति चेद् न, क्षीरनीरयोस्तथाभूतयोरपि भेदप्रत्ययानुपलम्भादिति द्रष्टव्यम् ॥

सुगतमतमुत्थापयति "योप्याह" इति, एकाकारप्रतिनियतं=तद्ग्राहित्वे सत्यन्याग्राहीति यावद् । निर्विकल्पे विधिव्यच्छेदयोरभावे कथं तत्पृष्ठभाविनः सविकल्पस्य तत्संभवेदित्याशङ्क्य निर्विकल्पके तदुपपत्तिमाह "तथाहि" इति, कुत इत्यत आह—"स्वाभावे" ति, भवत्वेवं विधिस्तदन्यव्यवच्छेदः कुत इति तत्राह—"तदभावे"ति, निर्विकल्पे विधिव्यवच्छेदावापाद्य सविकल्पेपि दर्शयति "तदिदम्" इति । नन्वेवंभूतनिर्विकल्पकेनैवालं कृतं सविकल्पकाभ्यामिति तत्राह—"तदनध्यवसाये तु" इति, तयोः=विधिव्यवच्छेदयोः, विकल्पाभ्यामनध्यवसाय इति या-

---

* विधि०=नीलज्ञान, व्यवच्छेद=नीलाभावव्यावृत्ति पीतव्यावृत्तिश्च ।

† "अस्तिह्यालोचन ज्ञान प्रथम निर्विकल्पकम्" इत्युक्तेरिद निर्विकल्पक ज्ञेयम् ॥

मू०—तदर्थिनां तत्र प्रवृत्त्यनुपपत्तेः, तदुक्तं "तत्परिच्छिनत्ति, ततोऽन्यद् व्यवच्छिनत्ति, तृतीयप्रकाराभावं सूचयति" इति ।

न तस्यापि वचो विपश्चितां चेतसि चमत्काराविष्कारकारणम्—एवं हि नीलमात्रविधिस्तदात्मतया पीतादीन् व्यवच्छिन्द्याद् यदि नीलाभावाव्यवच्छेद इव तदव्यवच्छेदेपि स्वभावमयं जह्याद्, न त्वयमदृश्यार्थान्तरसंस-

---

टी०-यद् । व्यवहारस्य सविकल्पकत्वपूर्वनियमाद्विकल्पाववश्याङ्गीकरणीयाविति भावः । "तदुक्तम्" इति । तद्—इति नीलं, ततोऽन्यद्–इति नीलाभावः, तृतीयप्रकार–इति पीतादयः ।

अभावाव्यवच्छेदे नीलवित्तेः स्वभावहानिवत् पीताव्यवच्छेदे तदभावान्नासावङ्गीकरणीय इति निराकरोति "एवंहि" इति, तदात्मतया=नीलमिदं पीतं न भवतीत्याकारेणेति यावद्, यथा रूपविधिरदृश्यगन्धादिसंसर्गं न व्यवच्छिनत्त्येव नीलविधिस्तदितरतादात्म्यं न व्यवच्छिनत्ति. अदृश्यतादात्म्यस्यानिषेधाद् नचादृश्यतादात्म्यनिषेधोपि भवत्वत्र, उपलब्धे वटे पिशाचो भवति न भवति अन्य एव वेतिसंशयविपर्ययर्योरदर्शनादिति वाच्यं नीलपरिच्छेदसमये तत्तादात्म्यप्रतियोगिसर्वस्याजिज्ञासिततया तयोरसर्वज्ञेन ज्ञातुमशक्यत्वात्तन्निषेधानुपपत्तेः, एकविधेरन्यव्यवच्छेद एकत्वेन च वस्तुन्यवगते स्थाणुरयं पुरुषो वेति न क्वापि संशयः पुरुष एवेति वा विपर्ययश्च स्याद्, वस्तु मया किञ्चिदुपलब्धं घटः पटो वेत्यव-

मू०—र्गोव्यवच्छेद इवापहास्यति स्वभावं* ।

स्यान्मतं—जहात्येवायमन्याव्यवच्छेदे स्वभावं, तथाहि—नीलाभावाविनाभाविनः पीतादयस्ते चेन्न व्यवच्छिद्येरन् तथा सति नीलाभावोपि न व्यवच्छिद्येत, तदव्यवच्छेदे च न तत्स्वरूपं परिच्छिद्येत, तदनेन नीलाकारत्वं विदधतैव तदभावस्ततोऽन्ये च व्यवच्छिन्ना इति ॥

तदप्यसाम्प्रतं, तथाहि—नीलाभावव्यवच्छेदो न नीलरूपपरिच्छेदाद् भिद्यते स्वाभावव्यवच्छेदस्य भावरूपपरिच्छेदादन्यत्वेनाऽनिरूपणाद्, न ह्यस्तिसम्भवस्तत्परिच्छेदस्तदभावाव्यवच्छेदश्चेति, अस्ति तु सम्भवस्तन्मात्रपरिच्छेदस्ततोऽन्याव्यवच्छेद इति, रूपमात्रपरिच्छेदेपि तत्संसर्गिणां गन्धरसादीनामव्यवच्छेदात् ।

---

टी०—गतिश्च न स्याद्, अतो नैकविधेरन्यव्यवच्छेदकतेति भावः ।

अन्याव्यवच्छेदे स्वभावहानिं शङ्कते—"स्यान्मतम्" इति । अभावव्यवच्छेदस्य भावादनन्यत्वाद् भावपरिच्छेदेनाभावो व्यवच्छेद्यते नतु तदभावाविनाभूतसंसर्गप्रतिषेधस्तथाऽदर्शनादिति परिहरति "तदपि" इति, न भावमात्रादन्यव्यवच्छेद ब्रूमः कि-

---

* यथा रूपज्ञानमदृश्यार्थान्तरगन्धससर्गस्याव्यवच्छेदे सति स्वभाव न जहाति तथा नीलज्ञानमप्यदृश्यार्थान्तरपीतससर्गस्याव्यवच्छेदे सति स्वभावं न जहाति, तथा च न नीलविधे· पीतव्यवच्छेदकतेति भाव ।

तन्मात्रपरिच्छेदस्तदभावव्यवच्छेदी, तदभावाविनाभावेन तदात्मतया तु भावान्तराणां व्यवच्छेदक एवेति चेद्, न तर्हि तन्मात्रपरिच्छेदादपि तु तदभावाविनाभावाद्, न खलु धूमविज्ञानं प्रत्यक्षमपि धूमे धूमकेतनाविनाभावावगमसहितं धूमकेतनं* विदधत्प्रत्यक्षतामश्नुते किन्तु मानान्तरमेवैतदभ्युपगमनीयमनुमानाद्वयं, तथाचायमनुभूयमानाभावाविनाभावेनान्येषामैतदात्म्यव्यवच्छेदमभ्यर्थयमानो नानुभवमात्रं प्रमाणयितुमुत्सहते। नच मा भूदनुभवात्तदन्यव्यवच्छेदावगतिस्तदभावाविनाभावादेव तु सा गम्येतेति साम्प्रतं, तदभावाविनाभावस्यैव तदन्यस्यासिद्धेः ॥

---

न्तु विधीयमानवस्त्वभावाविनाभूतत्वादिति शङ्कते—"तन्मात्रपरिच्छेद" इति, एवन्तर्हि न प्रत्यक्षादन्यव्यवच्छेदः किन्त्वविनाभावादिति परिहरति—"न तर्हि" इति, ननु प्रत्यक्षमेवाविनाभावसहितं तद् बोधयिष्यतीति तत्राह "न खलु" इति, प्रकृते फलितमाह "तथाच" इति, अनुमानादेव तर्हि तदन्यव्यवच्छेद इत्याशङ्क्य परिहरति—"नच" इति,

---

* धूमकेतनः = वह्निः ॥

मू०—नीलतादात्म्येन पीतादीनां कदाचिदप्यनुपलम्भात् तत्सिद्धिरिति चेद्, अथ यस्यैकस्वभावं विश्वं तस्य कथं न तादात्म्येनोपलम्भः । नच यदि नीलतादात्म्येन पीतादयोऽनुभूयन्ते कुतस्तर्हि प्रवृत्तिनियमस्तदर्थिनामिति साम्प्रतं, तदसिद्धेः, कः खल्वयं प्रवृत्तिनियमो, नीलार्थिनः पीतपरिहारेण नीले प्रवृत्तिरिति चेद्, अहो वतास्य स्वदृष्टिपक्षपातो यदसिद्धमसिद्धेन साधयितुमुद्यतः, तस्माद् व्यवच्छेदपुरःसरस्तदभावाविनाभावो भावान्तराणामेषितव्यः, तथाच व्यवच्छेदपुरस्सरस्तदभावाविनाभावावबोधस्ततश्च व्यवच्छेद इति

---

टी०—तदन्यस्य=नीलादन्यस्य पीतादेः, नीलाभावाविनाभावस्यासिद्धेः । अविनाभावं पूर्ववादी शङ्कते "नीले"ति, नीलतादात्म्येनानुपलम्भात् तदभावाविनाभावसिद्धिरित्यर्थः । हेत्वसिद्ध्या* परिहरति "अथ" इति, प्रवृत्तिनियमेन तत्सिद्धिमाशङ्क्य सोऽप्यसिद्ध इति परिहरति "तदसिद्धेः" इति, पृष्टं मत्वोत्तरमाह पूर्ववादी "नीलार्थिनः" इति, परिहरति "अहो-वत" इति, नीलपीतयोर्भेदासिद्धौ प्रवृत्तिनियमोऽप्यसिद्ध इति भावः । फलितं दूषणमुपसंहारव्याजेन दर्शयति "तस्माद्" इति, एका-

---

* पीतादय नीलाभावाविनाभाविन, नीलतादात्म्येनानुपलम्भाद्, इत्यनुमान हेत्वसिद्ध्या परिहरतीत्यर्थः ।

मू०—दुर्वारमयं परस्पराश्रयमापन्नः । किञ्चैकाकारनियमादन्यव्यवच्छेदे चित्रादिषु नीलादीनामेकदर्शनभाजां भेदो न सिध्येद्, एकज्ञानसंसर्गादेकत्र ज्ञानस्यानियमात्, तत्सिद्धमेतन्नैकाकारप्रतिनियमादन्यव्यवच्छेदइति ॥

योऽप्याह—भेदस्वभावाः सर्वे भावाः, ताँस्तथाविधान् विदधदेव प्रत्यक्षं परस्परव्यावृत्तिविषयं, व्यावृत्तिस्वभावा * यथायथं दर्शनेषु निर्भासन्ते, न खलु पीतसत्ताया अन्तरेणानुभवमस्ति व्यवस्थापकं, नचायं नी-

---

टी०—कारप्रतिनियमाभावेऽप्यन्यव्यवच्छेदस्य दर्शनान्न तस्य प्रयोजकत्वमिति दूषणान्तरमाह "किञ्च" इति ।

"चित्रादिषु" इत्यादिशब्देन समूहालम्बनविषया घटादयो गृह्यन्ते, नीलपीतादीनामेकज्ञानसंसर्गेण ज्ञानमेकत्र नियतं न भवतीत्यर्थः ॥

स्वरूपभेदवादमुत्थापयति—"योऽप्याह" इति, तद्विधान्=भेदस्वभावान् । कुतः पुनरेषां व्यावृत्तिस्वभावतेत्यत आह—"व्यावृत्तिस्वभावा" इति, भासमानतामात्रेण कथं तत्स्वभावतेत्याशङ्क्य तत्स्वरूपसिद्धिवदित्याह "नखलु" इति, तदनुभवस्तत्स्वरूपमेव व्यवस्थापयति न पुनर्व्यावृत्तिस्वभावमित्यत आह–"नचायम्" इति, अपीतादिव्यावृत्तां=पीताद्यव्यावृत्तां, यदि नीलं पी-

---

* यतो व्यावृत्तिस्वभावा एव भावा दर्शनेषु निर्भासन्तेऽतस्तान् विषयीकुर्वत्प्रत्यक्षमपि परस्परव्यावृत्तिविषयमेव जायत इत्यर्थः ॥

मू०—लसत्तां व्यवस्थापयन्नपीतादिव्यावृत्तिरूपामेव ता व्यवस्थापयतीत्यनुभवमार्गागतं, नच भेदिस्वभावातिरेकी भेदो निरूपणपद्धतिमध्यास्ते, तथासति तद्भेदस्य भेदान्तरभेद्यत्वेनानवस्थापाताद्, अथ न भेदो भेदान्तरभेद्यस्तस्य स्वभावतो भेदाद्, हन्तास्तु वस्त्वेव तथा लाघवाद्, अप्रमाण्याच्चार्धजरतीयस्येति*, तेनाप्यापातरमणीयमेवाभाणि, न खलु भेदस्य भावस्वभावता संभविनी, तस्य विदारणात्मनो वस्तुरूपत्वे न

टी०—तात्मनानुभवो व्यवस्थापयति तदा व्यावृत्तरूपता न सिध्येद् अयं तु नीलं व्यवस्थापयन् पीतादिव्यावृत्तमेवावस्थापयतीत्यनुभवादेव भेदस्य स्वभावतापि सिद्धयतीत्यर्थ. । ननु भेदस्य धर्मत्वाद्वस्तुस्वभावताऽनुपपन्नेत्यत आह—"नच" इति, सत्तावत्स्वपरनिर्वाहकत्वादन्यापेक्षा नास्तीति शङ्कते— "अथ" इति, परिहरति—"हन्त" इति, ननु सत्तायामपि तुल्यमेव तदित्यत आह—"अप्रमाणत्वाद्" इति, स्वरूपसत्त्वमात्राङ्गीकारे द्रव्यादित्रये सत्सदित्यनुगतप्रत्ययस्यानुपपत्तेस्तत्सिद्धयर्थमेतदतिरेकेण सत्ताऽङ्गीक्रियते सत्तान्तरं तु न स्वीक्रियतेऽनवस्थापाताद्, भेदः पुनर्व्यावृत्तप्रत्ययसिद्धयर्थमेव स्वीकृतः स च परं व्यावृत्तप्रत्ययो भेदस्वरूपवस्तुस्वरूपादेव सिद्धयतीति भेदिव्यतिरिक्तभेदकल्पनायां प्रमाणं नास्तीति भावः ॥

* घटादयो भावा भेदेन भिन्ना भेदस्तु स्वभावत एव भिन्न इत्यर्द्धजरतीय न युक्तमित्यर्थ. ॥

मू०—किञ्चनैकं वस्तु स्याद्, अभेदैकार्थसमवाय्येकताया* भेदविरोधाद्, नचैवं परमाणुरप्येक इति † न तत्समाहाररूपोऽनेकोपि स्याद्, नचास्ति प्रकारान्तरं, नह्येकतानेकते प्रतिस्पर्द्धिप्रकारान्तरवत्यौ, तयोरन्यतरनिषेधेन्यतरव्यवस्थापन्नान्नित्यत्वानित्यत्ववद्, एवं च शून्यतैव‡ तात्त्विकी विश्वस्यापद्येतेति।

---

टी०–दूषयति—"तेनापि"इति,अयमभिसन्धिः—अयमनयोर्भेद इति धर्मिप्रतियोगिरूपांशद्वयघटितो भेदोऽनुभूयते तस्याभिन्नवस्तुस्वभावत्वे चैकस्यैव वस्तुनो धर्मिप्रतियोगिरूपद्वयांशापत्त्या वस्तुन एवाभावः स्यादिति। अंशाभावात्परमाणुरवशिष्यत इति तत्राह—"नचैवम्" इति, परमाणोरपि यदि स्वरूपं भेदस्तदा तत्रापि तथाभावस्य दैवैरपि परिहर्तुमशक्यत्वात्सोपि न भवेदित्यर्थः। तत्समाहाररूपोनेकोस्तीति न वस्त्वभाव इत्यत आह— "न तत्समाहार" इति, एकस्याभावे न तत्समाहाररूपोऽनेकोऽपि स्यादित्यर्थः। अस्तु तर्हि तृतीयो रूपरसाभ्यामतिरिक्तगन्धवदिति तत्राह "नच" इति, रूपरसयोः परस्परविरोधाभावाद् भवति प्रकारान्तरमत्र तु न तथा विरोधादित्यर्थः। किन्तत इत्यत आह— "एवंच" इति॥

---

* अभेदेन सहैकस्मिन्नर्थे वर्त्तमानाया एकतायाः॥

† एव परमाणुरपि नचैक, इति सबन्धः, एकं वस्तु किञ्चिद्रूपेण स्थिरीकृत्य तद्घटितमनेक वाच्य सर्वै रूपैस्सर्वत्र भेदसत्वे स्थिरमेवेति निश्चेतुमशक्यत्वान्न नाना वस्तुनिरुक्तिसम्भव इति भावः॥

‡ ननु स्वस्माद्विदारकत्वेऽवयवानां विभागेन सूक्ष्मत्वमेव स्यान्नतु शून्यत्वमिति चेद् अत्राहुः–न विभाजकत्वमत्र विदारकत्व किन्त्वह्यैकत्वविरोधित्व, तथा चैकस्याभावेऽनेकस्य सुतरामभावाच्छून्यतायामेव पर्य्यवसान, यत्तु विदारकस्य लवित्रादेः स्वसम्बन्धिन्ये-

मू०—स्यादेतत्—पीताद्यपेक्षमेवभेदं नीलरूपं ब्रूमो न पुन र्नीलापेक्षमेव येनायं दोषः प्रसज्येत नीलात्मनात्वय-मेकएव, भावान्तरापेक्षया भिन्न* इति न का चन दोषकलेति ।

तदपि स्वराद्धान्तरागान्धीभूताभिधानं, न खलु स्वहे-तुसमासादितस्वभावभावात्मनो भेदस्यान्यापेक्षा नि-रूप्येत, तदपेक्षायां निरपेक्षभावस्वभावताविघातात् त-द्विरुद्धधर्माध्यासस्यैकत्रानुपपत्तेः, यथाह— "अय-

---

टी०-शून्यतादोषं परिहरन्नाशङ्कते—"स्यादेतद्" इति, भेदाभेद-योरेकोपाधौ कथमवस्थानमित्याशङ्क्योपाधिभेदान्नैवमिति परिहरति "नीलात्मना" इति, किमुत्पत्तावन्योन्यापेक्षा, ऽवस्थाने वा, अ-थवा प्रतीतावर्थक्रियायां चेति विकल्प्याद्यं दूषयति—"नखलु" इति, स्वहेतुभ्य एव भावस्योत्पत्तेः प्रतियोग्यपेक्षा नास्तीत्यर्थः । सा-पेक्षत्वे दोषमाह— "तदपेक्षायाम्" इति, अथवा भेदमनूद्य

---

व विदारकत्व दृष्ट न तु स्वस्मिन्, भेदश्चेत्स्वरूप तदा स्वय न विदारयेदिति, तन्न, भेद-स्य विदारणरूपविभागात्मकत्वेन विभागस्य च विभज्यमानवृत्तित्वनियमेनावयवानव-स्थया शून्यतापत्तेस्तादवस्थ्याद्, इत्यन्यत्रविस्तर ॥

* "भावान्तरमभावो हि कयाचित्तु व्यपेक्षया" इति न्यायमूलिकेयमुक्तिरिति बोध्यम् ॥

मू०—मेवहि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च" इति, परस्परापेक्षायां स्वभावव्यवस्थितौ नैकस्याप्यात्मलाभः, तथा च न प्रतीतावप्यन्योन्यापेक्षासंभविनी, सामान्यात्परस्पराश्रयदोषस्य । अर्थक्रियायान्त्वन्योन्यापेक्षानियमो नास्त्येव नीलादीनाम्, अन्यथा नीलोपादित्सोर्निखिलोपादानप्रसङ्गाद् । नचापेक्षायाः पुरुषधर्मस्याचेतनेष्वस्ति सम्भवो येनामी परस्परापेक्षा भवेयुर्भावाः, तत्सिद्धमेतन्न भावात्मतायामन्यापेक्षा भेदस्येति ॥

किञ्चनीलभेदयोरैक्ये नीलं भिन्नं नीलस्य भेद इति

---

टी०-वस्तुस्वरूपत्वे दोषमाह—"नखलु" इति, वस्तुस्वरूपानुवादेन भेदावशेषे दोषमाह—"तदपेक्षायाम्" इति, कारणभेदः= सामग्रीभेदः, अन्यथैकस्मिन्नपि कार्य्ये कारणभेदेनानैकान्त्याद् । द्वितीयपक्षे दोषमाह-"परस्परापेक्षायाम्" इति, नीलापेक्षया पीतस्य स्थितिस्तदपेक्षया नीलस्येति परस्पराश्रय इत्यर्थः, । तृतीये कल्पे दोषमाह—"तथाच" इति, चतुर्थे दोषमाह-"अर्थक्रियायाम्" इति, फलस्य हेत्वपेक्षायामप्यहेत्वपेक्षा नास्तीत्यर्थः, तथात्वे दोषमाह—"अन्यथा" इति, अङ्गीकृत्यापेक्षामवोचाम सैव तु नास्तीत्याह-"नच" इति, भेदस्य वस्तुना विशेषणविशेष्यभावसंबन्धस्य च प्रतीतेः, वस्तुवाचकपदेन भेदपदस्य सहप्रयोगाच्च न स्वरूपं भेद इत्याह-।"किञ्च" इति, । भिन्नम्-इति

मू०— च विशेषणविशेष्यभाव-संबन्धावभासौ सहृप-दप्रयोगश्च नीलपदभेदयोर्व्याहन्येरन्, तस्माद् भावस्व-भावताभावाद् भेदस्य न विधायकमेवाध्यक्षं व्यावृत्ति-गोचरमिति सिद्धम् ॥

यत्त्विदं कैश्चिदुच्यते—न ब्रूमो वयं भावस्वभावं भेदं, भिन्नमेव त्वमुं भेदिनोऽभ्युपगच्छामः, नचैवं भेदभेदिनो-र्भेदान्तराभ्युपगमादनवस्थादोष इति, यदुक्तं—मूलक्षयाभा-वेह्यनवस्था न दोषः, यथाहुः-"मूलक्षयकरीं प्राहुरनवस्था-

---

टी०-भेदेन विशेष्यविशेषणभावस्य, नीलस्य-इति षष्ठ्या वृत्तस्य फ-लमिति सम्बन्धस्य च प्रतिभास., नच राहो· शिर-इति वदौपचा-रिकम्, भिन्नं भिन्नमित्यनुगतप्रत्ययसिद्धये स्वरूपातिरिक्तस्य कस्य-चिदभ्युपगन्तव्यत्वात्, स्वरूपाणां भिन्नतया तन्निमित्तत्वायो-गाच्च, किञ्चिदुपाधिनिबन्धनत्वे च स एव भेदोस्तु कृतं स्वभावभे-दवादपरिघोषणयेतिभाव । मास्तु वस्तुनो भेदस्वरूपत्वं ततः कि-मित्यत आह "तस्माद्" इति, ।

धर्मभेदवादमुत्थापयति "यत्तु" इति । तदविमृश्यमानसुन्द-रम् इत्यधस्तनेनान्वयः । उक्तामनवस्थामुद्धरति "नचैवम्" इति, युगपत्सर्वभेदप्रतिपत्तेरनङ्गीकाराद्, इति भावः । मूलक्षयाभावे=मूल-भूतप्रयोजन*परिक्षयाभावे । इतरेतराश्रयान्मूलक्षयमाशङ्क्य परि-

---

* मूलभूत प्रयोजनं = प्राथमिकभेदपरिज्ञान, तत्परिक्षयाभावे, अज्ञायमानानामेव भेदानां प्रथमभेदोपपादकत्वादित्यर्थ· ॥

मू०—हि दूषणम्" इति, नचात्रानवस्थितभेदाङ्गीकारेप्यास्ति मूलप्रयोजनपरिक्षयः । नच वाच्यं धर्मपक्षेपि धर्मिणो भेदेन प्रतिपन्नस्य प्रतियोगितायां तुल्यः परस्पराश्रयो दोषः, स्तम्भात्कुम्भस्य भेदसिद्धौ कुम्भात्स्तम्भस्य भेदसिद्धिरिति, अप्रतिपन्नभेदस्य* प्रतियोगितायां तु दुष्परिहरः स्वात्मनोपि तत्प्रसङ्ग इति । एकस्यामेव निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपदङ्गुलित्रयवदवभासे सत्येकं भेदिनमवधिं कृत्वेतरस्मादयं भिन्न इति सविकल्पकबोधोपपत्तेः, सविकल्पकज्ञान एव च प्रतियोग्यादिप्रतीतिपूर्वकभेदावभासाभ्युपगमाद्, निर्विकल्पकबोधे तु युगपदवभासोपपत्तावितरेतराश्रयाभावाद्, अन्तरेण हि प्रतियोग्यादिप्रतिभासपूर्वतामय-

---

टी०-हरति "नच" इति, कोष्ठगत्या विद्यमानभेदस्य स्वरूपेण प्रतिपन्नस्य प्रतियोगित्वान्नेतरेतराश्रयदोष इत्यभिप्रेत्य हेतुमाह "एकस्याम्" इति। निर्विकल्पके पि कथं धर्मिप्रतियोगिज्ञानमन्तरेण भेदावभास इति तत्राह—"सविकल्पकज्ञान एव" इति, भेदज्ञानत्वाविशेषात्सविकल्पकेपि तदनपेक्षा किन्न स्यादित्यत आह—"अन्तरेण" इति, सविकल्पकस्य वाचकशब्दप्रयोगेण

---

* ननु न भेदेन प्रतिपन्नस्य प्रतियोगिता येनाय परस्पराश्रय प्रसज्येतापि तु स्वरूपेण प्रतीतस्येति तत्राह—"अप्रतिपन्नभेदस्य" इति ॥

मू०—मस्माद् भिन्न इत्यभिधानविशेषस्मरणानुपपत्तेराश्रीयते तत्पूर्वता सविकल्पिकायाः संविदः, निर्विकल्पिकायास्तु न तत्पूर्वतायां निबन्धनं किञ्चिदुत्पश्याम इति ।

तदप्यविमृश्यमानसुन्दरं, तथाहि—यत्तावद् भेदभेदिनोर्भेदे मूलक्षयाभावान्नानवस्थादोष इति, तदप्यपर्य्यालोचिताभिधानं, स्तम्भाद्धि कुम्भो भिन्न इति वा कुम्भस्य भेद इति वा विशेषणभावेन विशेष्यभावेन वा भेदावभासे दण्ड्यादिवद् भेदेनावभासमन्तरेण विशेषणविशेष्यभावानुपपत्तावादित एव भेदान्तरग्रहणस्यावश्याश्रयणीयत्वात्तत्तद्भेदान्तरस्य च समानन्यायतया भेदान्तरसिद्ध्यपेक्षत्वात्पूर्वपूर्वासिद्धावुत्तरोत्तरासिद्धेर्न मौलिकस्यापि भेदस्य सिद्धिरिति मूलक्षयकरीत्वाद् भवत्येव दूषणमनवस्था ।

---

टी०संभिन्नत्वाद्वाच्यार्थज्ञानमन्तरेण च तदनुपपत्तेरस्ति तत्र तत्पूर्वकत्वमित्यर्थः । प्रकृते तु नैवमित्याह— "निर्विकल्पिकायास्तु" इति, युगपदनन्तभेदप्रसङ्गेनानवस्थाया मूलक्षयकरीत्वमाह— "स्तम्भाद्धि" इति । भवतु विशेषणविशेष्यभावेन भेदावभासस्तथापि कथमनवस्थेत्यत आह—"दण्ड्यादिवद्" इति, अत्र च निर्वाहको भेदः पूर्वः, निर्वाह्यश्चोत्तरः, सर्वोत्तरश्च प्रथमो घटपटयोर्भेदः, सर्वनिर्वाह्यत्वाद्, एवं च सति चतुर्थादेरसिद्धेस्तृतीयद्वितीययोरसिद्ध्या प्रथमस्यासिद्धिरिति मूलक्षय इत्यर्थः । " निर्विकल्पिकापि प्र-

मू०—योप्येवं परस्पराश्रयपरिहारोभिहितः—(प्राथमिकप्रतियोग्याद्यवभासानपेक्षायामापातजायां* संविदि भेदस्य भेदिनोश्चापर्य्यायेणावभासे सत्येकस्मादपरस्य भेदमुल्लिखन्ती सविकल्पिका संविदुत्पद्यत) इति, सोप्यविचारितरमणीयः, निर्विकल्पिकापि प्रतीतिः न प्राथमिकप्रतियोग्याद्यवभासमन्तरेण भेदाध्यवसायिनी प्रत्यक्षत्वात् सविकल्पकवद् इत्यप्रत्यूहमनुमानोत्पत्तेः, एवं च (निर्विकल्पिकायास्तु संविदो न तत्पूर्वतायां निबन्धनं किंचिदुत्पश्याम) इत्यपास्तं, प्रमाणनिबन्धनत्वा-

---

टी०—तीतिः" इति। ननु किमत्र निर्विकल्पकप्रतीतेः प्रतियोग्यादिप्रतीतिसापेक्षत्वं साध्यते किं वा प्रतियोग्यादिप्रतीत्यभावे भेदाग्रहत्वं, नाद्यः पूर्वपूर्वनिर्विकल्पापेक्षत्वेनानवस्थापाताद्, अपसिद्धान्तप्रसङ्गाच्च, निर्विकल्पकस्य भेदग्राहकत्वेन स्वयमनभ्युपगमाद् "आलोच्यते वस्तुमात्रं ज्ञानेनाऽऽपातजन्मना" † इति ब्रह्मसिद्धिकारैरुक्तत्वाद्, नापि द्वितीयो भागे सिद्धसाधनत्वात्, स्तम्भ कुम्भ इति निर्विकल्पकज्ञानस्य भेदग्राहकत्वेनानभ्युपगमाद् इति गङ्गापुरीया इति चेद्, मैवं, द्वितीयपक्षस्यैव स्वीकाराद्, नच तत्र सिद्धसाधनतादोषः, सर्वनिर्विकल्पकस्यापि भेदग्राहकत्वेन परैरिष्टतया तत्पक्षी-

---

* आपातजाया संविदि = निर्विकल्पके ज्ञाने ॥

† आपातजन्मना = निर्विकल्पकज्ञानेन वस्तुमात्रमेव विषयी क्रियते नतु तद्गतः कश्चिद् विशेष इत्यर्थ ॥

मृ०—त्तस्याः,तथा च प्रागुक्तप्रतियोग्याद्यवभासाधीनः पर सूपराश्रयस्तदवस्थः, तत्सिद्धमेतन्न प्रत्यक्षं भेदावगमाया-लमिति ।

---

टी०-कारे सिद्धसाधनत्वाभावाद्,—यदाहुर्निर्विकल्पकस्य भेद-ग्राहकत्वं साधयन्तो वार्त्तिककारमिश्राः—

"तदयुक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनाद्, *
न ह्याख्यातुमशक्यत्वाद् भेदो नास्तीति गम्यते" इति,

कुम्भ इत्यादिनिर्विकल्पकेषु जातिव्यक्त्योस्तत्सम्बन्धस्य च भि-न्नस्यैव स्वरूपतः प्रतिभासो, व्यवहारमात्रं तु सविकल्पके भवती-त्यङ्गीकाराद्, यदाहुः—

---

* जैमिनीयप्रथमलक्षणे प्रथमपादीयतुरीयसूत्रे सौत्रप्रत्यक्षलक्षणसमालोचनावसरे मीमांसाश्लोकवार्त्तिक कुमारिलभट्टैः "महासामान्यमन्यैस्तु द्रव्य सदिति चोच्यते, सा-मान्यविषयत्व च प्रत्यक्षस्यैवमाश्रित, ११४ विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभि" इत्यादिना निर्विकल्पकप्रत्यक्षस्य सत्ताद्रव्यशब्दाभिलप्य महासामान्यमेव विषयो नतु व्य-क्त्यादिविशेष , तस्य भेदावभासाधीनत्वाद् भेदस्य चेतरेतराभावरूपस्य प्रत्यक्षेण ग्रह-णासम्भवाद्, इत्येव कस्यचिद् वेदान्तिनो मतमुपक्षिप्य तन्मत दूषयितुमिदमभिहित 'तद-युक्तम्' इति, कुत —प्रतिद्रव्य भिन्नरूपोपलम्भाद् = नीलपीतयो· तिक्तमधुरयो·, शी-तोष्णयो·, गवाश्वयोश्च चाक्षुषप्रयोगानन्तरमुपजायमानविज्ञानस्य विभिन्नरूपत्वेनोपल-म्भादित्यर्थ ॥

ननु निर्विकल्पकदशायामिदमीदृशमिति भिन्नरूप नोपाख्यातु शक्यते, तत्कथ तस्य ग्रहणमत आह "नह्याख्यातुमशक्यत्वाद्" इति, यत्तु इतरेतराभावरूपस्य भेदस्य प्रत्यक्षेणाग्रहणमिति, तदस्तु नत्वत्र विशेषग्रहणे भेदग्रहणेन कार्य्य, यद्धि नीलाद् भिन्न पीत तत्स्वरूपमेव गृह्यते न तु भिन्नतया येन भेदग्रहणापेक्षा भवेत्, तेन नीलपीतादीनां भिन्नरूपाणा प्रत्यक्षेण ग्रहणे सति पश्चादभावेनेतरेतराभाव प्रतीयत इति न कश्चिद् दोष इति । अधिक न्यायरत्नाकरतोऽवसेयम् ॥

मू०—असति च प्रत्यक्षगोचरभावे भेदस्य व्याप्यव्यापकभेदोपलम्भाधीनस्यानुमानस्य, आगमस्या*भिधानाभिधेयभेदावभासनिबन्धनस्य भावभेदावभासे दत्तजलाञ्जलिप्रामाण्यम्, अर्थापत्तिरपि†तिलेभ्य एव तैलं पयस एव दधीत्यर्थक्रियाव्यवस्थान्यथानुपपत्तिप्रभवा नान्तरेण तिलादिकारणभेदावभासं व्यवस्थासिद्धिरित्य-

---

टी०-"निर्विकल्पकबोधेन द्व्यात्मकस्यापि वस्तुनः,‡
ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते" इति—

तस्मात्सर्वनिर्विकल्पकपक्षीकारेपि न सिद्धसाधनतेत्यनवद्यम् । 'तथाच' इति, दैवगत्या विद्यमानभेदयोः क्षीरनीरयोः स्वरूपप्रतिभासे प्रतियोगित्वादेरदर्शनाद् भेदेन प्रतिपन्नस्यैव तद् वक्तव्यं तथा च परस्पराश्रयदोषः ।

भेदग्राहकप्रमाणस्येदानीमेव निरूप्यमाणतया भेदस्यापि निश्चेतुमशक्यत्वाद् विद्यमानभेदयोरित्यपि वक्तुमशक्यत्वादिति भावः ।

माभूत्प्रत्यक्षेण भेदावभासस्तदितरैस्तु भविष्यतीत्याशङ्क्यतेषामपि भेदग्राहकत्वं क्रमेण दूषयति "असति च" इति ।

---

* आगमस्य च इति तु सम्यञ्च प्रतिपद्ये ॥

† अर्थापत्तिरपि न हेतुभेदावभासे मानभाव भजत कुत यतस्तिलेभ्य एव तैल पयस एव दधीति तैलदधिलक्षणार्थक्रियाया या व्यवस्था = नियति॰, तदन्यथानुपपत्तिप्रभवा सा, भवत्वेव तत॰ कि तत्राह—"नान्तरेण" इति, तिलेभ्य एव तैल पयस एव दधीत्यत्र यदि तिलपयसोर्भेदो न प्रतीत॰ तत कि कुत्र व्यवस्थाप्येत प्रत्युताव्यवस्थैव, तस्मात् तयोर्भेदसिद्धावेव व्यवस्थासिद्धि॰ व्यवस्थानुपपत्तिलक्षणार्थापत्त्या च कारणयोर्भेदसिद्धिरित्यन्योन्याश्रयसम्भ्रयाद्, इति योजना ॥

‡ द्व्यात्मकस्य = सामान्यविशेषात्मकस्य, ननु यदि निर्विकल्पकेपि सामान्यविशेषयोरुभयोर्भान कथ तर्हि 'न विशेषो न सामान्य तदानीमनुभूयते (११३)' इति पूर्वत्रा-

मू०—न्योन्याश्रयसंश्रयान्न हेतुभेदावभासे मानभावं भजते, मानान्तरावसितवस्तुद्वयावच्छिन्नसादृश्यमात्रगोचरञ्चोपमानं न भेदावभासे मानम्, अभावोऽपि व्यवच्छेद्यव्यवच्छेदावधिविभागाधीनसद्भावो न भेदभावावगाही परस्पराश्रयप्रसक्तेः,* तत्सिद्धमेतन्न प्रामाणिको भेदनिर्भास इति ।

तथा च प्रयोगः—विवादपदं भेदसंवेदनं न प्रमाणनिबन्धनम् अनिरूपितप्रमाणकत्वाद् भेदसंवेदनत्वाद्वा स्वप्नभेदावभासनवद् इति ।

---

टी०—"विवादपदम्" इति, सर्वभेदसंवेदनानामप्रामाणिकत्वग्राहकानुमानिकसंवेदनभेदस्य प्रमाणिकत्वे हेतोस्तत्रानैकान्तिकता, अप्रामाणिकत्वे तु रशनादौ दन्दशूकादिविभ्रमवदसाधकत्वादि† ति चेन्न, रशनादन्दशूकविभ्रमस्यापि दुष्टेन्द्रियविषयप्रमितिजनकत्वेन भेदवादिभिरभ्युपगमात्, स्वप्नदर्शनस्य च सत्यसुखप्रमितिजनकत्वाच्चेति भावः ।

---

भिहितमत आह "लक्षणाख्येयम्" इति, नहीदानी सामान्यविशेषयोर्ग्रहणमुच्यते यात्वियं गृह्यमाणस्य द्व्यात्मकत्वाख्या सा लक्षणाख्या,—गृह्यमाणस्य वस्तुनो लक्षणमाख्यायते सामान्यविशेषात्मकं तद्वस्त्विति, ज्ञात्रा पुनः शुद्धमेव निस्सामान्यविशेषं गृह्यत इति न पूर्वाभिहितेन विरोधइत्यर्थः ॥

* संसर्गाभावेऽन्योन्याभावे वा प्रवर्त्तमानोऽभावो धर्मिप्रतियोगिभेदज्ञानाधीनप्रवृत्तिस्ततश्च भेदसिद्धान्योन्याश्रयप्रसक्तिरित्यर्थः ॥

† असाधकत्वम्—इतिनूपयुक्तं भाति ॥

मू०—न चेन्द्रियान्वयव्यतिरेकानुविधायितया तत्कारणतानिरूपणादाद्यहेतोरसिद्धिरिति साम्प्रतं, धर्मिमात्राध्यवसायेन तत्कारणतोपपत्तावन्वयव्यतिरेकयोरन्यथासिद्धेः, नचाक्षकारणतामन्तरेणापरोक्षत्वासम्भवो भेदाध्यवसायस्येति मन्तव्यं, स्वप्नध्यानयोरिव तत्सम्भवाद्,* विभ्रान्तिभावेन तदापरोक्ष्ये तु नेहाऽप्यसौ दण्डवारितः, तस्मात्सर्वमवदातम् ।

"इत्थं निरस्तनिखिलप्रतिकूलशङ्काद्
वेदान्तवाक्यनिकरान्निखिलोपि भेदः,
शक्यो निषेद्धुमिति सिद्धमनाद्यविद्या-
तद्वासनाविरचितभ्रममात्रसिद्धः" ।

---

टी०—अन्वयव्यतिरेकयोरन्यथासिद्धत्वेनेन्द्रियकारणत्वानुमापकत्वाभावादिति परिहरति—"धर्मिमात्र" इति, इन्द्रियजन्यत्वाभावे कथमपरोक्षतेत्यत आह—"नचाक्ष" इति, एवं प्रत्यक्षादिविरोधाभावादनुपचरितार्थत्वेन वेदान्तानामद्वितीयब्रह्मप्रतिपत्तिजनकत्वमित्युपसंहरति—"इत्थम्" इति, निरस्ता निखिला प्रतिकूलाशङ्का यस्मिन् तत्तथा, प्रतिभासमानभेदस्य तर्हि का गतिरित्याशङ्क्याह— "सिद्धमनाद्यविद्या" इति, वेदान्तवाक्यनिकरान्निखिलोपि भेदो निषेद्धुं शक्य, इतिकृत्वाऽसावनाद्यविद्यातद्वासनाविरचितभ्रममात्रसिद्ध इत्यन्वयः ।

"इति ज्ञेयभेदोच्छेदवादः"

---

* साक्षिभास्यत्वेनापरोक्ष्यसम्भवाद् इत्यर्थ ॥

मू०-अथ कोयं विभ्रमो नाम, केचिदाहुः—विवेकाग्रह-मात्रं विज्ञानानां तज्ज्ञेयानां च विभ्रमः, तद्यथा—इदमिति नयनघटितशुक्तिकाशकलसाधारणाकारावग्रहे, नेत्र-

---

टी०—ख्यातिचतुष्टयनिराकरणेन विभ्रमाणामनाद्यविद्याविरचितत्वं सिसाधयिषुः प्रश्नपूर्वं प्रथममख्यातिवादमुत्थापयति—" अथ कोयम् " इति ॥

सर्वप्रत्ययानां यथार्थत्वेन पूर्वानुमानदृष्टान्तस्य साध्यविकलत्वशङ्कां वा वारयितुमख्यातिवादमुत्थापयति—" अथकोयम् " इति ॥

विवेकाग्रहमात्रम्=मात्र-शब्देनान्यथाख्यातिं वारयति, विवेकाग्रहमात्रं विभ्रम इत्युक्ते सुषुप्तावपि प्रसङ्गस्तन्निवृत्त्यर्थमाह—" ज्ञानानाम् " इति, नचैवमपि सुषुप्तौ प्रसङ्गो ज्ञानाभावेपि ज्ञानज्ञेयविवेकाग्रहस्य सम्भवादिति वाच्यं ज्ञाने सतीति विशेषणस्य विवक्षितत्वाद्*, अत्र चानेकज्ञानमात्रं विवक्षितं न बहुत्वम्, अन्यथेदं रजतमिति ज्ञानद्वयविवेकाख्यातावव्याप्तेः, एवं च सति स्वरूपतो विषयतश्चागृहीतविवेकानेकज्ञानत्वमख्यातिरित्युक्तं भवति । एकविषयानेकज्ञानेष्वतिव्याप्तिपरिहारार्थं स्वरूपपदं, समूहालम्बनज्ञानेऽतिव्याप्तिपरिहारार्थं विषय इति विशेषणम् ।

नन्विदं रजतमितीदमंशरजतांशविषयविशिष्टज्ञानमेकमेव तत्कथं विज्ञानभेद इत्याशङ्क्य सामग्रीभेदेन तद्भेदं साधयति "तद्यथा" इति, ननु तुल्यसामग्रीकतया साधारणाकारवद् विशेषाकारोपि किमिति न प्रथत इत्यत आह—" नेत्रदोषविशेषाच्च " इति,।

---

* एत्र च सुषुप्तौ स्वारसिकविवेकाग्रहसत्त्वेपि ज्ञेयज्ञानपुरस्सरविवेकाग्रहाभावान्नातिव्याप्तिरित्यर्थः ॥

मू०—दोषविशेषाच्च शुक्तित्वादिविभेदकविशेषाग्रहे, शुक्लभास्वरतादिसादृश्यसन्दर्शनसमुद्बुद्धसंस्कारकारणकं स्मरणमुपजायते रजतगोचरं, तच्च गृहीतग्रहणस्वभावमपि मानसदोषविशेषवशात्तत्तांशप्रमोषाद् ग्रहणस्वरूपमवतिष्ठते, तथाच रजतगोचरस्मरणस्य पुरोवर्त्ति-

---

टी०—स्मरणस्यनिमित्तमाह—"संस्कारकारणकम्" इति, अनुद्बुद्धस्य संस्कारस्य स्मरणकारणत्वं न सम्भवतीत्युद्बोधकमाह—"शुक्ल" इति, आदि-शब्दग्रहणाद् यावता संस्कारोद्बोधस्तावत्साहश्यं विवक्षितं, तच्चासाधारणधर्मानभिभूतसाधारणधर्मबाहुल्यं, तेन सर्वात्मना सादृश्यमेकदेशेन वा सादृश्यमिति पर्य्यनुयोगो निरवकाशः, अन्यथा भ्रमवादिनापि सादृश्यस्य विपर्य्ययहेतुताङ्गीकारेण तत्रापि पर्य्यनुयोगस्य सुवचतया जात्युत्तरतापत्तेः*। स्मरणं चेत् तद्रजतमिति स्वविषयं कस्मान्न प्रथयेदित्यत आह—"तच्च" इति, नन्वख्यातिपक्षे रजतार्थिनः पुरोवर्त्तिनि प्रवृत्तिः सामानाधिकरण्यव्यपदेशश्च किमिदमिति ज्ञानादुत स्मरणादथवा ज्ञानद्वयाद्वा, न तावत्प्रथमौ-इदमालम्बनघटादिज्ञाने देशान्तररजतस्मरणे च पुरोवर्त्तिनि तत्प्रसङ्गाद्, न तृतीयो ज्ञानद्वययौगपद्याभावादित्याशङ्क्य निरन्तरोत्पन्नज्ञानद्वयमेव सम्यग्रजतज्ञानसरूपतया प्रवृत्तिहेतुरिति परिहरति—"तथाच" इति।

---

* जातिर्नाम स्थापनाहेतौ प्रयुक्ते थ प्रतिषेधासमर्थः प्रतिषेधबुद्ध्या प्रयुक्तो हेतुः, ताश्च चतुर्विंशति, तत्रेयमुपपत्तिसमाख्या जातिः, व्यक्तचैतद् गौतमीये पञ्चम इति तत एव कर्णेहत्य निरीक्षणीयम्, एतन्मूलक एव—"यश्चोभयोः समो दोषः परिहारो वापि तत्सम, नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे" इति न्यायप्रयोगस्तत्र तत्रेत्यवसेयम्॥

मू०—साधारणाकारावग्रहस्य च मिथः स्वरूपतो विषयतश्च विभेदानवभासनात् सविधकलधौतबोधसारूप्येण 'इदमिति-रजतमिति च' भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं समानाधिकरणव्यपदेशं च प्रवर्तयतः ।

स्मरणरूपता च रजतवेदनस्य परिशेषप्रसिद्धा, तथा हि—न तावद् रजतनयनसंप्रयोगसमुपजातमेतदिति साम्प्रतम्, अतिविप्रकृष्टविषयसन्निकर्षासम्भवादक्षाणां, नच दोषदूषिताक्षसन्निकर्षः शुक्तिशकलमेव कलधौततया बोधयतीति साम्प्रतं, न खलु रजतनिर्भासः शुक्तिकालम्बनो युक्तः, प्रतीतिविरोधाद्, यद्धि यस्मिन् विज्ञानेऽवभासते तत्तदालम्बनं, नच रजतवि-

---

टी०—विधा=प्रकारः, तया सह वर्त्तते यः कलधौतबोधः स तथा, सम्पूर्णसमीचीनरजतप्रत्ययसारूप्येणेति यावद् । अथ वा सविधशब्दः पुरोवर्तिवाची "आसन्नं सविधं पार्श्वम्" इत्यभिधानात्, पुरोवर्तिरजतबोध इति यावद् । नन्वैन्द्रियकत्वाद् रजतविज्ञानस्य न स्मरणरूपत्वमित्याशङ्क्य परिशेषेण साधयति "स्मरणरूपता च" इति, नन्विन्द्रियेण संयुक्तमेव शुक्तिशकलं तच्च दोषाद् रजततया भासते तेन रजतासन्निकर्षो न दोषायेत्याशङ्क्य तथा सत्यन्याकारज्ञानस्यान्यालम्बनत्वे च वक्ष्यमाणानुभवविरोधादिदोषप्रसङ्गान्नैवमिति परिहरति "नच दोष" इति, प्रतीतिविरोधं दर्शयितुमालम्बनलक्षणमाह "यद्धि" इति, ननु सापि भासते कथं नचेति तत्राह—

मू०—ज्ञाने शुक्तिकावभासत इतिकथमसावस्यालम्बनं, तद्भासनाभ्युपगमे वा कथं नानुभवविरोधः, नच समीचीनसंवेदनसाधनादक्षसन्निकर्षादन्यथावभासो युक्तः, कलम† बीजादावपि कदल्यङ्कुरोत्पादप्रसङ्गाद्, दोषसहकारिसमवधानाददोष इति चेन्न दोषाणां कार्य्योपजननसामर्थ्यविघातमात्रहेतुत्वाद्, न खलु शालिबीजं तैलकलुषितमपि सम्पादयति यवाङ्कुरं किन्तु न सम्पादयति शाल्यङ्कुरम्*

किञ्च विषयव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः।

---

टी०-"तद्भासन"इति, इन्द्रियसन्निकर्षस्य समीचीनज्ञानजनकत्वादपि नायथार्थज्ञानजनकत्वमित्याह "नचसमीचीन" इति, यद्यस्य जनकत्वेन प्रसिद्धं तत्ततोऽन्यस्य जनकं न भवति यथा कलमबीजं कदल्यङ्कुरस्य जनकं, विमतमयथार्थज्ञानस्य न जनकं यथार्थज्ञानजनकत्वाद् यद्यस्यजनकं तत्ततोऽन्यस्य जनकं न भवति यथा कलमबीजं कदल्यङ्कुरस्य नचेदं न तथा तस्मान्नायथार्थज्ञानस्य जनकमिति सामान्यतः प्रयोगोऽनुसन्धेयः। ननु निर्दुष्टस्य तथात्वनियमेऽपि दोषसहितस्य भवेदन्यथाभाव‡ इति शङ्कते "दोष" इति, दुष्ट-

---

† कलम =एतन्नामख्यातशालिधान्यविशेषः।

* तैलकलुषित शालिबीज यथा विपरीत कार्य्य यवाङ्कुर न सपादयति तथा स्वकीय कार्य्य शाल्यङ्कुरमपि न सपादयतीत्युक्त्या स्वारसिककार्य्यप्रसवशक्तिप्रतिरोधमात्रमेव दोषकृत्य नत्वतिशयाधानमिति द्योतितम्।

‡ अन्यथाभावः=विपरीतकार्य्यजननयोग्यत्व, यथा दावदग्धवेत्रबीजानां विपरीत रम्भाकाण्डारम्भकत्वं दृष्ट यथा वा दशरात्र कांस्यपात्रोषितघृतस्य च मरणकारणत्व दृष्ट तथा दोषदूषिताक्षादेरपि मिथ्यार्थावभासजननयोग्यत्वमिति तत्त्वम्।

मू०—प्रतिभासमानाकारस्य च बहिरपलापे विज्ञानाकार एवायमाश्रितः स्यात्, तथाच महायानिकपक्षानुप्रवेशो दुर्निवारः, तस्मान्न† शुक्तिशकलमेव रजतात्मनावभासते किन्त्वसंप्रयुक्तरजतगोचरमेवैतदास्थेयम् ।

असति च लिङ्गाद्युपलम्भे जायमानस्यानुमानादिभावो न शङ्कितुमपि शक्यः तथा च सदृशसंदर्शनसमुद्बुद्धसंस्कारकारणतोपपत्तेः परिशेषतः स्मरणमेवैतदाश्रयणीयम् ॥

---

टी०—स्यापि नविपरीतकार्य्यजनकत्वं तैलकलुषितशालिबीजवदित्यर्थः ।

दूषणान्तरमाह "प्रतिभासमान" इति, अन्तर्बहिश्चाभावे शून्यता वाऽनिर्वाच्यता वा स्यात् तच्च सत्ख्यातिवादिना भवता नाभ्युपगम्यते तेन बहिरपलापे विज्ञानाकारतयावस्थानात् सुगतमतप्रसङ्ग इति भावः ।

मा स्म भूत्प्रत्यक्षता तथापि मानान्तरगम्यता किन्न स्यादित्यत आह "असति च" इति, न केवलं परिशेषात्स्मरणरूपत्वमपि तु मानान्तरादपीत्याह—

---

† तस्मात् = प्रतीतिविरोधानाश्वासासत्ख्यातिप्रसङ्गरूपबाधकप्रसङ्गाद्, इत्यर्थः ।

मू०—अपिच इदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वाद् यदित्थं तत्तथा यथोभयवाद्यविवादास्पदं रजतस्मरणं, नचेदमस्मरणं तदंशवैधुर्य्यात्संप्रतिपन्नग्रहणवदिति साम्प्रतं, नेह भूतले कुम्भ इत्यनुल्लिखिततदंशस्यापि स्मरणस्योपगमाद्, भूयसां च पदात्पदार्थस्मरणानामनुल्लिखिततदंशानामेवोपलम्भात्,

---

टी०—"अपि च" इति, "नेह" इति, घटो नास्तीत्यभावज्ञाने प्रतियोगिस्मरण निमित्तं तेन प्रतियोगी घटस्तदंश*विधुरेणोपस्थाप्यत इति तत्रानैकान्तिको हेतुरित्यर्थः। ननु नेह भूतले कुम्भ इत्यत्र प्रतियोगिग्रहणमेवाभावज्ञाननिमित्तं, यदि पुनः स्मरणमेवनिमित्तं तदा स घटोऽत्रनास्तीति तदंशपरामर्शो भवत्येव तेन कुतस्तत्रानैकान्तिकतेत्याशङ्क्य सम्प्रतिपन्नमुदाहरणमाह "भूयसां च" इति, सम्बन्धग्रहणकाले गृहीतमर्थं शब्दः स्मारयतीति वाच्यम् अनधिगतेर्थे सम्बन्धग्रहणाभावेन तदप्रत्यायकत्वाद्, यदाहुः— "पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत" इति, तथाच गामानयेति वाक्येषु पदात्पदार्थस्मृतिरेव सा च तदंशविधुरेति तत्रानैकान्तिकतेत्यर्थः।

व्यवहारस्य ग्रहणस्मरणाविवेकनिमित्तत्वमुक्तमुपसंहरति-

---

* तदंशविधुरेण=तत्तांशहीनेन घटपदेन।

मू०—तदभ्युपगन्तव्यमकामैरप्यगृहीतविवेकतापन्नसन्निहितरूप्यग्रहणसारूप्यग्रहणस्मरणप्रसञ्जित एवायं रजतार्थिनः पुरोवर्तिनि व्यवहार इति ।

क्वचित्पुनर्ग्रहणे एवागृहीतान्योन्यभेदे अयथाव्यवहारमापादयतो यथा पीतः शङ्ख इति । तत्र हि विनिर्गच्छन्नयनरश्मिवर्तिनः पित्तधातोः पीतिमा द्रव्यरहितो गृह्यते शङ्खोपि नयनदोषवशादनाकलित-

---

" तदभ्युपगन्तव्यम् " इति, ग्रहणस्मरणप्रसञ्जित एवायं पुरोवर्तिनि व्यवहार इत्यन्वयः । ग्रहणस्मरणे विशिनष्टि " अगृहीत " इति, न गृहीतो विवेको ययोस्ते तथाभूते, तयोर्भावोऽगृहीतविवेकता तयाऽऽपन्नं=प्राप्तं सन्निहितरूप्यग्रहणसारूप्यं याभ्यां ते ग्रहणस्मरणे । यथेदं रजतमिति सम्यग्ज्ञाने पीदमंशरजतांशयोः स्फुरणे भेदस्याभावादेव तदग्रहणं* विभ्रमेपि तदुभयस्फुरणेपि विद्यमानविवेकस्यापि दोषादग्रहणमिति सन्निहितरूप्यग्रहणसरूपतेत्यर्थः ।

ननु न ग्रहणस्मरणयोर्व्यवहारप्रयोजकत्वमन्यत्रादर्शनादित्याशङ्क्याविविक्तज्ञानद्वयमेव सर्वत्र प्रयोजकमित्याभिप्रायेण परिहरन्नुदाहरणमाह "क्वचिद्" इति, तदेवोपपादयति "तत्र हि"

---

* 'तथा विभ्रमेऽपि' इत्येव पठनीयं प्राक्तनयथाशब्दसाङ्गत्याय ।

शुक्लगुणः स्वरूपेणावभासते, तदनयोर्गुणगुणिनोः संसर्गयोग्ययोरसंसर्गाग्रहसारूप्यात्पीतजातरूपशङ्खप्रत्ययाविशेषेणाभेदव्यवहारः ।

भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनाच्च नेदमितिविभेदकप्रत्ययस्य बाधकताप्युपपन्ना,

---

इति । न च द्रव्याग्रहणे गुणस्य, गुणाऽग्रहणे द्रव्यस्याऽग्रहणमिति साम्प्रतं, गन्धस्य केवलस्य * प्रदोषे शुक्लताऽग्रहणेपि बलाकाया अवसीयमानत्वादिति भावः ।

अस्तु तथापि प्रस्तुते किमायातमित्यत आह "तदनयोर्" इति ।

नेदमितिबाधकस्य प्रसक्तप्रतिषेधरूपतया तदन्यथानुपपत्त्या पुरोवर्त्तिविषयरजतज्ञानसिद्धिरित्यत आह "भेदाग्रह" इति, ननु सर्वप्रत्ययानां यथार्थत्वे भ्रान्तिज्ञानमिदं सम्यग् ज्ञानमिदमिति लोकसिद्धो व्यवहारः कथमित्याशङ्क्य यथार्थत्वेपि ज्ञानानां संवादिविसंवादिव्यवहारजनकत्वेन सम्यङ्मिथ्याविभागसिद्धिरित्याह—

---

† कस्तूरिकादिद्रव्याग्रहणे केवलस्य गन्धस्यानुभूयमानत्वात्, प्रदोषे शौक्ल्यगुणाग्रहणेपि बलाकाया अनुभूयमानत्वात्पृथक्त्वेनापि क्वचिद् द्रव्यगुणयोर्ग्रहणं सम्भवतीत्यर्थः, ।

मू०—तदुपपत्तौ च प्राचीनव्यवहारप्रसञ्जकस्य भ्रान्तित्वमपि लोकप्रसिद्धं, तथाच—यथार्थाः सर्वे विवादास्पदीभूताः प्रत्ययाः प्रत्ययत्वात्संप्रतिपन्नसमीचीनप्रत्ययवदित्यप्रत्यूहमनुमानमिति ॥

तदिदं स्वसिद्धान्तश्रद्धामात्रविजृम्भितं, तथा हि-यत्तावद् (विज्ञानानां तज्ज्ञेयानाञ्च विवेकाग्रहमात्रं विभ्रमं) इत्यभाणि, तदत्यन्तापेशलं, तथाहि—विभेदस्वभावाभ्युपगमे सर्वभावानां स्वयंप्रभत्वेन स्फुटतरावभासयोः संविदोस्तदधीनप्रकाशयोश्चार्थयोः कथं विवेकाग्रहवाचोयुक्तिर्युक्तिमती, न खल्ववभासमानभावस्वभावस्यैवानवभासो भेदस्येति साम्प्रतम्, अवभासानवभासविरुद्धधर्मसंसर्गस्यैकस्मिन्नसम्भवाद् ॥

---

टी०—"तदुपपत्तौ च" इति - 'तथाहि' इति, स्वरूपस्यैव भेदत्वात्स्वसंवेदनतया च संवेदनस्वरूपस्य, तदधीनतया चार्थस्य स्फुरणान्न भेदाग्रह इति भावः ॥

स्वरूपावभासेपि भेदानवभासः किन्न स्यादित्याशङ्क्य मैवं तस्य* तदभेदादिति परिहरति—"नखलु" इति ।

---

* तस्य=भेदस्य, तदभेदाद्=वस्तुस्वरूपेण सहाभेदाद्, अख्यातिवादिमीमांसकनये वस्तुस्वरूपातिरेकेणाभावानङ्गीकारादिति भाव. ॥

मू०—अथायमसंसर्गाग्रहमेव संसर्गयोग्ययोः सामान्य विशेषयोर्विवेकाग्रहं ब्रूयात्, तदपि रिक्तम्, असंसर्गो हि संसर्गाभावः, स च इदमिति रजतमिति च भासमान-भावमात्रातिरेकी भवतां दुर्भणो भूभागमात्रातिरेकीव कुम्भाभावः, तथा च कथं प्रतिभासमानभावाभिन्नस्तद-संसर्गो न गृह्यते ।

तथाच 'साधारणाकाराकलितपौरस्त्यवस्तुनि रजत-विभेदकाकारानवभासाद् रजते च स्वरूपतो विवेचका-कारविधुरे स्मरणविपरिवर्त्तिनि विभेदानवभास' इति स्वसिद्धान्तध्वान्तान्धीकृतस्वान्तानां प्रलापमात्रमिति सि-द्धम् ॥

अस्तु वा वस्तुनोस्तत्संविदोर्वा विवेकानवभास-

---

टी०—न स्वरूपाग्रहो भेदाग्रहः किन्त्वन्य एवेति शङ्कते—"अथ" इति, इदमिति सामान्यं, रजतमिति विशेषः, विपरीतं वा, अनयोरसंसर्गो विद्यमानोपि न गृह्यते दोषादितिभावः ॥

अभावानङ्गीकारवादिनः संसर्गिस्वरूपातिरेकेणासंसर्गस्यानिरू-पणात् तत्स्वरूपस्य च गृहीतत्वान्नासंसर्गाग्रह इति परिहरति—"तदपि रिक्तम्" इति, भेदाग्रहस्य दुर्निरूपत्वमुपसंहरति—"त-था च साधारण" इति ।

भेदाग्रहमङ्गीकृत्य तस्य प्रवृत्तिहेतुत्वं न सम्भवतीत्याह—"अस्तुवा" इति ।

स्तथापि कथं तन्मात्रादिदंकारास्पदाभिमुखी रजतार्थिनः मू०—प्रवृत्तिरुपपद्येत, ग्रहणनिबन्धनो हि चेतनव्यवहारो नाग्रहणमात्राद् युक्तो भवितुमतिप्रसङ्गाद् ।

अथाग्रहणमात्रान्न चेतनव्यवहारोपि तु ग्रहणमेव सन्निहितसाधारणाकारगोचरमनाकलितविवेकं रजतस्मरणात्संनिहितसमीचीनरजतावभाससन्निभतया ततोऽविविक्तं तदुचितमेव व्यवहारं प्रवर्त्तयतीति । तदप्यलीकं, विकल्पासहत्वात्, तथाहि—सन्निहितसमीचीनरजतावभाससन्निभताऽस्य भासमाना प्रवृत्त्युपयोगिनी किं वा सत्तामात्रेण, भासमानतायामपि तत्सन्निभमिदमिति भासेत, उत रजतावभासात्स्वरूपतो विषयतश्चानाकलितभेदमिति ।

न तावत्सन्निहितरजतावभाससन्निभमित्यवभासस्तदुचितव्यवहारकारणं, नो खलु गोसन्निभो गवय

---

टी०—कुतो नोपपद्यत इति तत्राह— " ग्रहणनिबन्धन " इति ॥

स्मरणसहितात्*इति विशेषमाशङ्कते " अथ " इति ॥

भासमानतापक्षे प्रथमविकल्पं दूषयति—" नतावद् " इति, तत्स्वरूपग्रहणनिबन्धनो व्यवहारो न तत्सदृशग्रहणवद् भवतीत्यर्थः ।

---

* ग्रहणात्प्रवृत्तिर्भवतु-इति शेषः ।

मू०—इत्यवभासो गवार्थिनां गवये व्यवहारकारणभावं भजते, रजतावभासादनाकलितभेदमिति त्ववभास एव पराहतः, न खल्वनाकलितभेदो रजतावभासादिति, अनाकलितभेदमिति वाध्यवसातुमीष्टे, तस्मात्सत्तामात्रेणासौ विभेदाग्रहरूपा सन्निभता व्यवहारहेतुरिति वाच्यं, तथाचाभेदाग्रहरूपाया अपि भेदग्रहसन्निभतायास्तदुचितव्यव-

---

टी०—भासमानतापक्ष एव द्वितीयं विकल्प दूषयति—"रजतावभासाद्" इति, पराहतिमेव दर्शयति—"नखलु" इति, अनाकलितभेदः-पुरुषः, भेदाप्रतिभासे पञ्चमीप्रथमयोः प्रयोग एव न सम्भवतीति अभिन्ने घटे 'घटो घटादि,ति तयोः प्रयोगाभावाद्, भेदप्रतिभासे चानाकलितभेदमित्युक्तिर्व्याहता ॥

नन्वस्मादभिन्नमित्यत्रापि तुल्यः पर्य्यनुयोगो, भेदस्याप्रतिभासे भिन्नविभक्तिकप्रयोगायोगात्, तत्प्रतिभासे वाऽभिन्नमित्युक्तेर्व्याहतत्वाद्, मैवम्, एतत्प्रतियोगिभेदावभासाभावस्यैव तत्र विधीयमानत्वाद्, नचात्राप्येतत्प्रतियोगिकभेदोपलम्भाभावो विधीयत इति वाच्यं तयोर्भेदाप्रतिभासे तद्वाचकशब्दस्यैवानुपपत्तेर्, उपलम्भे च व्याघातो वज्रलेपायत इति भावः ॥

तेन द्वितीयः पक्षः परिशिष्यत इत्याह— "तस्माद्" इति, परमार्थस्थले हि प्रवृत्तिनिमित्तं रजतज्ञानमभेदात्मकं, तत्सन्निभता-चास्य विद्यते विविक्तस्य ज्ञानद्वयस्य भेदाग्रहणरूपा; ऽतःसा रजताऽऽदानादिव्यवहारहेतुरिति वक्तव्यमित्यर्थः। तत किमित्यत आह— "तथाच" इति, इदं रजतं न भवतीति बाधकदशायां यत्र भेदो

मू०—हारप्रसञ्जकता दुर्वारा, न खल्वस्तिविशेषोऽभेद-ग्रहसरूपतायास्तदुचितव्यवहारहेतुता न पुनर्भेदग्रहस-

---

टी०—गृह्यते तत्राभेदो न गृह्यते तस्याभावात्, तद्ग्रहे च विपरीतख्यातिप्रसङ्गाद्, एवं विभ्रमस्थलेपि भेदाग्रहवदभेदाग्रहोप्यस्ति भिन्नयोरभेदग्रहे विपरीतख्यातिप्रसङ्गादेव, तथाचोभयप्रयोजकसद्भावादेकदैव प्रवृत्तिनिवृत्ती स्यातामित्यर्थः ॥

ननु नेदमित्यत्र भेदग्रहस्यैव निवृत्तिप्रयोजकत्वान्नाभेदाग्रहस्येत्याशङ्क्याह –"नखलु" इति, तर्हीहाप्यभेदग्रहस्यैवप्रवर्तकत्वं न भेदाग्रहस्यैवेति विपर्ययो वक्तुं सुकर एव ।

ननु विभ्रमाविभ्रमसाधारण्येन भेदाग्रह एव प्रवर्तकोऽन्यथा प्रयोजकद्वैविध्यापाताद्, अविभ्रमस्थले पुनरभेदग्रहो विद्यमानोपि न प्रयोजकः किन्त्ववर्जनीयतया सन्निहित एवेति चेद्, मैवं, रजत एव नेदं रजतमिति मिथ्याबाधकज्ञानान्निवृत्तावभेदाग्रहस्यैव निवृत्तिप्रयोजकताया वक्तव्यत्वाद्, भेदग्रहस्य तत्राभावाद्, अभिन्ने भेदग्रहस्य विपरीतख्यातित्वाद्, अभेदाग्रहस्य सम्यङ्मिथ्यासाधारण्येनैकप्रयोजकत्वाद्, अविभ्रमस्थले विद्यमानोपि भेदग्रहोऽकिञ्चित्कर इति वक्तुं सुकरत्वाद् ।

यद् ग्रहणे निवृत्तिस्तदग्रहणात्प्रवृत्तिरित्यभिधाने न कापि दोषकलेति चेन्न, विकल्पासहत्वात्–किमिदं स्वसिद्धमभिधीयते परसिद्धं वा, न प्रथमो–गुरुमते कार्य्यज्ञानं प्रवर्तकमकार्य्यज्ञानं च निवर्तकमित्यङ्गीकाराद्, अकार्य्यज्ञानस्य प्रवर्तकत्वे कार्य्यार्थे शब्दप्रामाण्योच्छेदप्रसङ्गात्, स्तनपानादिप्रवृत्तिदृष्टान्तेन प्रयोज्यवृद्धप्र-

मू०—रूपताया इति, तथा चायमुभयस्वरूपताभ्यामभित आकृष्यमाणः प्रतिपत्ता न प्रवर्तेत नापि निवर्तेतेति कष्टां दशामापन्नः।

---

टी०—वृत्तेः कार्य्यज्ञानपूर्वकत्वानुमानेन*गवानयनादिवाक्यस्य कार्य्यज्ञानजनकतया कार्य्ये प्रामाण्यमिति नियमस्य त्वयैव भञ्जितत्वाद्, रजतार्थिनं प्रत्यकार्य्यशुक्तिशकलस्य कार्य्यतायाः प्रतीत्यङ्गीकारेपि विपरीतख्यातिप्रसङ्गात्, सम्वादिनि व्यवहारे कार्य्यज्ञानं प्रवर्तकम् असम्वादिनि पुनरकार्य्यज्ञानमित्यङ्गीकारे प्रयोजकद्वैविध्यापाताद्, नापि द्वितीयः, परेणानिष्टसाधनज्ञानस्य निवर्तकत्वाभ्युपगमाद् इष्टसाधनज्ञानस्य प्रवर्तकत्वाभ्युपगमाद् अनिष्टसाधनत्वाज्ञानात्प्रवृत्त्यनङ्गीकाराद्।

नन्वेवमप्यनुपपन्ना विपरीतख्यातिः, तथाहि-भेदग्रहणे विभ्रमानुपपत्तेर्भेदाग्रहणस्य विभ्रमहेतुत्वमङ्गीकरणीय, तथा च यथा तव भेदाग्रहाद्विभ्रमोत्पत्तिरेवमभेदाग्रहात्सम्यग्ज्ञानोत्पत्तिः किन्न स्यादिति प्रसङ्गः सुवचन इति चेन्न सादृश्यज्ञानं भेदाग्रहश्चेति तद्द्वयमेव विभ्रमहेतुरित्यङ्गीकाराद्, दोषाणामपरिपुष्टौ दूरादगृहीतभेदाभेदवृक्षमात्रस्य स्फुरणेपि विभ्रमानुत्पादाद्, दुष्टेन्द्रियसम्प्रयोगे सत्यभेदाग्रहणमात्रेण निर्दुष्टसामग्रीजन्यसम्यग्ज्ञानोत्पादप्रसङ्गस्य मिथोविरोधादेवायुक्तत्वा,न्निर्दुष्टसामग्रीसद्भावे चाभेदाग्रहात्सम्यग्ज्ञानोत्पादस्येष्टप्रसञ्जनतया तर्काभासत्वादित्यपि द्रष्टव्यम्।

---

* विमता प्रवृत्तिरेतत्कार्य्यज्ञानपूर्विका, प्रवृत्तित्वाद् यदेव तदेव यथा मम स्तनपानादिप्रवृत्तिरित्यनुमानेनेत्यर्थ ॥

मू०—किञ्च—इदंकारास्पदाभिमुखी रजतार्थिनः प्रवृत्तिस्तदिच्छानिबन्धना युक्ता, अन्यथाऽन्यदिच्छत्यन्यत्र व्यवहरतीति व्याघातात्—तथाच न चेदिदंकारास्पदं रजतावभासगोचरः कथं रजतार्थी तदिच्छेद्।

अथरजतताऽग्रहणादित्यभिधीयेत हन्त रजतताऽग्रहणात्कस्मादयं नोपेक्षेते,ति सोयमुपादानोपेक्षाभ्यां पुरतः पृष्टतश्चाकृष्यमाणः पुरुषो न रजतसमारोपमन्तरेणोपादान एव व्यवस्थास्यत इत्यकामैरप्यसावाश्रयणीयः, तथा च भेदाग्रहादिदंकारास्पदे रूप्यमारोप्य तद्विधस्योपकारहेतुभावमनुस्मृत्य तज्जातीयभावेनास्यापि* तमनुमाय तदर्थी प्रवर्तत इति युक्तम्।

---

टी०—पुरोवर्त्तिनि रजतार्थिप्रवृत्तेस्तद्गोचररजतज्ञानपूर्वकत्वं सिसाधयिषुः प्रथमं रजतेच्छानिबन्धनत्वं साधयति—"किञ्च" इति, तदिच्छानिबन्धना=पुरोवर्त्तीच्छानिबन्धना,। ततः किमित्यत आह—"तथाच" इति, पुरोवर्त्तिनि रजतेच्छानिबन्धनप्रवृत्तेः पुरोवर्त्तिविषयरजतज्ञानजन्यत्वमवश्यंभावि सम्यग्रजतप्रवृत्तिवदित्यर्थः॥

तथाभूतज्ञानाजन्यत्वेपि प्रवृत्तिरुपपद्यत इतिशङ्कते—"अथ" इति, समारोपाङ्गीकारे कथमुपादान एव व्यवस्थास्यत इति तत्राह—"तथाच" इति, नन्वख्यातिपक्षेपि रजतस्मरणमस्तीत्याशङ्कय तस्य पुरोवर्त्तिविषयत्वाभावेन व्यधिकरणत्वाद् मैवमित्याह—

* तम्=उपकारहेतुत्वम्॥

मू०—तटस्थरजतानुस्मरणं तु कथमिदंकारास्पदस्योपकारहेतुभावमनुमापयेद्, रजतत्वहेतोरपक्षधर्मत्वात्। तस्मादिदंकारास्पदे रजतार्थिनः प्रवृत्तिस्नेहादेव रजताकारारोपः समाश्रयणीयः ॥

तत्सिद्धमेतद् विवादाध्यासितं रजतविज्ञानं पुरोवर्तिवस्तुविषयं रजतार्थिनस्तत्रनियमेनप्रवर्तकत्वादुभयवादास्पदरजतविज्ञानवदिति ॥

---

टी०— "तटस्थ" इति । 'अपक्षधर्मत्वाद्' इति, पुरोवर्त्तिनि रजतसमारोपाभावेन रजतत्वहेतोस्तत्राप्रवृत्तेरित्यर्थः ॥

समारोपे प्रमाणमाह—"तत्सिद्धम्" इति, सम्यग्रजतज्ञाने सिद्धसाधनतापरिहारार्थं विवादास्पद-पदं, रजतोपायज्ञानेऽनैकान्तिकतापरिहारार्थं नियमेनेति विशेषणम्; अपुरोवर्त्तिविषयरजतज्ञाने व्यभिचारवारणाय तत्रेति विशेषणं, दिक्कालाऽदृष्टेषु प्रवृत्तिकारणेषु व्यभिचारनिवारणार्थं ज्ञानत्वादित्यवगन्तव्यं* ॥

नन्वेवमपि रजतग्रहणं स्मरणं वा पक्ष, आद्ये हेतोराश्रयासिद्धिः, प्राभाकरेण ख्यात्यनङ्गीकाराद्, द्वितीये त्वन्यथाख्यातिवादिनः स एव दोषः† तेन पुरोवर्त्तिविषयस्मरणानभ्युपगमाद्, उभयवादिसंप्रतिपन्नायथार्थव्यवहारजनकज्ञानं पुरोवर्त्तिविषयमितिप्रतिज्ञाकरणेनोभयविधदोषनिस्तार इत्यपि न; ग्रहणस्मरणयोरुभयोरप्ययथार्थव्यवहारजनकत्वमितिमते ग्रहणस्य पुरोवर्त्तिविषयतया सिद्धसाधनत्वादिति चेद्, मैवं, विवादाध्यासितो विसंवादिव्यवहारः पुरोवर्त्तिविषयरजतज्ञानजन्यः पुरोवर्त्तिविषयरजतव्यवहारत्वाद् अविसंवादिरजतव्यवहारवद्, इतिप्रयोगस्य विवक्षितत्वाद्, नचाविसंवादि-

---

* पुरोवर्त्तिविषये नियमेन प्रवर्तकज्ञानत्वाद् इति हेतुकलेवरमाश्रयणीयमित्यर्थः ॥

† हेतोराश्रयासिद्धिरित्यर्थः ॥

मू०—यत्पुनः परिशेषतोऽस्य स्मरणरूपताप्रसाधनं तदप्यनाद्यविद्याविजृम्भितरजताभासविषयविज्ञानाभासताया निपुणतरं निरूपयिष्यमाणत्वात्परिशेषासम्भवेनासाम्प्रतम् ॥

---

टी०—दिव्यवहारत्वमुपाधिः, पुरोवर्त्तिविषयरजतज्ञानजन्ये संस्कारे विवक्षितसाध्यसद्भावेप्यविसंवादिव्यवहारत्वाभावेन साध्याव्याप्तेः ॥

तथापि विमतो व्यवहारः पुरोवर्तिविषयरजतज्ञानजन्यो न भवति विसंवादिव्यवहारत्वादयं सर्प इति व्यवहारवद्' इति प्रकरणसमता*दुर्वारेति चेद्, न, 'अयं व्यवहारः प्रकृतग्रहणरजतस्मरणद्वयकृतो न भवति विसंवादिव्यवहारत्वादयं सर्प इति व्यवहारवद्, इत्याभाससमानयोगक्षेमत्वाद् । इदमंशरजतांशविषयविज्ञानाभावे सद्वाचकस्य प्रयोगस्य तत्र प्रवृत्तेश्चासम्भव एवेति द्वितीयानुमाने बाधकस्तर्कोविशेष इति चेन्न प्रकरणसमतानुमानेपि संसर्गज्ञानाभावे संसर्गव्यवहाराभावस्यैव बाधकत्वात्, संसर्गव्यवहारस्य संसर्गज्ञाननियतत्वाभावे संवादिव्यवहारेपि तथात्वापत्तौ संसर्गज्ञानमात्रविषयेऽध्यक्षादिप्रामाण्योच्छेदप्रसङ्गाद्, अन्यथा यथार्थाः सर्वे प्रत्यया इत्यत्रापि पर्य्यनुयोगस्य तुल्यत्वाद्, ॥

अथवा पुरोवर्तिविज्ञानं रजतविषयमिति साध्यं, तथा च न कश्चिद् दोष इति भावः, ।

तथाप्ययथार्थज्ञानस्वीकारेऽनुभवविरोधादेः कः प्रतीकार इति

---

* प्रकरणसमता = सत्प्रतिपक्षता, उभयपक्षसाम्यात्प्रकरणमनतिवर्त्तमान प्रकरणसम, व्यक्त चैतद् गोतमीये ॥

मू०—एवं चास्मन्मतेऽवभासमानरजताभासस्यैवा-लम्बनत्वाभ्युपगमादनालम्बनत्वा—ऽनुभवविरोध—त्रैदनाकारप्रसङ्गा दूरपरास्तावकाशाः ॥

सदाकाराकलितस्यानिर्वाच्यताभ्युपगमे त्वनुभवविरोधं तन्निरूपणप्रस्ताव एव निराकरिष्यामः ॥

अन्यथाख्यात्यभ्युपगमेपि शुक्तिकाकारस्येदं रजतमितिज्ञानं प्रत्यनालम्बनताभिधाने तदभ्युपगमप्रयुक्त्या चानुभवविरोधाभिधानेऽनभ्युपगम एव परिहारः ॥

द्रव्यमात्रस्य तु सितभास्वररजतात्मनाऽनालम्बनतां

---

टी०—तत्राह—"एवं च" इति। तथापि सदाकारप्रतीयमानस्य सद्विलक्षणत्वाभ्युपगमेऽनुभवविरोधस्तदवस्थ इति तत्राह—"सदाकाराकलितस्य" इति। तन्निरूपणप्रस्तावे=अनिर्वचनीयख्यातिसमर्थनावसरे, त्रिविधसत्त्वाभ्युपगमेन परिहरिष्याम इत्यर्थः।

तत्किमन्यथाख्यातावनुभवविरोधपरिहारो नास्त्येव, नेत्याह—"अन्यथा" इति। शुक्तिशकलस्य शुक्तित्वाकारेण रजतज्ञानं प्रत्यालम्बनत्वाभिधानेऽनुभवविरोधः किं वा शुक्लभास्वरतादिसाधारणाकारेण, नाद्यः तथाऽनभ्युपगमेनैवानुभवविरोधस्य परिहृतत्वादिति भावः। प्राभाकरेण शुक्तिकाकारस्य रजतज्ञानं प्रत्यालम्बनत्वं नास्तीत्यभिधाने आलम्बनत्वाभ्युपगमनिराकरणाय चानुभवविरोधाऽभिधानेऽनभ्युपगम एव परिहार इति योजना, तदभ्युगमप्रयुक्त्या प्रयोजकभूतयेति यावद्।

द्वितीये दोषमाह-"द्रव्यमात्रस्य"इति, तदुक्तं-ब्रह्मसिद्धिकारैः-"यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः,

मू०—ब्रुवाणस्य तवैव विरोधः, रजतमिति खल्वनुभवन्ननुभविता पुरोवर्त्तिवस्त्वङ्गुल्या निर्दिशति ॥

यत्तु दोषाणां कार्य्योपजननसामर्थ्यस्य विघातमात्रहेतुत्वं न तु विपरीतकार्य्यजननहेतुत्वं, तदयुक्तं—भस्मकदोष*दूषितस्य जाठरजातवेदसो बहुतराहारदाहहेतोरुपलम्भाद्, दावदहनदग्धवेत्रबीजादपि कदलीकाण्डोत्पत्तिदर्शनाद् ।

दावदाहादेस्तु वेत्राङ्कुरादावेवदोषता कदलीकाण्डादौ तु गुणभाव एवेति चेद् इहापि कामलादेः सम्यग्ज्ञाने दूषणता मिथ्याज्ञाने तु साधुतैवेति सन्तोष्टव्यम् ॥

यदपि ( विषयव्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसञ्जनं तद् बोधकभावेन स्वतःप्रामाण्यं नाव्यभिचारेण ) इति व्युत्पादयद्भिर्वृद्धैः परिहृतम् ॥

---

टी०—सामानाधिकरण्येन बोधाद् रूप्यमिदं सितम्" इति ।
तवात्मीय एव बाणो भवन्तं प्रहरतीति भावः ।

( दाव ) इति, दोषाणां विपरीतकार्य्यजनकत्वस्यापि दर्शनान्न स्वारसिककार्य्यविघातमात्रहेतुतेति भावः ।

वैषम्यमाशङ्क्य परि हरति—" दावदाहादेस्तु " इति । वृद्धैः=ब्रह्मसिद्धिकारप्रभृतिभिः ।

---

* " कट्वादिरुक्षान्नभुजां नराणां क्षीणे कफे मारुतपित्तवृद्धौ, अतिप्रवृद्धः पवनान्वितोऽग्निर्, भुक्तं क्षणाद् भस्म करोति यस्मात्, तस्मादसौ भस्मकसञ्ज्ञकोभूद्, उपांक्षतोय पचते च धातून्" इति लक्षितो रोगविशेषो भस्मकदोष ॥

मू०—तुल्यश्चायमनाश्वासो युष्मन्मतेपि, कुम्भोयमितिबोधोदयेपि किमसौ स्मृत्यविवेकरूपः किं वैकानुभवरूप इति दुर्वारत्वात्संशयावतारस्य, तत्र दोषभावाभावाभ्यामन्यतरविनिश्चये नास्मन्मतेप्यसौ दण्डवारिता पदवीति परितुष्यत्वायुष्मान् ॥

यदपि 'इदं स्मरणं भवेदनाकलितरजतस्यानुत्पद्यमानत्वाद्' इत्यवादि तदप्यपरोक्षावभासितया स्फुटतरस्मरणभेदोपलम्भादध्यक्षबाधितम्, आनैकान्तिकं च रजतबोधाधेयसंस्कारेण ॥

सति संवेदनत्व इति विशेषणाददोष इति चेत् तथापि रजतास्पदसमीहितसाधनतानुमानेनानैकान्तिकता तदवस्था,

यदपि—आचार्य्यैकदेशीयोन्नीतं तदंशवैधुर्य्यादित्यस्मरणसाधनं, तद्दूषणेपि न काचनास्माकं पक्षक्षतिः, ।

---

टी०—ज्ञानानां स्वतःप्रामाण्यादनाश्वासो नास्तीत्युक्तम्,-इदानीमख्यातिपक्षेऽनाश्वासमाह—" तुल्यश्च " इति ।

'तथापि' इति—समीहितसाधनतानुमानेन,-इत्युपलक्षणं रजतप्रत्यभिज्ञानेपि व्यभिचारादित्यपि द्रष्टव्यम्,

किंच नयनरश्मिभिः संपृक्तस्य पित्तधातोः पीतिमा यदि गृह्येत तत्संपृक्तकज्जलस्य कालिमापि किमिति न गृह्येत, तस्यास्वच्छतया

मू०—*एतेन पीतशङ्खादिविभ्रमा अपि समारोपरूपा व्याख्याताः ।

तत्र च नेत्रविरोधिकज्जलकालिमवैलक्षण्येनातिस्वच्छतया तदनिरोधिपित्तपीतिमग्रहणमुपपादयन् तथैव च द्वारा समापतन्तं तन्मात्रानतिरेकि तदसंसर्गग्रहमजानानो 'मधु पश्यसि दुर्बुद्धेः प्रपातं* किन्न पश्यसि' इत्याभाणकविषयतामयं नातिवर्तेत—

स्वाच्छ्यनिमितायां च नेत्रानिरोधितायां नेत्रोपरिविसारिणो नीरविन्दोरपि निरीक्षणमापद्येत, प्रसरन्नयनरश्मिसम्बन्धश्च प्रसारिणोः पित्तनीरयोरविशिष्टः, तस्मादतिदूरवदतिसामीप्यस्याप्यदर्शनहेतुत्वादग्रहणमेवोभयोरिति युक्तमुत्पश्यामः ।

---

टी०—नेत्रविरोधित्वादितरस्य तु स्वच्छतया तदनिरोधित्वादिति चेत् तत्राह "तत्रच" इति—पित्तपीतिम्न शङ्खस्य च ग्रहणोपपादने संसर्गिस्वरूपानतिरिक्तस्य तदसंसर्गस्याग्रहणादाभाणकविषय इत्यर्थः ।

स्वच्छत्वं नेत्रानिरोधित्वे न प्रयोजकं व्यभिचारादित्याह—"स्वाच्छ्यनिमित्तायां च" इति—पित्तस्य नेत्रसम्बन्धोस्ति न नीरस्येत्यतआह—"प्रसरद्" इति,—

* प्रपात =यस्मात्पतनेऽवस्थानक्रियाविशेषो न भवत्येवभूतनिरवलम्बनपर्वतादिपार्श्वविशेष, "मधु पश्यति मूढात्मा प्रपात नैव पश्यति, करोति निन्दित कर्म नरकान्न बिभेति च" इति—देवीभागवत (स्क० ४-७-४९) श्लोकमूलकोऽयमाभाणक । आभाणकः =प्रसिद्धप्रवाद.—

मू०—तदुक्तं—तन्त्रान्तरेपि—

"अतिदूरात्सामीप्यादिन्द्रियघातान्मनोनवस्थानाद्,
सौक्ष्म्याद् व्यवधानादभिभवात्समानाभिहाराच्च" इति।

यदपि "भेदाग्रहप्रसञ्जिताभेदव्यवहारनिवारणादेव विवेकवेदनस्य* वाधकता" इत्युक्तं तदप्यनुचितं, तथा सति रजतसंवेदनसमनन्तरमतदर्थिनो† व्यवहारानुदये-नेदमिति विवेकवेदनस्यावाधकताप्रसङ्गाद्, व्यवहार-योग्यताविच्छेदो वाध इत्यपि रिक्तैव वाचो युक्तिः, समयान्तरेपि रजताविवेकतस्तत्रैव व्यवहारदर्शनाद्।

योग्यतायाश्च यावद्द्रव्यभावितयाऽनुच्छेदात् तत्-

---

टी०—अतिदूराद्,—मेर्वादेरग्रहणं, सामीप्याद्—नेत्रकज्जलस्य, इन्द्रियघातात्-तिमिरादिना निकटवर्तिनो घटादेः, मनोनवस्थानाद्-यत्रेदमुच्यते "-समीपेनापि गच्छन्तं राजानं नावबुद्धवान्' इति, सौक्ष्म्यात्-परमाण्वादेः, व्यवधानात् कुड्यादिना,* अभिभवाद् दिवा सावित्रेण तेजसा नक्षत्रादेः, समानाभिहाराच्च-तैलादिना चूनादेः,—

व्यवहारवाधनं वाधकत्वे न प्रयोजकमव्यापकत्वादित्याह—"तथा सति" इति, ननुयोग्यतान्तरादेव तत्र व्यवहार इत्यत आह—"योग्यतायाश्च" इति। सति कार्य्यजनने यावद् द्रव्य सैव योग्यतेति स्वीकरणीयं योग्यतायाः कार्य्यैकसमधिगम्यत्वाद्-

---

* विवेकवेदनस्य = नेद रजतमिति ज्ञानस्य।

† अतदर्थिन = विरक्तस्य, भवति हि विरक्तस्यापि कस्य चित्पुरोवर्तिनीदरजतमितिभ्रान्तिर्नेदरजतमितिवाधश्च, पर न च तत्र व्यवहारोऽतदर्थित्वादिति स्यात्तत्राव्याप्तिरित्यर्थः। तदर्थिनो व्यवहारविच्छेदकस्य च वाधकत्वेऽभ्युपगम्यमाने यत्र कश्चित् कुचिद्देशे यागाद्यनुष्ठाने चौरादिज्ञानाद्विच्छिन्नोद्योगो भवेत् तत्र चौरादिज्ञानस्य यागादिवाधकत्वप्रसङ्ग इति। दिक्॥ * राजद्वारादेरितिशेषः।

मू०—प्रतिबन्धो बाध, इत्यप्ययुक्तं, विवेकवेदनवेलायां हेत्वभावादेव फलाभावसिद्धौ प्रतिबन्धकल्पनायोगाद्-नाप्यविवेकापनोद एव बाधो युक्तः, विवेकवेदनमात्रस्यापि* तत्प्रसङ्गाद्,—

एवं च 'तदुपपत्तौ प्राचीनव्यवहारप्रसञ्जकस्य भ्रान्तित्वमपि लोकप्रसिद्धं सिद्धम्' इति प्रत्यूढम्,

---

टी०—एकयोग्यतावशेन च तदुपपत्तावनेकयोग्यताकल्पनायां मानाभावाद् अनुच्छिन्ना सैव योग्यता यावत्कार्य्यमनुवर्तत इत्यर्थः ।

कारणसाकल्ये सति कार्य्यानुदये प्रतिबन्धककल्पना, इह च विवेकग्रहणसमये विवेकाग्रहणलक्षणकारणाभावादेव कार्य्यानुत्पत्तौ न योग्यताप्रतिबन्धकल्पनावकाश इत्याह, "विवेकवेदनवेलायाम्" इति । "विवेकवेदनमात्रस्य" इति-नचायथाव्यवहारहेतोरग्रहणस्य निवृत्तिर्बाधः, व्यवहारानुदये नेदमित्यविवेकानिवर्तकस्याबाधकत्वप्रसङ्गाद्-नापि व्यवहारजननयोग्याग्रहणनिवृत्तिर्बाधः, व्यवहारमजनित्वैवाग्रहणनिवृत्तेः तत्र तद्योग्यताया अभावेन तन्निवर्तकस्याबाधकताप्रसङ्गादिति भावः ।

उक्तप्रयोजकाभावेन सत्यमिथ्याज्ञानविवेकोपि भवन्मते दुर्वचन एवेत्याह—"एवं च" इति ।

---

* सर्वाण्यपि हि ज्ञानानि स्वप्रागभावरूपाऽग्रहणनिवर्तकानीति ज्ञानमात्रस्य बाधकत्वापत्तिः स्यात्, तथा च न केपि भ्रान्ता स्युरित्यर्थः ॥

मू०—यश्चायं प्रयोगः—'यथार्थाः सर्वे विवादास्पदीभूताः प्रत्ययाः प्रत्ययत्वात्सम्प्रतिपन्नसमीचीनप्रत्ययवद्' इति, सोप्यसाधुः, विवादविभ्रमाभ्युपगमे राद्धान्तविरो-

---

टी०-यथार्थत्वानुमाने किं पक्षीकृता विभ्रमाः स्वीक्रियन्ते न वेति विकल्प्य क्रमेण दूषयति—"सोप्यसाधुः" इति। अयथार्थव्यवहारहेतोरेव प्रत्ययस्य पक्षीकरणान्नोक्तदोष इति चेद्, न, इदमंशविषयसत्त्यवृत्त्यङ्गीकरणेन मायावादिनं प्रति सिद्धसाधनत्वाद्,* आभासानाभासयोरुभयोरयथार्थव्यवहारजनकत्वाङ्गीकारात्, तादृशव्यवहारजनकेश्वरज्ञाने धर्म्यंशज्ञाने च नैय्यायिकभाट्टयोरुक्तदोषादिति भावः॥

---

*इद रजतमित्यत्रेदमंशविषयस्य प्रत्ययस्याधिष्ठानविषयत्वेन वेदान्तिभिर्यथार्थत्वाङ्गीकारादिति भावः, ननु रजतांशविषयवृत्तेरयथार्थव्यवहारहेतुत्वाभावात् तस्य पक्षान्तःपातित्वाभावेन कथं सिद्धसाधनतेति, तत्राह—"आभासानाभासयोर्"–इति। आभासः=रजतविषयः प्रत्ययः, अनाभास=इदमंशविषय प्रत्ययः, तयोरुभयोरपि ज्ञानैक्यमादायायथार्थव्यवहारजनकत्वाङ्गीकारादित्यर्थः॥

यद्यपि इद रजतमित्यत्रेदमिति सत्यात्मकोऽन्तःकरणपरिणामः, रजतमिति स्वनृतात्मका रजतरूपसंस्कारानुरञ्जितेदमंशावच्छिन्नात्माविद्यापरिणामः, तथापि सिद्धान्ते तयोरेकसाक्षिवेद्यत्वेनैकफलत्वादेकज्ञानत्वमेवोपेयत इति भवतीदमंशज्ञाने सिद्धसाधनमिति तत्त्वम्। "सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्य्ययः" इति न्यायानुसारिणां नैय्यायिकानामपि समानमिदमंशज्ञाने सिद्धसाधनम्, एवं भाट्टानामपि, एतदाशयेनैवाह—"धर्म्यंशज्ञाने च नैय्यायिकभाट्टयोरुक्तदोषाद्" इति॥

(तादृशव्यवहारजनकेश्वरज्ञाने) इति तु केवलतार्किकाभिप्रायं भाट्टैरीश्वरानङ्गीकारात्। तार्किकैर्हि यथार्थस्येश्वरज्ञानस्य सर्वव्यवहारहेतुत्वाङ्गीकारेणायथार्थव्यवहारेऽपि तस्य हेतुत्वावश्यंभावादयथार्थव्यवहारहेतोर्यथार्थत्वसाधने तन्नये परमात्मज्ञानमादाय सिद्धसाधनत्वस्य सुव्यक्तत्वादितिभावः॥

मू०—धाद्, अनभ्युपगमे चाश्रयासिद्धित्वाद्धेतोः, प्रतिभासमानार्थापलापाभावाच्चास्मन्मते सिद्धसाधनत्वाद्, अवाध्यतायाश्च साध्यत्वे वाधकप्रत्ययविरोधादित्यलं प्रपञ्चेन ॥

( इसख्यातिवादनिरास )

अपरे* पुनरन्यथाख्यातिं भ्रान्तिमाचक्षते, तथाहि—रजताविवेकनिबन्धनायां पौरस्त्यवस्तुविषयायां प्रवृत्तौ प्रतिषिद्धायामऽवश्यमाश्रयणीये च रजतारोपे सत्यत्यन्तासतोऽर्थस्य प्रतिभासासम्भवाद् वाधविरोधाच्चात्यन्तिकसत्तानुपपत्ता, ववश्यमाश्रयणीयमेतत्-शुक्तिशकलमेव का-

---

टी०—यथार्थत्वमपि प्रतिभासमानार्थत्वमुतावाध्यत्वमिति विकल्प्य क्रमेण दूषयति—" प्रतिभासमान " इति ।

( इसख्यातिवादनिरासः )

भवतु समारोपस्तथाप्यसद्विषय एव किन्न स्यादित्यत आह—" अत्यन्तासत " इति । तर्हि यथाप्रतिभासं सत्त्वमेव किन्न स्यादिति तत्राह—" वाधविरोधाच्च " इति । अन्यस्यान्या-

---

* एवं विभ्रमसद्भावे साधिते सम्प्रति तद्विभ्रमालम्बनं किमसदुत सदेव वा किं वोभयात्मकमुतोभयविलक्षणमित्याकांक्षायां प्रथमं सदेवेत्यन्यथाख्यातिमतमाख्यातुमुपक्रमते—" अपरे पुनर् " इत्यादिना ॥

मू०-मलादिदोषदूषितलोचनालोचितमर्थान्तरं रजतात्मना-वभासत इति, नच नेदं रजतमितिबाधावबोधवशादसत्त्वैवात्यन्तिकी रजतस्येति साम्प्रतं, स खलु सन्निहितेदंकारास्पदतादात्म्यनिषेधादसन्निहिततामेवास्यार्थादापादयति न पुनरात्यन्तिकीमसत्तां, यद्धि यथा प्रतिभासते तत्तथैवेत्यौत्सर्गिको न्यायः, अन्यथाभावस्त्वस्य बलवद्बाधकोपनिपातवशादाश्रयणीयः,

स चेदिदंकारास्पदतादात्म्यनिषेधात्मोपपन्नः कुतः पुनरस्य प्रसक्तप्रतिषेधे परिशेषतः प्रसिद्धा प्रदेशान्तर-

---

टी०-त्मना प्रतिभासे निमित्तमाह-"कामल" इति। बाधकस्य तादात्म्यमात्रविषयतयोपपन्नत्वेन न रजतबाधकत्वमिति हेतुमाह— "सखलु" इति। बाधकस्य परिशेषन्यायेन तादात्म्यमात्रविषयत्वं दर्शयितुं सामान्यन्यायमाह—"यद्धि" इति। तेन तर्हि सत्त्वमेव किन्न स्यादिति तत्राह—"अन्यथा" इति। बाधकादसत्त्वमेव तर्हि किन्न स्यादिति तत्राह— "सचेद्" इति।

वामेन न पश्यतीत्यादौ विशेषप्रतिषेधस्य शेषाभ्यनुज्ञापूर्वकत्वाद्, अत्र च यद् रजतं तदिदं न भवतीति निषेधस्य विशेषविषयत्वाद्, रजतमात्रनिषेधे न रजतमिति बाधप्रसङ्गाद्, धर्ममात्रबाधेन बाधकस्योपपत्तेर्धर्मिबाधविषयत्वे कल्पनागौरवप्रसङ्गात्तादात्म्यमात्रविषयत्वमित्यर्थः।

ननु बाधकस्य तादात्म्यमात्रनिषेधेनोपपत्तौ परिशेषात्प्रदेशान्तरे सत्त्वं चेत्तर्हि तस्य चक्षुःसन्निकर्षाभावादापरोक्ष्यं न स्यादि-

मू०—सत्ताऽपन्हूयेत, तथा च (अतिव्यवधानादसंप्रयुक्तरजताकारस्यापरोक्षगोचरभावानुपपत्तिः) इत्यपि रिक्तेव वाचो युक्तिः, शुक्तिशकलस्यैवानाकलितनिजाकारस्य नेत्रदोषवशादेव रजताकारेणापरोक्षप्रतिभासगोचरभावाभ्युपगमात् ।

तस्य च रजतात्मना प्रतिभासगोचरभावे प्रमाणमनुमानं (विवादपदं रजताकारेणावभासते तदर्थिनो

---

टी०—त्याशङ्क्याह-"तथा च" इति । प्रतिभासमानस्य साकल्येन सन्निकर्षाभावादपरोक्षत्वानुपपत्तिः, किं वैकदेशसन्निकर्षाभावाद्, नाद्यः प्रत्यभिज्ञानस्याप्यपरोक्षत्वाभावप्रसङ्गात् तत्तांशस्यासन्निकर्षाद्, एकदेशसन्निकर्षाभावस्तु नास्ति शुक्तिशकलस्यासन्निकर्षत्वाभावादित्याह--"शुक्तिशकलस्य" इति । न च तर्हि तावदेव प्रतीयेत न रजतमिति वाच्यं तत्तांशवद् रजतस्यापि संस्कारोपस्थापितत्वाद्, नच तथात्वे तदेवेद रजतमिति प्रत्ययप्रसङ्गः, तथाभूतस्यापि *भ्रमस्य क्वचिद्भावाद्, स्मृत्युपनीते पदार्थे तत्तांशानियमाभावाद्†, नच तद्वदेवाभ्रमत्वप्रसङ्गः, दोषादन्यथाभावोपपत्तेरिति भावः ।

ननु नाभ्युपगममात्रेण वस्तुसिद्धिः किन्तु मानत इत्यत आह । "तस्यच" इति । रजतस्य साधने व्यभिचारनिवारणार्थं नियमेनेति पदं, घटादौ व्यभिचारवारणाय तदर्थिन इति ।

---

* तथाभूतस्य = तत्तांशरहितस्य ।

† कृतव्युत्पादन चैतद् (भूयसा च पदान्तरार्थस्मरणानामनुल्लिखिततत्ताशानामेवोपलम्भाद्) इत्यादिना प्राक् पृ० ६२ प ५ ।

मू०—नियमेन प्रवृत्तिविषयत्वाद् यदित्थं तत्तथा यथोभयबाद्यविवादास्पदं रजतम्)

नेदमिति च बाधोदयसमनन्तरसमुपजातम् (एतावन्तं कालं रजतमित्यभाद्) इति प्रत्यभिज्ञानमप्यमुमेवार्थमञ्जसा वेदयतीति ।

तदपि न चातुरीं धत्ते, यत्तावद् (अत्यन्तासतः प्रतिभासासम्भवाद् बाधधीविरोधाच्च यथावभाससत्तानुपपत्तौ शुक्तिरेवार्थान्तररजताकारेणावभासत) इति, तत्र यद्यसतो न प्रतिभासः कथन्तर्हीदंकारास्पदस्य रजतात्मता प्रतिभासेत, नहि तस्य स्वरूपसतोऽपि तदात्मना सत्ता तात्त्विकी येनैतदित्थमनुभवगोचरतामापद्येत,

---

टी०—"अञ्जसा" इति। बाधात्पूर्वमिदमो रजतत्वेनाप्रतिभासे रजतमिदमभादिति बाधानन्तरं प्रत्यभिज्ञा न भवेदित्यर्थः।

असत्ख्यातिभयादन्यथाख्यात्यभ्युपगमः, तदभ्युपगमेपि तदुभयं तदवस्थमिति दूषयति—"तत्र यदि" इति। रजतस्य स्वरूपेण सत्त्वात्कथमसत्ख्यातिप्रसङ्ग इत्यत आह—"नहि" इति। स्वरूपभावेपि तद्रूपेणासत्त्वादसत्ख्यातिरेवेत्यर्थः। नन्विदमंशस्य रजतस्य तत्तादात्म्यस्यच यथार्थस्थले भावात् कथमसत्ख्यातिरित्यत

मू०—अपरथा बाधधियो निरालम्बनतापातात्, प्राचश्च प्रत्ययस्य प्रतिभासमानार्थसद्भावात्प्रामाण्यं, पराचस्तु तदभावादप्रामाण्यमिति च भ्रान्तिबाधविपर्य्यापातात्* ।

अथेदंकारास्पदस्य रजतात्मताया अप्यन्यत्र सत्तायां सम्भवत्येवोपलम्भगोचरभावो न पुनरत्यन्तासत्तायामाकाशनलिनायमानस्य रजतादेरवभाससम्भव इत्यसत्ख्यात्यनङ्गीकरणम् ।

अथासौ रजतात्मतेदंकारास्पदस्यान्यत्रैव सतीति किमत्रापि, यद्याद्यः कल्पः कथं नात्यन्तासतः प्रतिभासः, न हि रूपान्तरसत्ता व्यवच्छिनत्ति रूपान्तरस्यात्यन्तिकीमसत्ताम्, मा भून्नलिनसत्तामात्रान्नभोनलिनमप्यसद्विलक्षणम्, उत्तरस्मिन्नपि कथं न प्राचीनदोषानुषङ्गः ।

---

टी०—आह—"अपरथा" इति, दूषणान्तरमाह—"प्राचश्च" इति।

इदमंशरजतांशयोरत्र तादात्म्यस्यासत्त्वेऽप्यन्यत्र सत्त्वान्नासत्ख्यातिप्रसङ्गो, गगनकुसुमादेः पुनरनेवंभूतत्वाद्वैषम्यमिति शङ्कते—"अथेदम्" इति ।

तदेतद्विकल्प्य दूषयति—"अथासौ" इति । अपि-शब्दादन्यत्रापि, स्वरूपेण सत्त्वात्कथमत्यन्तासदिति तत्राह—"नहि" इति । प्राचीनदोषः=बाधधियो निरालम्बनत्वं, भ्रान्तिबाधविपर्य्ययश्च ।

---

* इदं रजतमितिभ्रान्तिरूपप्राच' प्रत्ययस्याप्रामाण्य, नेदं रजतमितिबाधरूपपराचश्च प्रामाण्यमिति सिद्धान्तः, रजतसत्ताङ्गीकारे त्वनयोः प्रत्यययोर्वैपरीत्यमापद्येतेति भावः ॥

मू०—यद्युच्येत नाभावो नाम भावादन्यः कश्चिदपितु भाव एव भावान्तरात्मनाऽभावः स्वरूपेण तु भावः, यथोक्तम्—

"भावान्तरमभावो हि कयाचित्तु व्यपेक्षया" इति ।

"भावान्तरमभावोन्यो न कश्चिदनिरूपणाद्" इति च ॥

तथा चासतोपि सदात्मनोपाख्येयतया युज्येतैवोपलम्भगोचरभावो न पुनरत्यन्तासतो निरुपाख्यस्येति ।

तत्किमिदानीं निरुपाख्यं चेन्नानुभवगोचरः शुक्तिरपि रजतात्मना सोपाख्यैव यदेवमनुभवगोचरतामवलम्बते ।

अद्धा,

---

टी०—असतः प्रतिभासेपि न गगनकुसुमादिख्यातितुल्यताऽसतोपि भावत्वादिति शङ्कते—"यद्युच्येत" इति । तर्हि भावाभावयोः को विशेष इति तत्राह—"भावान्तरम्" इति ।

अस्तु तथापि कथ नासत्ख्यातिरिति तत्राह—"तथाच" इति ।

गूढाभिसन्धिरुत्तरमाह सिद्धान्ती—"तत्किमिदानीम्" इति ।

आह पूर्ववादी "अद्धा" इति । शुक्तिरपि रजतात्मना सोपाख्यैवेति सत्यमित्यर्थः ।

मू०—हन्तैतदात्म्यावभासोपि सोपाख्यगोचरतया सदेवविषयीकुर्वाणः समीचीन इति न विभ्रमो नापि बाध्येत, ।

सत्यं यद्यन्योन्याभावात्मनोरयमिदंकारास्पदरजतयोस्तदात्मनैवामू गोचरयेद्, अन्योन्यात्मना त्वमू गोचरयन् कथमसौ सोपाख्यगोचरोपि समीचीनतया न विभ्रमः कथं वा न बाध्यत इति चेद् ।

हन्तेयमन्योन्यात्मता किं सत्त्वेनानुभवगोचर उतासत्त्वेन, नाद्यः, अन्योन्याभावात्मनोरनयोरैकात्म्यविरोधाद्, बाधानुपपत्तिप्रसङ्गाच्च, नाप्यसत्त्वेन, वस्त्वन्तरमेवहि वस्त्वन्तरस्यासत्त्वमास्थीयते, नचारोपितेय-

---

टी०-सिद्धान्ती स्वाभिप्रायमाविष्करोति—"हन्तैतदात्म्यावभासोपि" इति ।

शङ्कते पूर्ववादी—"सत्यम्" इति । इदमाकारास्पदरजतयोरन्योन्याभावात्मनो.स्तनोरिति यावद्, तदात्मना=अन्योन्याभावात्मना, अमू=इदङ्कारास्पदरजते यद्ययं प्रत्ययो गोचरयेत्, तदा न विभ्रमो नापि बाध्येत, अन्योन्यात्मना तु गोचरयतीति विभ्रमो बाध्यश्चेति भावः ।

तदेतद्विकल्प्य दूषयति—"हन्तेयम्" इति । भवतु वस्त्वन्तरमेव वस्त्वन्तरस्यासत्त्व तथापि को दोष इत्यत आह-"नच"

मू०—मन्योन्यात्मकता वस्त्वन्तरं, तद्धीदंकारास्पदमेव वा भवेद्, रजतमेव वा, उभयातिरेकिकुम्भादि वा, पूर्वत्रे*दमित्येव प्रत्ययः स्यान्न पुना रजतमिति, परस्मिन् तु कान्ताकरादावेव रजतमिति स्यान्न पुनरिदमिति, प्रदेशभेदास्मरणेपि रजतमित्येव स्यान्न पुनरिदमिति, तृतीये त्विदं रजतमितिप्रतिभासो दूरनिरस्तावकाश एव, नचास्ति प्रकारान्तरेणोपाख्येयत्वसम्भवः, तत्सम्भवे वा दुर्निवारमनिर्वाच्यत्वं तस्य तन्मात्रलक्षणत्वाद् ।

---

टी०—इति। वस्त्वन्तरत्वं विकल्प्य दूषयति-"तद्धीदम्" इति। उभयरूपतापक्षस्तु स्पष्टदूषणतयोपेक्षितः, तत्र † बाधाद्यनुपपत्तिप्रसङ्गस्योक्तत्वाद् ॥

ननु दोषात्प्रदेशभेदो नावगम्यत इति तत्राह— "प्रदेशभेद" इति। "दूरनिरस्तावकाश" इति। कुम्भादेरनिदमंशत्वादरजतत्वाच्चेति भावः। अभ्युपगमे दोषमाह— "तत्सम्भवे वा" इति,।

शुक्तिरजतयोः स्वरूपेण सत्त्वादलीकं तत्तादात्म्यं तदनुषक्ततया भासते न पुनः सदशास्पृष्टमलीकं तस्य क्वचिदप्यपरोक्षतया

---

* पूर्वत्र = प्रथमे कल्पे ॥

† तत्र = तद्वस्त्वन्तरमिदकारास्पदरूपं रजतरूपं चेत्युभयरूपतापक्षे ॥

मू०—अत्यन्तासत्ताविशेषेपि त्वैतदात्म्यस्यैवावभासानुपपत्तिर्न पुना रजतादेर्धर्मिण इत्यत्र कोशपानमेव* शरणं ।

यदि चात्यन्तासतः प्रतिभासानुपपत्तिस्तथापि कथं यथाप्रतिभासमेव तत्सत्तानभ्युपगमः ।

ननूक्तं वाधविरोध, इति, स खल्विदंकारास्पदे रजताभावमावेदयतीति, ।

---

टी०—भासमानताभावादित्याशङ्क्याह—"अत्यन्तासत्ता" इति । तर्हि रजतस्यैवात्यन्तासतोऽधिष्ठानानुषक्ततयाऽपरोक्षतास्तु सदृशसंसर्गस्य भावाद्, एवं कल्पनासामान्येपि धर्मस्यैवावभासो न धर्मिण इत्यत्राहष्टं प्रमाणं कोशपानमेव शरणं नतु दृष्टः कश्चिन्न्याय इत्यर्थः ।

असत्ख्यातिभयात्स्वरूपसत्त्वं चेदङ्गीक्रियते तर्हि यत्र शुक्तिशकलादौ प्रतीयते तत्रैव कस्मान्न स्वीक्रियत इति प्रौढिवादेनाह—"यदिच" इति ॥

विरोधमेव दर्शयति "स खलु" इति,

---

* कोशपानम्=महाचौर्य्यशङ्काभियुक्ताना नराणा विशुद्धये विहितेषु तुलादिषु पञ्चसु दिव्येष्वन्यतममन्तिम दिव्यम्, एतच्च याज्ञवल्क्यीये व्यवहाराध्याये दिव्यप्रकरणे "देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत्, सश्राव्य पाययेत् तस्माज्जल तु प्रसृतित्रयम्, अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविक, व्यसन जायते घोर स शुद्ध· स्यान्न सशय "११२।११३। इत्यत्र व्यक्तमिति तत एवावसेयम् ।

मू०—हन्तेदं रजतमित्यपि तत्रैव भाववेदनात्सापि कि-न्नाश्रीयते, विरोधादिति चेद्, अथ कोयं विरोधो वित्ती चेदुभयमावेदयतो रूपरसवद्, ।

अथैकत्र भावाभावावेकस्य विरुद्धावन्यत्रानुपलम्भात्, तत्किमिदानीमनाश्रयणीयमेवान्यत्रानुपलम्भात् तृती-यस्यां* प्रकृतावाकारद्वयं, तत्रैव तूपलम्भादाश्रयणे प्रकृतेपि समानं, तथा सति तद्वदेव†सहोपलम्भप्रसङ्ग इति चेन्मैवं, विचित्रसामग्रीकत्वेनापि तदभावोपपत्तेः, यस्य खल्वातपाक्रान्तिकामलादिदूषितमालोचनममु-

---

टी०–अभावबोधादभावसद्भाववत् तत्सद्भावोपि तद्वेदनात्किमिति न स्वीक्रियत इति परिहरति "हन्त" इति,

संविदेव हि विषयसत्त्वोपगमे शरणं सा चेदुभयमावेदयति को विरोध इति परिहरति "अथ कोयम्" इति ।

रूपरसयोरेकत्र दृष्टत्वादविरोधो भावाभावयोरनेवंरूपत्वेन विरोधं शङ्कते "अथैकत्र"इति, । अन्यत्रादर्शनेन परिहृश्यस्या-स्वीकारे नपुंसकेप्याकारद्वयं न स्यादित्यनिष्टापादनेन परिहरति "तत्किम्" इति, युगपत्सामग्र्यभावादेव सहानुपलम्भोपपत्ति-रिति परिहरति "विचित्र" इति । तदेव स्पष्टयति "यस्य" इति, आतपाक्रान्त्या कामलादिदोषेण च दूषितं नयनमिति यावद्

---

* क्लीव इति यावद् ।

† यथा नपुंसके युगपदाकारद्वयोपलम्भस्तद्वदत्रापि शुक्तिरजतयोर्युगपदुपलम्भ-प्रसङ्गः स्यादित्यर्थः ।

मू०—ष्यैव रजतावभासनम्, अमललोचनस्यैव तु तदभावावभानमित्युपपद्यत एव व्यवस्था, रजतोचितार्थक्रियानुपलम्भश्च तत्सामर्थ्यस्यैवाभावमावेदयेन्न पुनरपरोक्षावभाससिद्धस्यापि रजतस्य ।

विरोधेपि भाव एव किन्नाश्रयणीयः,

अभावावभासाविरोधात्, प्राबल्यात्पराचः प्रत्ययस्येति चेन्मैवं, भावावभासस्यापि पराचो दर्शनाद्, * ।

अस्त्येवास्मादप्यभावावभासः पराचीन इतिचेद्,—न, असञ्जातबाधानामपि† निधनोपलम्भाद् ।

---

टी०—अभाववद् भावस्यापि सत्त्वे तदुचितार्थक्रियापि स्यादित्यत आह "रजतोचित" इति, । अङ्कुरजनने मूषिकाघ्रातबीजवद्-सामर्थ्यमेव स्यान्न पुनरसत्त्वमित्यर्थः,

विरोधमभ्युपगम्यापि दूषयति "विरोधेपि" इति ।

अनाश्रयणे हेतुमाह पूर्ववादी "अभावावभासविरोधाद्" इति ।

विरोधः पूर्वापरयोस्तुल्य एव तत्कथं निर्णय इत्यत आह "प्राबल्याद्" इति । उत्तरभावित्वं भावप्रत्ययस्यापि प्राबल्ये हेतुरस्तीति परिहरति "मैवम्" इति,

---

* यस्य कस्य चित्पूर्वभाविप्रत्ययस्यापेक्षयाऽस्यापि पराक्त्वादिति भाव ।

† यत्र हि विभ्रमोदयानन्तर प्रतिपत्तुर्जिज्ञासाभावो देशान्तरप्रयाण वा देहव्यापत्तिर्वा भवति तत्र तस्य न बाधोऽस्य, इति तत्रासञ्जातबाधस्थले विभ्रमप्रत्ययस्यैव पराक्त्वमिति भाव ।

मू०—यदपि 'शुक्तिशकलमेव कामलादिदूषितलोचनालोचितमर्थान्तररजतात्मनावभासत' इति, तत्र यद्यर्थान्तरता नाम सदन्तरता साऽयुक्ता, नहि सा तत्रैवायुष्मतोप्यभिप्रेता, नचान्यत्र सा युक्ता ।

सा खल्वनुभवाद्वाऽन्यत्र व्यवस्थापिताऽनुपपत्तितो वा, अनुभवोपि रजतावभासो वा भवेद् यदि वा बाधावभासो,ऽन्यो वा, न तावदाद्यः स हीदंकारास्पदं रजतमावेदयति नत्वसन्निहितां तत्सत्ताम्, उत्तरोपि रजताभावमात्रमिहावभासयन्ननुभूयते न पुनरस्यान्यत्रापि सत्तां, न चानुभवान्तरमन्यत्र सत्तामस्यावेदयदावेद्यते, ।

यः पुनरत्यन्तरागान्धीकृतान्तःकरणैरन्तिकावलोकितकान्ताकरकलधौतावभासी कालान्तररजतप्रत्यभिज्ञानुभवः सोपि परिलूनपुनर्जातकुन्तलकलापादाविवात्यन्तसादृश्यादन्यथासिद्धः, स्वप्नावबुद्धनभोभक्षणवद् विभ्रान्तिविषयस्यान्यत्रानुपपत्तेः ।

---

टी०—सदन्तरता किं तत्रैवोतान्यत्रेति विकल्प्याद्यं दूषयति "नहिसा" इति । बाधाभावप्रसङ्गादित्यर्थः । द्वितीयं पक्षं दूषयति "नचान्यत्र" इति, ।

अनुभवाद्वेति पक्षं त्रेधा विकल्प्याद्यं दूषयति "नतावद्" इति । अन्यो वेति न्यूनतापरिहारार्थम् ।

अनुभवान्तरमाशङ्क्य निराकरोति, "यःपुनर," इति, ।

मृ०—अनुपपत्तिर्हि न तावद् रजतावभासस्य, स खल्वव-भासमानमेवालम्बनमन्तरेणानुपपन्नो न पुनरनवभासमा-नामप्यन्यत्र सत्तां, ।

नाप्यसत्ख्यात्यनुपपत्तिरन्यत्र सत्ता बोधिका, तत्सन्नि-धिवद*न्यथासिद्धेः, ।

नापि बाधावबोधस्यान्तरेणान्यत्रसत्तामनुपपत्तिः, स खलु प्रसक्तप्रतिषेधतया प्राप्तिमेव रजतस्यात्राक्षिपेद्, असतश्च तदनुपपत्तौ सत्तामप्यत्रैव न पुनरन्यदेशादौ तत्रानुपयोगाद् ।

---

टी०-किं रजतावभासानुपपत्तिः किं वाऽसत्ख्यात्यनुपपत्तिरुत बाधा-नुपपत्तिरिति त्रेधानुपपत्तिपक्षं विकल्प्याद्यं दूषयति "अनुपप-त्तिर्" इति, । अनुपपत्तिं दूषयति "स खलु" इति, ।

द्वितीयं दूषयति "नाप्यसद्" इति, । रजतस्य पुरोवर्ति-निष्ठत्वमसदेव यथा प्रतीयते रजतमप्यसदेव तथावभासनादिति नान्यत्र सत्त्वसिद्धिरित्यर्थः, ।

तृतीयं दूषयति "नापि बाध" इति, । असतः प्राप्त्य-नुपपत्तेःसत्तापि कल्पनीयेत्यत आह "असतश्च" इति, ।

---

* तत्सन्निधिवद् = रजतनिष्ठपुरोवर्तित्ववद्,

मू०—अथान्यत्राप्यभावे कथमिदमन्यत्रापि न वाध्येत, अत्रैव तु तदपवाधदर्शनादर्थादन्यत्र सत्त्वोपपत्तिरिति चेद्, मैवम्, अप्राप्ततयाप्यन्यत्रावाधोपपतौ तत्र सत्ताध्यवसायायोगाद्, ।

अथ नेदं रजतमितीदंकारास्पदरजततादात्म्यमात्रनिषेधात्मा वाधानुभवो रजतमर्थात्क्वापि परिशिनष्टि, इति, तदपि वाधवृत्तान्तानभिज्ञस्य भाषितं, वाधावबोधो हीदमितिप्रतिपन्नरजतानुवादेन तद्रूपमेव विलापयन्नुपजायते नतु तादात्म्यमात्रं ।

यत्र हि तादात्म्यमात्रनिषेधस्तत्र वनस्पत्योरिव

---

टी०-भवतु नामेह वाधादसत्त्वं तदभावादन्यत्र सत्त्वमेवेति शङ्कते "अथान्यत्र" इति, । अर्थाद् इति=विशेषप्रतिषेधस्य शेषाभ्यनुज्ञापूर्वकत्वादित्यर्थः । अर्थापत्तिमप्यन्यथाऽप्युपपत्त्या दूषयति "मैवम्" इति, ।

नायं रजतस्य वाधः किन्तु तादात्म्यस्य तेनातद्रूपतया रजतमन्यत्रावशिष्यतेऽन्यथेदमिति प्रतीतिप्रयोगयोरनुपपत्तिरिति शङ्कते "अथ नेदम्" इति, । नायमिदन्ताया वाधः किन्तु यदिदं रजतं तन्नेति प्रतिपन्नरजतस्यैव वाध इति परिहरति "तदपि" इति, ।

विनिगमनायां को हेतुरित्यत आह "यत्र हि" इति, ।

मू०-स्यादेवोत्तरक्षणेप्युभयावभासः न*त्विह तथे,तिस्वरूपापवाध एवाध्यवसीयते, ।

न च नेदं रजतमित्ययं वाधावबोध इत्यग्रे निवेदयिष्यामः ।

यदपि 'नेदं रजतमिति वाधावबोधवशादपि नात्यन्तासत्ता रजतस्य' इत्युक्तं, तदपि न साम्प्रतं, तत्रापि न तादात्म्यमात्रनिषेधरूपता वाधावबोधस्य हेतुरूपतां भजते रजतरूपनिषेधात्मतायास्तस्यानन्तरमेवावेदितत्वाद्, ।

---

टी०-यत्र तादात्म्यावभासोऽपरोक्षयोस्तत्र स्यादेवं यत्र परोक्षापरोक्षयोस्तत्र नैवमिति चेन्न, दृष्टान्ताभावाद्,† अपरोक्षस्य परोक्षतादात्म्येच परोक्षताप्रसङ्गादिति भावः ।

नेदमित्यस्य वाधकतामङ्गीकृत्याऽवोचाम, अधिष्ठानयाथात्म्यज्ञानमेव वाधकमित्यनिर्वचनीयख्यातावभिधास्यत इत्याह "नच नेदम्" इति, ।

न रजतस्यात्यन्तिकमसत्त्वं तादात्म्यमात्रप्रतिषेधादित्युक्तमनूद्य दूषयति "यदपि" इति ।

---

* यथा दूरस्थस्य वृक्षयोर्विवेकाग्रहादन्योन्यात्मतारोपे नेदिष्ठ तिष्ठतश्च विवेकग्रहात्तादात्म्याशनिषेधे तत्रैवोत्तरक्षण विविक्तयोर्द्वयोरवभासस्तथेहोत्तरक्षणे तत्रैव विविक्तयोरवभासो न भवति, एवं च तादात्म्यांशनिषेधस्य धर्मिणास्तत्रैवसमनन्तरप्रतीत्या व्याप्तत्वेनात्र च तन्निवृत्त्या तदभाव इति भाव, ।

† परोक्षापरोक्षयोस्तादात्म्यारोपस्यासम्प्रतिपन्नत्वादित्यर्थ, द्वावेतौ नैक इति वदवाधनाच्चेत्यपि द्रष्टव्यम् ।

मू०—यथा च नेदं रजतमित्यस्यैव बाधकताभ्युपगमेपि न रजतस्यात्यन्तिकमसत्त्वं तथा वयं वक्ष्यामः ।

'यद्धि यथा प्रतिभासत' इत्याद्यविरुद्धमेवास्माकम्, 'स चेदिदंकारास्पदतादात्म्यनिषेधात्मोपपन्न, इत्याद्ययुक्तमेव, तादात्म्यमात्रनिषेधपरिशेषप्रसिद्ध्योः प्रागेव प्रतिषिद्धत्वाद्, ।

यत्पुनर् (असंप्रयोगेपि रजतस्य शुक्तिशकलस्यैवानाकलितनिजाकारस्य नेत्रदोषवशादेव रजताकारेणापरोक्ष्यप्रतिभासगोचरताऽभ्युपेयत) इति, तद् अवभासानुसारेण रजताकारानाश्रयणे तदात्मना शुक्तेरप्यपरोक्षप्रतिभासगोचरभावानुपपत्तेरयुक्तम् ।

न खलु स्वरूपसतः संप्रयुक्तस्याप्यसंप्रयुक्तासदाकारे-

---

टी०—तर्हि रजतस्य निषेधादात्यन्तिकमेवासत्त्वमित्यसत्ख्यातिप्रसङ्ग इत्यत आह "यथाच" इति । रजतस्यानिर्वचनीयताभ्युपगमादसत्त्वं न प्रसज्यत इति वक्ष्याम इतिभाव; ।

सामान्यन्यायः पुनरस्माकमनुकूल एवेत्याह "यद्धि" इति,।

अवभासानुसारेण रजताकारानाश्रयणे परोक्षरजतात्मनैव शुक्तेरवभासे तस्याः परोक्षतया प्रतिभासप्रसङ्गात्तदयुक्तमित्यन्वयः।

ननु शुक्तिशकलस्य संप्रयुक्तत्वात्सत्त्वाच्च नासत्ख्यातिर्नाप्यसंप्रयुक्तार्थावभासतया पारोक्ष्यमित्याशङ्क्याह "नखलु" इति,।

मू०—णावभासोऽसत्ख्यातिमतिशेते, सम्प्रयुक्तस्य तु सतोऽप्यप्रतिभासे सत्यकिंचित्करत्वात्, ।

अस्त्येवेदमित्यपि प्रतिभास इतिचेत्—सत्यं तावदेव स्यान्न पुना रजतमित्यपि तस्यासंप्रयोगादसत्त्वाच्च, अथान्तरेणापि रजततत्संप्रयोगौ दुष्टेन्द्रियसंप्रयोगा-

---

टी०—ननु शुक्तिशकलं संप्रयुक्तं सच्चेति तत्राह "संप्रयुक्तस्यतु" इति,।

नच तत्तावद् रजतस्य संस्कारोपस्थापितत्वेन संप्रयोगाभावो न दोषमावहतीति साम्प्रतं, तथासति प्रत्यभिज्ञानवदेव याथार्थ्य-प्रसङ्गाद्, नच दुष्टेन्द्रियसन्निकर्षोपजनितत्वादयथार्थत्वमिति वाच्यं ज्ञानस्य स्वरूपतः सत्यत्वे समीचीनज्ञानवदेव दुष्टेन्द्रियसन्निकर्षोप-जनितत्वायथार्थत्वयोरनुपपत्तेः, तथात्वाभावे तत्रापि कथं संशय-विपर्य्ययोर्ज्ञानव्यवहार इति चेद् न, अनिर्वचनीयाविद्याविवर्तत-या तयोर्मायावादिना विज्ञानत्वानङ्गीकारात् ।

"सदसद्भ्यामनिर्वाच्याविद्या वेद्यैः सह भ्रम"

इतीष्टसिद्धिकारैरङ्गीकरणाद्,—

न चानिर्वचनीयत्वादेव तथाविधघटज्ञानानामपि संशयादितु-ल्यतापत्तिः, ज्ञानानां स्वरूपसत्यत्वेपि तुल्यतापत्तिसाम्यात्, सत्य-त्वेपि दुष्टादुष्टसामग्रीवैषम्येन तद्वैषम्योपगमे मायाविद्याविवर्तत्वेन प्रकृतेपि वैषम्योपपत्तेः, * अनिर्वचनीयत्वसाम्येन च तदभावाभि-धाने सत्त्वाविशेषेण पर्य्यनुयोगस्य समानत्वाद्, घटादिज्ञानानां च तत्त्वावेदनप्रामाण्याभावसाधने सिद्धसाधनत्वाद्, व्यावहारिकबो-धाभावस्य साधने कालात्ययापदिष्टत्वाद् ।

---

* यथा भवन्मतेऽदुष्टसामग्रीजन्यत्वेन ज्ञानस्य यथार्थत्वं, दुष्टसामग्रीजन्यत्वेन चायथार्थत्वं, तथाऽस्मन्मतेपि मायाविवर्त्तत्वेन व्यावहारिकयथार्थत्वम् अविद्याविव-र्त्तत्वेन च प्रातिभासिकत्वमिति तत्त्वम् ।

मू०—दिदंकारास्पदस्य संविदेव रजताकारा जायत इति ब्रूयाद् अहो बतायं महति मोहसागरे निमग्नो यदुत्तरान्वेषणकातरतया महायानिकपक्षानुप्रवेशदोषमप्यात्मनो न चेतयते,—

यदपि—इदमनुमानम्—'विवादपदं रजताकारेणावभासते तदर्थिनो नियमेन प्रवृत्तिविषयत्वाद् यदित्थं तत्तथा यथोभयत्राद्यविवादपदं रजतम्' इति, तदपि इदंकारास्पदस्यानिर्वाच्यरजततावभासगोचरभावाभ्युपगमात् सिद्धसाधनम् ।

अविद्यमानरजतात्मना त्ववभासगोचरताप्रसाधने साध्यविकलता दृष्टान्तस्य ।

वाधोदयसमनन्तरं संजायमानम् 'एतावन्तं कालमिदं रजतमित्यभाद्' इति प्रत्यभिज्ञानमस्मन्मतेपि ना-

---

टी०—"संविदेव रजताकारा" इति । रजताकारा संविदिति किं रजतविषयिणी—किं वा रजताकारैव, नाद्यः, रजतस्यासंप्रयुक्तत्वादसत्त्वाच्चापरोक्षत्वानुपपत्तिरित्युक्तदोषाद् ।

द्वितीये दोषमाह- "अहोबत" इति, । ज्ञानस्य साकारताभ्युपगमात्सुगतमतप्रवेश इत्यर्थः ।

किं रजतात्मना प्रतिभासः साध्यते किं वा विद्यमानरजतात्मना, आद्ये दोषमाह—"तदपि" इति, ।

मू०—नुपपन्नम्, इत्यलमतिप्रसङ्गेन

( इत्यन्यथाख्यातिनिरासः )

केचित्तु—ज्ञानाकारस्यैव बहिरवभासो विभ्रम इत्याहुः, तथाहि—'अत्यन्तासतो गगनारविन्दादेरप्रतिभासमानत्वाद् 'यद् यथा प्रतिभासते तत्तथैव' इत्यौत्सर्गिकान्यथात्वं तु बलवद्बाधकप्रत्ययोपनिपाताद्, नेदं रजतमिति च बाधानुभवस्येदन्तामात्रापवाधनादप्युपपत्तौ न रजतगोचरतोचिता, तथा सति रजतस्य धर्मिणो धर्मस्य चेदन्ताया बाधे गौरवात्, तथा च प्रातिषिद्धेदंकारास्पदभावमर्थादान्तरज्ञानरूपमवतिष्ठते, ।

---

टी०-द्वितीये दोषमाह "अविद्यमान" इति, । "नानुपपन्नम्" इति—अनिर्वचनीयरजतावभासाभ्युपगमादिति भावः ।

( इत्यन्यथाख्यातिनिरासः )

आत्मख्यातिमुत्थापयति - "केचित्तु" इति, आन्तरस्य कथं बहिष्ट्वेनावभास इत्याशङ्क्य परिशेषन्यायेन तदुपपादयितुं भूमिकामारचयति—"तथाहि" इति, बाधकोपनिपातादसत्त्वमेव किन्न स्यादित्यत आह—"नेदम्" इति । भवतु नामेदन्ताप्रतिषेधस्तथापि कथमान्तरत्वं रजतस्येति तत्राह-"तथाच" इति ।

मू०—नचेदन्ताप्रतिषेधे सत्यनिदन्तया बहिरपि व्यव-स्थोपपत्तौ कुतोऽस्य संविदाकारतेति साम्प्रतम्, अति-व्यवधाने सत्यपरोक्षानुपपत्तावश्याश्रयणीयत्वादपरोक्ष-संविदैक्यस्येति।

तदपि न श्रद्धेयं, तथाहि-यत्तावद् अत्यन्तासतः प्रतिभासायोगादिति, तदान्तराकारतायामपि रजत-स्यावश्याश्रयणीयत्वाद् असत्याया एव बाह्यतायाः प्रतिभासस्यायुक्तम्,।

---

टी०-अनिदन्तया देशान्तरेपि तत्सत्त्वसम्भवात्कथं ज्ञानरूपत्वमिति तत्राह-"नचेदन्ता" इति, ज्ञानाकारो रजत संप्रयोगमन्तरेणाप-रोक्षत्वात्*संवेदनवदिति भावः।

तदेतद् दूषयति—"तदपि" इति, तदयुक्तमित्यन्वयः,† तत्र हेतुः—"रजतस्य" इति, रजतस्यान्तराकारतायामपि सत्याम-सत्याया एव बाह्यतायाः प्रतिभासस्याभ्युपेतत्वादनैकान्तिको

---

* घटादेर्व्यवच्छेदायाप्यरलम्-अनुमेयस्य च व्यवच्छेदाय ज्ञातत्वादित्यपहायापरो-क्षत्वादिति।

अत्र सम्प्रयोगो नाम नेन्द्रियसंयोगरूप, असंविद्रूपस्यापि रूपस्येन्द्रियसंयोगम-न्तरेणापरोक्षत्वेनानैकान्त्यात् तत्रापि संविद्रूपत्वस्वीकारे विपक्षाभावेन विशेषण वैयर्थ्यापातात्, अपित्विन्द्रियसन्निकर्षरूपः, तथाचेन्द्रियसन्निकर्षानधीनापरोक्षत्वा दित्येवात्र हेतुशरीरं, तेन नानैकान्तः नापि दृष्टान्ते साधनवैकल्यं, संवेदनस्येन्द्रियस-न्निकर्षमन्तरेणैव स्वतः सिद्धत्वाभ्युपगमादिति दिक्।

† 'तदान्तराकारतायामपि, इत्यव्यवहितपदस्य-'प्रतिभासस्यायुक्तम्, इत्यग्रिमायुक्त-मितिपदेनान्वय,।

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन,व्याकरण,धर्मशास्त्र,साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते

४ काशिकराजकीयप्रधानसस्कृतपाठालयाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयै,र्ब्रह्मदेशीयैः, सिहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं „ „ १ „ ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्यमाणा ग्रन्थाः– मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | (संस्कार) | २ |
| (२) शब्दकौस्तुभ. । भट्टोजिदीक्षितकृतः | (व्याकरणम्) | १८ |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | (मीमांसा) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैत-दर्शनप्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् श्रीनारायणतीर्थे विरचित भाट्टभाषा प्रकाश सहितम् । (सम्पूर्णम्) | (वेदान्तः) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | (ज्योतिषः) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय श्री गागाभट्ट विरचितः | (मीमांसा) | २ |
| (७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्रविरचिता | (मीमांसा) | २ |
| (८) ब्रह्मसूत्र भाष्यम्–वादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । | (वेदान्त) | ५ |
| (९) स्याद्वादमञ्जरी–मल्लिषेणनिर्मिता । | (जैनदर्शनम्) | २ |
| (१०) सिद्धित्रयम्–विशिष्टाद्वैत–ब्रह्मनिरूपणपरम्–श्रीभाष्यकृतां परमगुरु भिः श्री ६ यामुनमुनिभिर्विरचितम् | (वेदान्तः) | १ |
| (११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंग्रहीतः आचार्यचित्सुखमुनिविरचित व्याख्योपेतः | (वेदान्त) | १ |

पत्रादिप्रेषणस्थानम् — कार्याध्यक्षः-हरिदासगुप्तः, चौखम्बा–संस्कृतपुस्तकालयस्य बनारस सिटी ।

मू०—यत्तु यद् यथाप्रतिभासत'इत्याद्यभिहितं तदंशाभ्युपगम एव, यत्पुनर् 'इदन्तामात्रापवाधादपि वाधोपपत्तौ न तस्य रजतगोचरतोचिता गौरवात्' इति, तदप्यसारं, कल्पनायां हि गौरवं दोषो, नचेह रजतापवाधः कल्प्य, इदं रजतमिति प्रतिपन्नरजतानुवादेन नेति तदपवाधात्मनो वाधानुभवस्य स्वयं संविदितत्वाद्, उपपादितश्चायमर्थः प्रागेवेति न पुनः प्रपञ्च्यते, एतेन 'प्रतिषिद्धेदंकारास्पदभावमर्थादान्तरज्ञानाकारमवतिष्ठते' इत्यपास्तम्।

योपि 'अतिव्यवहितस्यापरोक्षतानुपपत्तेरनिदन्तयैव बहिरवस्थानप्रतिषेधः', सोप्यनुकूल एवास्माकम्। यदपि 'अवश्याश्रयणीयत्वादपरोक्षसंविदैक्यस्ये,ति तत्प्रागुक्तन्यायपरास्तं, नचान्यथाऽपरोक्षतानुपपत्तिः, बाह्यतावत्तदुपपत्तेः, ।

---

टी०—हेतुरित्यर्थः, नन्वत्रापि कल्प्यते तत्राह "नचेह" इति, विनिगमनकारणाभावादिदन्तामात्रापवाध एव किन्न स्यादिति न वाच्य तन्मात्रस्यापवाधे रजतस्यान्तरतयावशेषादहं रजतमिति प्रत्ययप्रसङ्गादिति भावः।

"अनुकूलएवास्माकम्" इति—देशान्तरे सत्त्वस्यास्माभिः प्रतिषेधादित्यर्थः।

प्रागुक्तन्यायपरास्तम् इति—बहिष्ठवदसंविदाकारत्वेपि तस्यापरोक्षत्वसम्भवादित्यर्थः।

मू०—एवं च 'संविदाकारो रजतं संप्रयोगमन्तरेणापरोक्षत्वात्संवेदनवद्' इति सव्यभिचारम् ।

तस्मादात्मख्यात्यभ्युपगमोप्यज्ञानमूल एवेति सिद्धम्*

अन्ये † तु अत्यन्तमसन्तमर्थमवभासयन्ती संविदेव विभ्रम इत्याचक्षते, तथाहि नेदमिति बाधावबोधवशादसत्त्वैवात्यान्तिकी रजतस्यावभासते, नचासतो नरविषाणवदप्रकाश इति चतुरस्रं, न खल्वत्र ज्ञेयसामर्थ्यमाद्रियामहे येनैष समस्तसामर्थ्यविरहिण्यसति न स्यादित्युच्येतापि तु स्वप्रत्ययासादितादृष्टान्तासिद्धस्वभा-

---

टी०—प्रयोगं दूषयति—"एवंच" इति, ।

असत्त्वे प्रमाणमाह "तथाहि" इति । न स्वसामर्थ्यादसतः प्रतिभासोऽपि तु ज्ञानसामर्थ्यादिति हेतु माह "नखलु" इति, किमाद्रियत इत्यत आह-"अपितु" इति। नन्वीदृश विज्ञानमन्यत्रानुपलब्धचरमिति तत्राह-"अदृष्टान्तासिद्ध" इति । कारणाभावादेवेदशं विज्ञानमेव न जायत इति तत्राह-"स्वप्रत्यय"

---

* किं चारोपितमान्तर चेद् गुञ्जापुञ्जादौ दहनसमारोपे देहदाहप्रसङ्गः, स यदि ब्रूयादान्तरमपि न वस्तुसत् किन्तर्ह्येतात्त्विकमिति न दाहप्रसङ्गस्तर्हि न सद्बहि सन्नान्तरित्यत्यन्तासद्, अनिर्वचनीयं वा स्याद्, गत्यन्तराभावाद् इति दिक् ।

† असत्ख्यातिमुत्थापयति 'अन्यतु' इति ।

मू०—अभेदं विज्ञानमेवासतः प्रकाशनं, तथाचास्याऽसत्प्रकाशनशक्तिरविद्येति गीयते ।

नरविषाणवदित्यपि साध्यसम एव दृष्टान्तः, तस्यापि तच्छब्दात्प्रकाशमानत्त्वाद्,

अपि चासतश्चेन्न प्रतिभासः कथं तर्हि वाधानुभवो युज्येत, तत्र हि नेदमित्यसद्रूपमेवावभासते, एवं च संभवत्येवासतोपि स्वरूपेणावभासो नतु सद्रू-

---

टी०—इति । प्रत्यय=शब्दः कारणवाची, स्वप्रत्ययेनासादितः=प्राप्तः, अदृष्टान्तसिद्धः स्वभावभेदो येन विज्ञानेन तत्तथा, पूर्वपूर्वविभ्रमवासनातस्तथाविध एवेतरविभ्रमोऽजायतेत्यर्थः† ।

तथापि विषयसंम्बन्धाभावे तदेव तस्य प्रकाशनमन्यन्न भवतीति किं नियामकमिति तत्राह–"तथा च"इति, वस्तुशक्तेरपर्य्यनुयोगान्मायावादिभिरप्यविद्यावशादलीकप्रतिभासाभ्युपगमादिति भावः ।

दृष्टान्तोपि साध्यविकल इत्याह– " नरविषाणवद् " इति, क्वानुपपत्तिरिति तत्राह– " तत्र हि " इति, वाधकप्रत्ययेऽसद्रूपेण प्रतीयते नतु सद्रूपेण, ।

---

† यद्यप्यधिपति–सहकार्य्या,लम्बन–समनन्तरात्मकेभ्य· प्रत्ययेभ्यश्चतुर्भ्यश्चित्तचैत्ता· समुत्पद्यन्त इति, हि सौगतस्थितिस्तथापि भ्रान्तिस्थले स्वालम्बनप्रत्ययस्यासत्त्वात् तत्सयुक्तस्याधिपतेश्चक्षुरादेस्तत्सहकारिणश्चालोकादेरप्यभावाच्च केवल समनन्तरप्रत्ययलक्षणपूर्वविज्ञानमात्रात्स्वभाववैचित्र्यवशाद्विज्ञानमुत्पद्यते स्मृतिज्ञानमिवान्तरेण विषय सामग्रीमात्रप्रयोज्यमिति भाव· । चित्त = ज्ञान = चैत्ताः = सुखादयः, अधिपति = चक्षुरादीन्द्रियम्, सहकारी = आलोक , आलम्बन = घटादिकम्,समनन्तर प्रत्यय· = पूर्वज्ञान वासनारूपम्,

मू०—पेणेत्यपि युक्तं, यस्मात्सदाकाराकलितस्यैव रजतस्य तत्त्वतोऽसद्रूपता बाधधिया बोध्यते, ।

यथाप्रतिभासमर्थसद्भावे च भ्रान्तिबाधानुपपत्तौव वश्याश्रणीये*सत्यन्तासत एवांशविशेषस्यारोपणीयभावे प्रद्वेषमात्रनिबन्धनोयमसत्ख्यात्यनङ्गीकार इति ।

तदेतद् बालविभीषिकामात्रमिति मतिमन्तो मन्यन्ते, तथाहि—यत्तावद् 'बाधावबोधादसत्त्वैवावभातरजतस्यावेद्यते' इति, तद् नेदं रजतमित्यभावबोधस्य लौकिकपरमार्थरजताभावविषयतया बाधकभावोपपादनेन पराकरिष्यामः ।

यदपीदमुदितम्—'अन्तरेणापि ज्ञेयसामर्थ्यमखिलोपाख्याविरहिण्यसति विज्ञानमेव स्वप्रत्ययासादितादृष्टान्तसिद्धस्वभावभेदमुपजायते तस्य चासत्प्रकाशनश-

---

टी०-सद्रूपेण च भ्रमे रजतमवभासत इत्याशङ्क्याह-"एवं च" इति । बाधानुपपत्त्याप्यसतः ख्यातिरङ्गीकरणीयेत्याह- "यथा" इति । तत्—पराकरिष्याम इत्युत्तरेणान्वयः ।

---

* सप्तम्यन्तस्यास्य आरोपणीयभावे इत्यमिमेणान्वय,

मू०—क्तिरविद्येति गीयत' इति, ।

तत्रेदमभिधीयताम्—यासावसत्प्रकाशनशक्तिर्विज्ञानवर्तिनी किमस्याः शक्तेः शक्यमिति, ।

यद्यसदेवेति मतं, किमेतत्कार्य्यमाहोस्विज् ज्ञाप्यं, न तावत्कार्य्यम्, असतस्तत्त्वानुपपत्तेः, प्रकाशनशक्तिताव्याघाताच्च, नापि प्रकाश्यं, प्रकाशान्तरानुपलम्भाद्, अनवस्थापाताच्च, विज्ञानस्व-

---

टी०—एतद्विकल्प्य निराकरोति— "किमेतद्" इति । तत्त्वानुपपत्तेः=कार्य्यत्वानुपपत्तेः । दूषणान्तरमाह— "प्रकाशनशक्तिता" इति, । असतो जन्यत्वे तज्जननशक्तिरेव विज्ञानस्य स्यात् न प्रकाशनशक्तिरित्यर्थः । *

'नापि' इति,—इदं रजतमिति भ्रमव्यतिरेकेण तज्जनितासद्विषयभ्रमान्तरस्यानुपपन्नत्वादिति भावः । दूषणान्तरमाह— "अनवस्थापाताच्च" इति । द्वितीयभ्रमस्वीकारेपीतरनिष्ठप्रकाशनशक्त्यङ्गीकारेपि तत्रापि प्रकाशान्तरमित्यनवस्थेत्यर्थः । †

भ्रमनिष्ठशक्तेर्न ज्ञानान्तरं शक्यमपि तु स एव भ्रमस्तेन नानवस्थेति शङ्कते— "विज्ञानस्वरूपम्" इति । एकस्यैव जन्यजनकत्वप्रकाश्यप्रकाशकत्वविरोधादित्यर्थः । मास्तु तर्हि शक्यमित्यत

---

* प्रमाणस्य व्यञ्जकत्वेन प्रमेयोत्पादकत्वस्यायुक्तत्वादिति भाव ।

प्रकाश्यमिति कोर्थं एतज्जनितज्ञानस्य विषय इति, तथा च यदनया शक्त्या जन्यं ज्ञान तत्किं ज्ञानान्तरम् आश्रयभूतमेव वा, माद्य.—असज्ज्ञानमन्तरेण द्वितीयज्ञानानुपलब्धेर, उपलब्धौ वाऽनवस्थानाच्चेत्यर्थः ।

मू०—रूपमेवासतः प्रकाश इति चेद्, न तर्ह्यसौ स्वाश्रयायाः शक्तेः शक्यभावं भजते *, नचान्तरेण शक्यं शक्तिर्युक्तिमती,†

अथापि स्वप्रत्ययासादितो विज्ञानाद्वय एवासतः प्रकाश इति चेत्—कः पुनरेष सदसतोःसंबन्धः‡,असदधीननिरूपणत्वमसता सतो ज्ञानस्य संबन्ध इति चेद्, अहो वतायमसत्यप्यस्य निरूपणमायतत इति महान् व्यामोहः, ।

---

टी०-आह— "नचान्तरेण शक्यम्" इति । शक्तिरपि मा भूद्§ विज्ञानमेवासतः प्रकाश इति शङ्कते— "अथ" इति । असत इति षष्ठी संबन्धे वचनीया स चात्र दुर्निरूप इति परिहरति— "कःपुनर्" इति । पृष्टं मत्वोत्तरमाह पूर्ववादी—"असदधीन" इति। परिहरति— "अहोवत" इति । सर्वोपाख्याविरहिणि निरूपकत्वमपि न संभवतीति भावः ।

---

* नह्येकदैकस्यैव सिद्धतया शक्त्याश्रयत्वमसिद्धतया च तद्विषयत्वं सम्भवति, युगपदेव सिद्धत्वासिद्धत्वविरोधादिति भाव ।

† शक्तिः कस्य कुत्रेति शक्तशक्यनिरूपणाधीननिरूपणत्वाच्छक्यं विना शक्तेरङ्गीकारायोगादित्यर्थः ।

‡ ननु न शून्यवादिना विज्ञानसत्त्वमभिप्रेयते तत्कथं सदसतोरित्याक्षेप, इति चेदत्राहुः- शून्यवादिविशेषोऽय, का तर्हि शून्यवादिता विज्ञेयस्य सर्वथा शून्यत्वाङ्गीकाराद् योगाचारेण हि बहिः शून्यता वेद्यस्याङ्गीकृताऽनेन त्वन्तरपीति ततो विशेष,।

§ नास्माभिः शक्तिरभ्युपेयते येनाश्रयविषयसापेक्षा सा विषयाभावे न भवेदित्याशङ्क्येत, किन्तर्हि विज्ञानमात्रमेव, तस्य च तथाविधमेव रूपं कारणविशेषादाहितं यत् परित्यक्तशक्तिकस्यापि तदसत्प्रकाशो भवतीति भावः ।

मू०—नचान्तरेणानुषङ्गमास्ति सम्भवो निरूप्यनिरूपकभावस्य * गोत्वादयो हि खण्डादिभिरनुषक्ता एव निरूप्यन्ते, नचासतोऽनुषङ्गान्तरमस्तीति कथमिदं तदधीननिरूपणं विज्ञानं, नचासति प्रत्ययः किञ्चिदाधत्ते येनायं तदीयः स्याद्, असत आधारत्वानुपपत्तेः ।

---

टी०—असतो निरूपणनिषेधकत्ववद्विज्ञाननिरूपकत्वमपि किन्न स्यादित्यत आह— "नचान्तरेण" इति । मायावादिनाऽसतोऽनिर्वाच्यत्वाभ्युपगमेन निरूपणसंभवाद्, भवता तदनभ्युपगमाद्,-मूलसंबन्धाभावाच्चेति भावः ।

मूलसंबन्धगर्भएव निरूप्यनिरूपकभाव इत्युदाहरणेन साधयति "गोत्वादयोहि" इति । अस्तु, तर्हि मूलसंबन्ध इति तत्राह— "नच" इति । अनुषङ्गान्तरं=संबन्धान्तरं निरूप्यनिरूपकभावातिरिक्तं । संबन्धान्तरमन्तरेण ज्ञानज्ञेययोरिव निरूप्यनिरूपकभावादि किन्न स्यादित्यत आह— "नचासति" इति । ज्ञातता वा ज्ञानप्रतिबद्धहानादिव्यवहारयोग्यता वा घटादिषु ज्ञानेन जन्यत इति मूलसंबन्धोस्ति तद्वदसति नास्तीत्यर्थः ।

तेन विना निरूपणाभाव † एव संबन्ध इति शङ्कते,—

---

* सबद्धयोर्हि निरूप्यनिरूपकभावो दृष्टो नाऽसबद्धयो, नहि जातु कलधौतकलधवलिम्ना तालफलकालिमा निरूप्यमाणो दृष्टचर इत्यर्थः ।

† अयमसदनुभव इत्यसता विना नानुभवो निरूप्यत इति तेनाविनाभावः संबन्धोऽभ्युपेय इति शङ्कितुराकूतम् ।

मू०—अथाऽप्यसदन्तरेण प्रत्ययो न प्रथत इति मन्येत, अहो महानस्य प्रमादो यदसावतदुत्पत्तिरतदात्मा च प्रत्ययस्तदविनाभूत*इत्यभिधत्ते, तस्मादत्यन्तासतः प्रकाश इति निरर्थिका वाचोयुक्तिः।

यत्पुनर्नरविषाणदृष्टान्तोपि साध्यसम एव तस्यापि तदभिधानादवभासमानत्वादिति, तदप्यप्रेक्षकाभिधानम्,—अनाद्यविद्याविनिर्मितालीकाकारविकल्पविज्ञानोदयमन्तरेणाखिलसामर्थ्यविरहिणोसतस्तत्र तत्र प्रकाशगोचरभावानिरूपणात्।

---

टी०—"अथापि" इति। सदसतोस्तादात्म्यतदुत्पत्त्योरभावेन नाविनाभाव इति परिहरति— "अहोमहान्" इति।

---

* "स्वभावप्रतिबन्धे हि सत्यर्थोऽर्थं गमयेत्, तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात्, स च प्रतिबन्धः साध्येर्थे लिङ्गस्य वस्तुनस्तादात्म्यात् साध्यार्थादुत्पत्तेश्च, अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात्, ते च तादात्म्यतदुत्पत्ती स्वभावकार्य्ययोरेवेति ताभ्यामेव वस्तुसिद्धि'" इति न्यायबिन्दुकृता सौगतकीर्तिनाभिहितत्वाद् अतदुत्पत्तेरतदात्मनश्चाविनाभावासम्भवान्नातदुत्पत्तिरतदात्मा च प्रत्ययस्तदविनाभूत इतिभावः।

अत्रेदं बोध्यम् अनुपलब्धि', स्वभाव', कार्य्यं चेति त्रिविधोह्यविनाभाव' सौगतसमयेऽभ्युपगत', तत्रानुपलब्धिरर्थाभावावेदिका यथा यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोसद्व्यवहारविषय., स्वभाव.-यथावृक्षोय शिंशपात्वाद्, कार्य्यं-यथाऽग्निरत्र धूमादिति, तदिह ज्ञानस्यासल्लक्षणार्थबोधकस्वाभाव्यादनुपलब्धिता दूरापेता, सदसतो स्वभावस्वभावित्वाभावाच्च न स्वभावाविनाभाव', विज्ञानस्यासदुत्पत्त्यभावाच्च न कार्य्यकारणभाव इति।

मू०—तथाच "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति तद्विदः ।

प्रकाशगोचरभावेपि नायमपरोक्षप्रतिभासगोचरः, यथोक्तं—"नहि नरि शृङ्गं भाति गवीव" इति ।

यदपि—असतश्चेद् इत्याद्यभिहितं, तदप्यशोभनं, न खलु नेदं रजतमित्यपि निरुपाख्यगोचरं प्रत्ययमा-

---

टी०—अनाद्यविद्याविनिर्मितं च तदलीकाकारविकल्पविज्ञानं च इति 'अनाद्यविद्याविनिर्मितालीकाकारविकल्पविज्ञानं, तदुदयमन्तरेणेति यावद् ।

ननु विकल्पस्यापि तद्विषयत्वे तुल्यो दोष इत्याशङ्क्य विकल्पलक्षणपरं पातञ्जलं सूत्रं पठति— "तथाच" इति, वस्त्वनवगाही विकल्पो न पुनर्वस्त्ववगाहीत्यर्थः *

असन्न प्रतिभासत इत्यत्रासतः प्रतिभासाभावेऽपार्थकनिग्रहः † प्रयुक्तपदानां संभूयार्थप्रत्ययजनकत्वात्-प्रतिभासे च स्ववचनव्याघात इत्याशङ्क्य प्रकारान्तरमाह—"प्रकाशगोचर" इति ।

बाधानुभवस्यापि निरुपाख्यगोचरत्वानङ्गीकारान्न तेन 'रजतस्यासत्त्वसिद्धिरित्याह— "नखलु" इति । तर्हिकथमभ्यु-

---

* शब्दप्रयोगश्रवणमात्रजन्योऽभिधेयवस्त्वनवगाही प्रमाभ्रमविलक्षणश्चित्तवृत्तिविशेषो विकल्प इत्यर्थः ।

† अत्रापार्थकपदेन वाच्यार्थशून्यत्वं विवक्षितार्थबोधाजनकत्वरूपं वा निरर्थकत्वं विवक्षितं, नन्वसन्न प्रकाशत इत्यत्रासत्पदस्य बोधकत्वाभावेपि पदान्तराणां बोधकत्वात् कथमपार्थकतेति शङ्कायामाह "प्रयुक्तपदानां संभूयार्थप्रत्ययजनकत्वाद्" इति, ।

मू०—चक्ष्महे येनैष सिद्धवदुदाह्रियेत, अनाद्यविद्याविलासस्यैव सोपाख्यतया ज्ञानाभिधानार्हस्याऽभावप्रत्ययगोचरताभ्युपगमाद् ।

यदपि च 'एवं च संभवत्येव' इत्यभिधायि तदप्यभद्रम्, अवभातरजताभावगोचरताप्रतिषेधादभावविज्ञानस्य

यदपि—'यथाप्रतिभासम्' इत्याद्यभाणि तदप्यन्तरेणापि यथावभासमर्थसद्भावमनिर्वाच्याभ्युपगमेनासत्ख्यात्यनङ्गीकारेणैव भ्रान्तिंवाधोपपत्तिरनन्तरमेवाभिधास्यत इत्यसुन्दरम्, अतोऽसत्ख्यातिपक्षोप्युपेक्षणीय एव परीक्षकैरिति सिद्धम् ।

---

( इत्यसत्ख्याति निरासः )

---

टी०—पगम्यत इति तत्राह—"अनादि" इति, नेदं रजतमित्यभावप्रत्ययस्य परमार्थरजताभावविषयत्वेन विभ्रमावभातरजताभावविषयत्वाभावादित्याह— "अवभात" इति ।

अर्थापत्तिमनूद्यान्यथाप्युपपत्या दूषयति— "यदपि" इति, ।

( इत्यसत्ख्याति निरासः )

---

मू०—आचार्य्याः पुनरनिर्वचनीयार्थावभासं विभ्रममाचक्षते ।

केयमनिर्वचनीयता नाम, न तावन् निर्वचनानर्हतैव मूकीभावप्रसङ्गाद् * नापि सदसत्प्रकारविलक्षणतेति, विकल्पासहत्वात्—तथाहि—इदं तावद् भवान् पृष्टो व्याचष्टां—किमेकैकप्रकारविलक्षणत्वमनिर्वाच्यत्वम्, उतोभयप्रकारविलक्षणतेति, तत्र यद्याद्यः सोप्यनुचितः, सत्प्रकारवैलक्षण्ये सत्यसतः, असत्प्रकारवैलक्षण्ये च सतोऽनिर्वाच्यतापातात्, नापि द्वितीयः पक्षः साधीयान् एकैकस्याप्युभयवैलक्षण्योपपत्तेरनिर्वाच्यतापातात् ।

अथ यथोभयाक्षिविरहेप्यन्धलक्षणे न काणस्याप्यन्धतापातस्तथेहाप्युभयप्रकारवैलक्षण्येप्यनिर्वाच्यलक्षणे नैकैकस्यानिर्वाच्यताप्रसङ्ग इत्यभिधीयेत,

---

टी०—ननु या शब्दात्प्रतीयते सैवेति तत्राह— "नतावत्" इति । "एकैकस्य" इति, सतोऽसतश्च सद्रूपत्वे सत्यसद्रूपत्वाभावादनिर्वाच्यता स्यादित्यर्थः ।

दृष्टान्तवलेन शङ्कते— "अथ यथा" इति । उभयाक्षिविरहे=उभयाक्षिसत्त्वाभावे, ।

---

* उपलक्षण चैतद्-अनिर्वचनीयतेतिपदेनैव निरुच्यमानत्वाद् वदतो व्याघातइतरस्यापि, ।

मू०—अथ तत्राप्युभयाक्षिविरहश्चेदन्धलक्षणं कस्मात्पुनः काणोप्यन्धो न स्याद्।

अथ नास्त्यत्र लौकिकप्रयोग इति ब्रूयाद्, अहो नु खल्वयं महानुभावो लोकप्रयोगमेव प्रमाणी कुरुते, तत्किं नानामनिजनसाधारणमपि कुण्डमगस्त्यकुण्डमित्याख्यायमानम् इन्दीवरादिसाधारणे * च नीराभिजनने तामरसमेव नीरजाह्वं नाभिजानाति।

यदि चायं लोकप्रयोगश्रद्धाजडस्तर्ह्यस्तु नामैकैकेक्षणविरहावच्छिन्न एवोभयेक्षणविरहो लक्षणान्तरमन्धेपि,

अथात्राप्येकैकप्रकारवैलक्षण्यावच्छिन्नोभयप्रकारवैलक्षण्यं लक्षणमाश्रीयते तन्नातिप्रसङ्गाऽप्रसङ्गावित्यभिधीये-

---

टी०—यदि तदेव लक्षणं तदा काणस्याप्यन्धता स्यादेवेति परिहरति—" अथ तत्रापि " इति,

गूढाभिसन्धिरुत्तरमाह— "अहो नु खलु" इति। लोकप्रयोगस्य प्रमाणत्वे को दोष इत्यत्राह— " तत्किंनाना " इति,। कुण्डं=सरः,।

तथापि काणेऽन्धशब्दप्रयोगाभावस्य कः परिहार इति तत्राह— "यदि च" इति,। अतिप्रसङ्गः=अतिव्याप्तिः, अप्रसङ्गः=अव्याप्तिः,

---

* इन्दीवर = नीलोत्पलम्, तामरसम् = पद्मम्,।

मू०—न, स्यादेतदेवं यद्येतादृशं वस्तु प्रमाणपद्धतिमध्यास्ते।

यद्युच्येत—अस्त्येव प्रमाणमर्थापत्तिः; तथाहि—नात्यन्तासतो नरशृङ्गादेरवभासो नाप्यत्यन्तसतश्चिदात्मनो बाधगोचरता, तदिहोभयान्यथानुपपत्त्योभयविलक्षणता रजतादेरावेद्यत इति;

हन्तासद्विलक्षणस्याबाधः सद्विलक्षणस्य चाप्रतिभास इत्युभयविलक्षणत्वेपि कस्मान्नानुपपत्तिः,।

स्यान्मतं—सदसत्त्वे बाधाभावाप्रतिभानप्रयोजके न पुनरसत्सद्वैलक्षण्ये इति, तदपि वार्त्तं * नियामकानुपलम्भाद्,।

---

टी०—अवभासः=अपरोक्षतयावभास इति यावद्.

उभयान्यथानुपपत्त्या- इति नार्थापत्तिद्वयं किन्तु ज्ञायमानत्वे सति बाध्यत्वान्यथानुपपत्तिरेकैव,।

सदसद्विलक्षणत्वेपि ख्यातिबाधयोरनुपपत्तिस्तुल्येति परिहरति पूर्ववादी—" हन्त " इति।

सदसद्वैलक्षण्ययोः प्रयोजकत्वानङ्गीकारान्नोक्तदोष इति सिद्धान्ती शङ्कते—" स्यान्मतम् " इति,।

---

* वार्तम् = फल्गु, तुच्छं, निस्सारमिति यावद्।

मू०—अनुभवविरोधाच्चायुक्तोऽनिर्वाच्याभ्युपगमः, तथाहि-सदिदं रजतमिति पूर्वानुभवो नेदमित्युत्तरश्चाऽसत्तावलम्बी सदसद्विलक्षणतायां विरुध्येते ।

एतेनान्यथैवोपपत्तिः ख्यातिबाधयोरुक्ता, ।

अपि च सदसद्विलक्षणतायां रजतस्यानाद्यनन्तत्वे सर्वदोपलम्भादबाधापत्तेः कादाचित्कतायांतु कारणं वाच्यम् ।

अथाविद्यैव कारणमिति ब्रूयात्—, तदप्यनुपपन्नम्—, अविद्या हि विद्याभावो मिथ्याज्ञानं वा नचोभयं कस्याप्युपादानकारणभावं भजते, द्रव्यस्यैव तत्र तत्र तद्भावोपलम्भाद्, अद्रव्यत्वाच्चाभावमिथ्याज्ञानयोः ।

---

टी०—भवतोपि नियामकाभावस्तुल्य इत्याशङ्क्य सदसत्त्वयोः प्रयोजकत्वेऽनुभवविरोध इति विशेष इत्याह—"अनुभवविरोधाच्च" इति,

अस्तु तावता किमभिहितं दूषणमर्थापत्तेरिति तत्राह-"एतेन" इति,

रजतमनादि सादि वेति विकल्प्याद्यं दूषयति— " अपिच " इति, भावस्यानादित्वेऽनन्तत्वमपि सिद्ध्यतीत्यनाद्यनन्तत्वमुक्तं,— " सर्वदोपलम्भाद् " इति । प्रतिभासमात्रशरीरतया निलीनावस्थानाभावेन सर्वदोपलम्भप्रसङ्ग इत्यर्थः । द्वितीयं दूषयति— " कादाचित्कतायाम् " इति

अविद्यां विकल्प्य दूषयाति—" तदप्यनुपपन्नम् " इति ।

तद्भावोपलम्भात्=उपादानकारणत्वोपलम्भाद्,

सू०—अथाभावाद्यतिरेकिण्यनाद्यनिर्वाच्याविद्यारजताद्युपादानमित्युच्येत, तदपि मनोरथमात्रम्, एतादृश्या अविद्याया एव निखिलप्रमाणविकलतया गगनकमलकल्पत्वात्, तस्मादनिर्वाच्यार्थावभासो विभ्रम इत्यप्ययुक्तमेवेति सिद्धं ।

तत्र प्रतिविधीयते—यत्तावत् निर्वचनानर्हतैवानिर्वाच्यतेत्यभ्यधायि तत्रानभ्युपगम एव, ।

यत्तु नापि सदसत्प्रकारविलक्षणता इत्यादि तत्र यद्यप्येकैकप्रकारवैलक्षण्योभयप्रकारवैलक्षण्ययोरस्ति व्यभिचारस्तथाप्येकैकप्रकारवैलक्षण्याऽवच्छिन्नोभयप्रकारवैलक्षण्यस्य लक्षणभावे न कञ्चन दोषं पश्यामः ।

यत्पुनरत्राभिहितं—'नैतादृशंवस्तु प्रमाणपद्धतिमध्यास्ते' इति तदप्यवद्यम् अस्त्येव खल्वर्थापत्तिः,

---

टी०—निराकरोति—" तदपिमनोरथमात्रम् " इति । अविद्यायामेतादृशत्वस्य प्रमाणशून्यतया गगनकुसुमवदसत्त्वादित्यर्थः । अन्यथा यथाश्रुतप्रयोगे * हेतोराश्रयासिद्धिराश्रयहीनता च दृष्टान्तस्य कः परिहरेत्, ।

" तथापि " इति, सत्त्वानधिकरणत्वे सत्यसत्त्वानधिकरणत्वे सति सदसत्त्वानधिकरणत्वमनिर्वाच्यत्वं, सदसत्वानधिकरणतामात्रस्य सदसतोरेव व्यभिचारादित्यर्थः ।

---

* यथाश्रुतप्रयोगे = अभावातिरिक्तानाद्यनिर्वाच्याविद्या, मनोरथमात्र, निखिलप्रमाणविकलत्वात्, गगनकमलवत्, इति प्रयोगे पक्षस्यैवासत्त्वेनाश्रयासिद्धिरित्यर्थः ।

मू०—तथाहि नात्यन्तासतो नरविषाणस्य प्रतिभासगोचरता, नाप्यत्यन्तसतश्चिदात्मनो वाधसम्भवः तदिहोभयाऽन्यथानुपपत्त्योभयविलक्षणता रजतादेराश्रीयत इति ।

यत्त्विदं गदितम्—असद्विलक्षणस्यावाधः सद्विलक्षणस्य चाप्रतिभास इत्युभयविलक्षणत्वेपि कस्मान्नानुपपत्तिः' इति, तदबुद्धिपर्वाभिधानं, सदसत्त्वे हि वाधाभावाप्रतिभानप्रयोजके न पुनरसत्सद्वैलक्षण्ये, कः पुनर्नियामक इति चेद्, गौरवोपपत्त्यन्तराभावप्रसङ्गाविति वदामः,

तथाहि—असद्वैलक्षण्यस्याऽसदधीननिरूपणस्यावाधप्रयोजकताभ्युपगमे भवति गौरवं न पुनः सन्मात्रस्य, तथा सद्वैलक्षण्यस्य सदधीननिरूपणस्याप्रतिभासप्रयोजकभावे।

नेयं विधान्तरेणापि ख्यातिरुपपादयितुं शक्या,

---

टी०—गौरवं तावद् दर्शयति—“तथा हि” इति, । प्रयोजकभावे—बुद्धिगौरवमित्यन्वयः*

ननु भवत्पक्षेपि व्यतिरेके गौरवमेव सद्विलक्षणत्वस्यैव वाध्यत्वप्रयोजकत्वादसद्विलक्षणस्य च भानप्रयोजकत्वादित्याशङ्क्योत्तरमाह— “नेयम्” इति, ।

---

* यद्यपि पूर्वं गौरवमित्येवोपात्तं तथापि तत्र गौरवपदं कल्पनागौरवापरपर्य्यायबुद्धिगौरवपरमित्युन्नेयम् ।

मू०—शक्या त्वसन्मात्रस्याभानप्रयोजकभावे सन्मात्रस्याबाधप्रयोजकभावे सदसत्प्रकारवैलक्षण्यलक्षणाविधान्तराश्रयणेन सोपपादयितुं, तदुपपादनाय चायुष्मतोपि प्रयत्नस्तदलमलीकनिर्बन्धेन ।

यश्चायमनुभवविरोधः—'सदिदं रजतमिति पूर्वानुभवो नेदं रजतमित्युत्तरश्चासत्तावलम्बी सदसद्विलक्षणतायां विरुध्येत' इत्यभिहितः, नायमप्यस्ति, ।

---

टी०—अयमभिसन्धिः * सत्यमुभयत्र कल्पने गौरवं तथापि सदसद्वैलक्षण्ययोरभानाबाधप्रयोजकत्वे सदसद्रूपत्वेन ख्यातिबाधयोरुपपत्तिर्वचनीया सा चानुपपन्ना,—तयोरेकोपाधौ विरोधात्—नच देशान्तरसत्त्वेनात्रासत्त्वेन च तयोरुपपत्तिः, देशान्तरसत्त्वस्य सतोऽपि चात्मापरोक्षत्वस्य प्रमाणाभावेन सम्प्रयोगाभावेन च पूर्वमेव निराकृतत्वाद्, सदसत्त्वयोस्तु प्रयोजकत्वे सद्विलक्षणत्वाद् बाधोसद्विलक्षणत्वाच्च ख्यातिरिति भवति ख्यातिबाधयोरुपपत्तिः, तेन तयोरेव प्रयोजकत्वमाश्रयणीयमिति, ।

तर्हि कथमुपपादयितुं शक्यत इति तत्राह—" शक्या तु " इति, तदुपपादनं मा भूत् को विरोध इति तत्राह— " तदुपपादनाय च " इति, ।

---

* नन्वबाध्यत्वे सत्त्वं प्रयोजकमप्रतिभाने चासत्त्वं प्रयोजकमित्यङ्गीकुर्वता त्वया सद्वैलक्षण्यं बाध्यत्वे प्रयोजकमसद्वैलक्षण्यं प्रतिभासे प्रयोजकमित्यभ्युपेयं, तथा च यथा मन्मते गौरवं तथा त्वन्मतेपि व्यतिरेके तत्समानम् एवं च समाने गुणदोषत्वे किमित्यन्यतरपक्षेऽभिनिवेश इत्याशङ्कायामाह—'अयमभिसन्धिः' इति, ।

मू०—तथाहि शुक्तिकेदन्तासंसर्गवत् तत्तासंसर्गस्याप्यनिर्वाच्यस्यैवावभासनाद्* अन्यस्याश्च रजतसत्ताया अनुपलम्भान्न विरुद्धः प्राचीनोऽनुभवः,

केचित्तु† परमार्थसत्त्वं ब्रह्मणो, मायोपाधिकमर्थक्रि-

---

टी०—पूर्वानुभवविरोधं तावत्परिहरति—"तथाहि" इति,। इदन्तया प्रतीयमानमपि रजतं वस्तुतोऽनिदम्भूतमेव देशान्तरे सदित्यन्यथाख्यातिस्वीकारे यथा नानुभवविरोधः अधिष्ठानेदन्तासंसर्गस्य चालीकस्य प्रतीयमानत्वादिदन्ताद्वयस्याभावाद्, एवमस्मन्मतेऽप्यधिष्ठानसत्तासंसर्गोऽप्यलीक एवावभासते तेन नानुभवविरोध इत्यर्थः,।

अपरोक्षतयावभासमानत्वादत्यन्तासत्त्वे च तदनुपपत्तेर्बाध्यत्वाच्च सत्ताऽनुपपत्तेरिदन्तासंसर्गोऽप्यनिर्वचनीय इति मन्तव्यम्,।

ननु सत्तान्तरमेवावभासत इति तत्राह—"अन्यस्याश्च" इति,। तत्र प्रतीतरजतस्य देशान्तरे सत्ताया निषेधादिदं शुक्तिसत्त्वमिदं च रजतसत्त्वमिति सत्त्वान्तरस्याप्रतीतिरित्यर्थः,।

विवरणाचार्यमतेन पूर्वानुभवविरोधं परि हरति—"केचित्तु" इति, मायोपाधिकस्य स्वरूपं दर्शयति—"अर्थक्रियासाम-

---

* यथा अपुरोवर्तिनोऽपि रजतस्य पुरोवर्त्यधिष्ठानारोपात्पुरोवर्तित्वप्रतिभासस्तथा सदिलक्षणरजतस्य सदधिष्ठाने समारोपितत्वात् सद्बुद्धिबोध्यत्व न पुन. सत्त्वादिति भाव.,

† ननु शुक्तिगतेदन्ताया इव तद्गतसत्ताया रजते प्रतीत्यभ्युपगमेऽन्यथाख्यात्यापत्तिरित्याशङ्क्य सदिदं रजतमिति प्रातीतिकं सत्त्वमनुभूयते, पारमार्थिकव्यावहारिकसद्वैलक्षण्यं चानिर्वचनीयत्वमभ्युपेयत इति नान्यथाख्यात्यापत्तिरित्याशयेनाह 'केचित्तु' इति,

सू०—यासामर्थ्यलक्षणमम्बरादेः, अविद्योपाधिकं रजतादेः, इति सत्तात्रैविध्यमङ्गीकुर्वाणाः परमार्थसद्वैलक्षण्याभिप्रायेण चानिर्वाच्यलक्षणमाश्रयन्तोऽनुभवविरोधं पराकृतवन्तः, साधीयानेवायमपि समाधिः ।

अथैवमप्यस्त्येवोत्तरानुभवविरोध इत्युच्येत, श्रूयतामवधानेन राद्धान्तरहस्यमायुष्मता—नेदं रजतमित्ययं कालत्रयेपि लौकिकपरमार्थरजतप्रतियोगिनीमताऽसत्ताप्रतिभासोऽवलम्बते तत एव प्रतिपन्नं मिथ्यैव रजतमिति परामृश्यते ।



टी०—र्थ्यलक्षणम्'' इति, । स्वाश्रयमव्यामोहयन्ती विपरीतप्रवृत्तिहेतुर्माया, स्वाश्रयं व्यामोहयन्ती तथाविधैवाविद्येतिभेदः, अंबरादेः शुक्तिरजतादेश्च सत्त्वे कथमनिर्वाच्यत्वाभ्युपगम इति तत्राह— " परमार्थसद्वैलक्षण्य " इति, ।

उत्तरानुभवविरोधमुत्थाप्य दूषयति—" अथैवम् " इति, । नेदमित्यवभासस्य परमार्थरजताभावविषयतया नानुभवविरोध इत्यर्थः, तत्र प्रतीतरजतस्य तर्हि बाधाभावादवस्थानमेव स्यादित्यत आह— " ततएव " इति, । रजतस्याविद्योपादानत्वादधिष्ठानतत्त्वावबोधेनोपादानाविद्यानिवृत्तौ तन्निवृत्तिरिति रजतं मिथ्येति परामृश्यते तेन न तस्यावस्थानप्रसङ्ग इत्यर्थः, परामर्शमेवाभिनयेन दर्शयति—" मिथ्या " इति, ।

मू०—नच वाच्यं लौकिकस्यातप्रसक्तस्य प्रतिषेधो रजतस्य न युज्यत इति, रजताभासप्रङ्गस्यैव तत्प्रतिषेधनिमित्तत्वाद्, न खलु यद् यत्र साक्षाद्विज्ञानप्रसाञ्जितं तत्र तत्प्रतिषेधो युक्तिमान्, अतिप्रसङ्गाद्,*

विभ्रान्तिमात्रप्रसक्तस्य प्रतिषेधान्नातिप्रसङ्ग इति चेद्, मैवं, विकल्पासहत्वाद्—विभ्रान्तिरपि हि यदवस्थावच्छिन्नं वस्तु प्रसञ्जयति ततोऽवस्थान्तरावच्छिन्नमेव तदभावं प्रतिषेधो गोचरयेत् किं वा तदवस्थावच्छिन्नमपि; प्राचीनपक्षे तु प्रागत्र रजतमभून्नाधुनेति स्यात्, परा-

---

टी०—लौकिकरजतस्याप्रसक्तादत्र निषेधो न युज्यत इत्यत्राह—"नच" इति, । आविद्यकरजतप्रसक्तेरेव परमार्थरजतप्रसक्तित्वादित्यर्थः, कथमन्यप्रसक्तेरन्यस्य प्रतिषेधनिमित्तत्वमतिप्रसङ्गादित्यत आह—"नखलु" इति, । तत्र प्रतिभासमानस्य तन्निष्ठनिषेधप्रतियोगित्वे रजतवदेव शुक्त्यादेरपि तथाभावप्रसङ्गादिति भावः ।

भ्रान्त्यावभासमानस्येति विशेषणाददोष इति शङ्कते—"विभ्रान्तिमात्र" इति, । तद्विकल्प्य दूषयति—"मैवम्" इति, । प्रागभूदिदमधुना नास्तीति प्रतिषेधः स्यादित्यर्थः । यथार्थस्थले पूर्व-

---

* घटत्वेन पटो नास्तीति वद् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमेन लौकिकपरमार्थत्वावच्छिन्नप्रतियोगिताकप्रातीतिकरजताभावस्य निषेधधीविषयतायान्तु न कोऽपि कलङ्क इति ध्येयम् ।

मू०—चीनेतु प्राचीनानुभवविरोधान्नामुष्यात्मलाभः, ।

नच पराचीनानुभवविरोधात्प्राचीनस्यानालंबनतेति युक्तं, स्वगोचरशूरत्वात्सर्वानुभवानाम्, अपरथातिप्रसङ्गाद्, उक्तंहि—

" अन्यथेयमनालम्बा लभमानोदयं क्वचिद्, हन्यादेकप्रहारेण बाह्यार्थपरिकल्पनाम् " इति,

नचास्त्यनुभवयोर्विरोध इति विपञ्चितमधस्ताद्, ।

विभ्रान्तिताप्यसति विषयापहारेऽनिर्वाच्यगोचरतयैवोपपन्ना,

---

टी०—संवेदनविरोधादुत्तरसंवेदनानुदयवद्विभ्रमेपि स्यादिति द्वितीयं पक्षं दूषयति—" पराचीने तु " इति ।

पराचीनानुभवस्य सत्त्वात्पूर्वविज्ञानविषयापहारेणैवोदय इत्यत आह—" नचपराचीन " इति, अपरथातिप्रसङ्गाद्=सत्यस्थलेपि पूर्वविज्ञानविषयापहारप्रसङ्गादिति यावत्, नच सत्यमिथ्यात्ववैषम्यादेव व्यवहारासिद्धिरितिवाच्यम्, उत्तरस्य सत्यत्वे सति पूर्वस्याप्रामाण्यं तदप्रामाण्ये चोत्तरस्य सत्यत्वमिति परस्पराश्रयप्रसङ्गादिति भावः ।

ज्ञानानामनालंबनत्वाभावे वृद्धसंमतिमाह—" उक्तंहि "इति. एकत्र संविदो निरालंबनत्वे तद्दृष्टान्तावष्टम्भत एव सर्वज्ञानानामपि निरालंबनतानुमानप्रसरादप्रयासत एव सुगतमतसिद्धिः स्यादित्यर्थः ।

'विपञ्चितमधस्ताद्'='को विरोधो वित्ती चेदुभयमावेदयत'इत्यत्र,

विषयापहाराभावे कथं भ्रान्तित्वमित्यतआह— " विभ्रान्तिता " इति, ।

मू०—यदपि 'एतेनान्यथैवोपपत्तिः ख्यातिबाधयोरुक्ता' इति, तदप्येतेनापास्तम् ।

यदपि—'असद्विलक्षणतायां रजतस्यानाद्यनन्तत्वे सर्वदोपलम्भादबाधापात' इति, तदनङ्गीकारपरास्तम्,

यत्पुनः—'कादाचित्कतायां तु कारणं वाच्यम्' इति, सत्यमेतद्—अत एवाविद्यालक्षणमत्र कारणमाश्रीयते,

यत्त्विदं निगदितम्—'अविद्या हि विद्याभावो मिथ्याज्ञानं वा नचोभयं कस्य चित्समवायिकारणमद्रव्यत्वाद्' इति, तदप्यसद्—अनाद्यनिर्वाच्याविद्याश्रयणात्, तस्याश्च कार्य्यानुरूपायाः कारणभावस्याप्रत्यूहमुपपत्तेः, नचास्या अप्रामाणिकतेति युक्तं, कार्य्यवशादेव तत्सिद्धेः

कादाचित्कं हि कारणनियतं नचान्तरेणोपादानं निमित्तकारणमात्रात्कार्य्योत्पत्तिः, प्रध्वंसातिरेकिणः कार्य्यस्योपादानकारणनियमाद्, नचासत्यस्य कार्य्यस्य सा-

---

टी०—तथापि तस्याः कथं कारणत्वमित्यत आह—"तस्याश्च"इति,

तत्सिद्धिं दर्शयितुं व्याप्तिं दर्शयति— "कादाचित्कम्" इति, । अस्तु तर्हि निमित्तकारणादेव तत्सिद्धिरित्यत आह— "नच" इति । प्रध्वंसे व्यभिचारनिवारणार्थं—'प्रध्वंसातिरेकिण' इति पदं, । सत्योपादानत्वमेव तर्हि किन्नस्यादित्यत आह— "नचासत्यस्य" इति, । प्रपञ्चस्य ब्रह्मोपादानत्ववत् किन्न

मू०—क्षात्सत्योपादानता युक्ता, तथा सति कुम्भादिवत्सत्यतापातात्, नचाऽत्यन्तासतो निरस्तसमस्तसामर्थ्यस्योपादानता युक्तिमती, ।

तथाचानुपपद्यमानायां सदसदुपादानतायां तद्विलक्षणमेव कारणं परिशेषतः कार्य्यमनुमापयेत् सुखादय इव पृथिव्यादिष्वनुपपद्यमाना अष्टद्रव्यविलक्षणमात्मानम्, ।

तस्य च सादितायां तथाविधोपादानान्तरपरिकल्प-

---

टी०—स्यादिति तत्राह—" साक्षाद् " इति, । तत्र ब्रह्मणोऽविद्याविशिष्टस्योपादानत्वं नतु केवलस्येत्यर्थः ।

" कुम्भादिवत्सत्यता " इति परसिद्धान्ताभिप्रायेण * । असदुपादानत्वमेव तर्हि स्यादिति तत्राह—"नचात्यन्तासत" इति

अनुपपद्यमानसदसदुपादानत्वे कारणसिद्धिरेव माभूदित्याशङ्क्य सुखादेरनुपपद्यमानाष्टद्रव्योपादानत्वे कारणान्तरसिद्धिवद् अपि तद्विलक्षणकारणसिद्धिरितिपरि हरति— " तथाच " इति, । 'सुखादयः समवायिकारणजन्या गुणत्वादित्यनुमानेन सामान्यतः समवायिकारणसिद्धौ, अयावद्द्रव्यभाविविशेषगुणत्वेनानित्यस्पर्शवदनाधारत्वाद्, अस्मदादिप्रत्यक्षगुणत्वेन च परमाण्वनाधारत्वाद्, अश्रावणत्वेन चानाकाशगुणत्वाच्च, दिक्कालमनसां विशेषगुणशून्यत्वाद्, अष्टद्रव्यातिरिक्ताधाराः सुखादयः सिद्ध्यन्ति यथा तथात्रापीत्यर्थः, ।

तथाप्यनादित्वं कथमित्यत आह—" तस्य च " इति, का-

---

* स्वसिद्धान्ते तु-कुम्भादिवद् व्यावहारिकसत्यत्वापातादिति वचनीयम्, ।

मू०—नप्रसङ्गाल्लाघवतर्कसाहाय्यादनाद्येव तदनुमातव्यम्,।

अत्र प्रयोगः—विवादपदम्—अनाद्यनिर्वाच्योपादानं विपक्षे वाधकोपपत्तौ सत्यां कार्य्यत्वाद्, यद्यथोक्तसाध्यं न भवति न तद्यथोक्तसाधनं यथोभयवाद्यविवादास्पदं वस्तु, ।

यत्तदनाद्यनिर्वाच्यं रजताद्युपादानं सैवास्माकमविद्या सिद्ध्यन्ती रजताद्युपादानतयैव स्वप्रमाणप्रसिद्धेति न रजतादेस्तदुपादानतायामपि विवदितव्यं, ।

तदेवमुन्नीतया रीत्या सदसद्वैलक्षण्येप्यनिर्वाच्यलक्षणे न का चन दोषकलेति सिद्धम्, ।

अपरे पुनर्वाधगोचरभावमनिर्वाच्यलक्षणमाचक्षते—

---

टी०–रणपरम्परायामनवस्थागौरवं च स्यादित्यर्थः ।

" विवादपदम् " इति । अत्राचाष्टद्रव्यव्यतिरिक्तद्रव्याश्रितत्ववदप्रसिद्धविशेषणता परिहरणीया, सामान्यतोदृष्टानुमानेन कारणस्य प्रसिद्धत्वाद्, वाधकैश्च सदसद्रूपतानिषेधाद्, अपरथा तथा तत्रापि ते दुःपरिहरा स्यादित्यवगन्तव्यं । विपक्षे वाधकोपपत्तौ=अनुपपद्यमानसदसदुपादानत्वे सति, घटादावात्मनिच व्यभिचारनिवारणार्थं क्रमेण विशेषणद्वयं, *

तथाप्यविद्योपादानसिद्धिः कथमिति तत्राह— " यत्तद् "

---

* घटादीना सत्यपि कार्य्यत्वेऽनाद्यनिर्वाच्यभावोपादानत्वाभावात्तत्र व्यभिचारवारणाय अनुपपद्यमानसदसदुपानत्वे सतीति विशेषणदलम्, एतावत्युक्ते ब्रह्मणि व्यभिचार इति तद्वारणाय कार्य्यत्वादिति विशेष्यदलम् इत्यर्थः, ।

मू०—नचैवमतिव्याप्तिः निर्वाच्यस्यात्मादेरबाधाद्, नाप्यव्याप्तिरनिर्वाच्यरज्जुभुजङ्गादेर्बाध्यत्वनियमात् ।

कः पुनरयं बाधो नाम, नासौ भेदाग्रहप्रसञ्जितव्यवहारनिवारणमिति प्रपञ्चितं, नापि विज्ञानविषयापहारः, तस्य समानगोचरभिन्नगोचराभ्यामसम्भवाद्, ।

न हि तावत्समानगोचरानुभवान्तरेणानुभवान्तरविषयापहारसम्भवः, धारावाहिकेपि तत्प्रसङ्गाद्, नापि विभिन्नगोचरेण, स्तम्भानुभवेनापि कुम्भानुभवगोचरापहारप्रसङ्गाद्, सति विरोध इतिविशेषणाददोष इतिचेद् नैवं स्वगोचरशूराणां बोधानां विरोधाभावस्याभिहितत्वाद्, विज्ञानविषयापहारे च निरालंबनतापत्तेः

तस्मात्सविलासाविद्यानिवृत्तिरेव बाध इत्याचार्य्याः, तथा च तद्गोचरतैवाऽनिर्वाच्यतेति सर्वमवदातम्, ।

---

टी०—इति, । धर्मिग्राहकप्रमाणादेव रजताद्युपादानत्वे सिद्धे न तत्र प्रमाणान्तरमन्वेषणीयमित्यर्थः ।

ननु परीक्षका यथायथं बाधगोचरतामनुमन्यमाना वस्तूनामनिर्वाच्यतां नानुमन्यन्त इत्याशङ्क्य पराभिमतबाध्यतानिराकरणेनानिर्वाच्यतां सिसाधयिषुराकाङ्क्षामुत्थापयति—"कःपुनर्" इति,

विकल्पपूर्वकमसम्भवं दर्शयति—" नहि " इति, 'विरोधाभावस्याभिहितत्वात्'='को विरोधो वित्ती चेदुभयमावेदयत' इत्यत्र, ।

मू०—अपरे तु प्रतिपन्नोपाधौ प्रतिषेधमेव वाधं तद्गोचरभावं च वाधकप्रत्ययप्रवेदनीयमनिर्वाच्यलक्षणमाचक्षते, नचैवमपि व्यभिचारः, सताश्चिदात्मनःप्रतिपन्नोपाधौ प्रतिषेधानुपलम्भाद्, अत्यन्तासतश्च शशशृङ्गादेरप्राप्त्यैव तदनुपपत्तेः; नचास्ति सदसद्रूपं वस्तु यत्र व्यभिचारः शङ्क्येत; ।

यदि कश्चित् पूर्वोत्तरानुभवावष्टम्भेन रजतादेरेव सदसद्रूपतां ब्रूयात्; तस्य यथावभासमर्थसद्भावे कथं भ्रान्तिवाधाविति चिन्त्यम्; ।

---

टी०—समानभिन्नविषयज्ञानयोर्विरोधस्योदितदूषणेनानिर्वाच्यत्वाद्, नच विरुद्धार्थविषयज्ञानयोर्विरोधः, अर्थयोरपि विरोधस्यानिर्वचनात्, सहानवस्थानमिति तस्य निर्वचनमिति चेत् तदेव भवद्भिरभिधीयतां, यत्र यदा यस्य भावोऽस्ति तत्र तदा तद्भावो नास्तीति निर्वचनमिति चेन्न, तत्र तदाऽभावोनास्तीत्यभाववचनेन भावविधानाद्यत्र भावोऽस्ति तत्र भावोऽस्तीति पौनरुक्त्यापत्तेः, यत्राभावोस्ति तत्र भावो नास्तीत्यत्रापि चैतद् दोषस्य तुल्यत्वात्-स्वात्यन्ताभावसमानाधिकरणेषु सुखादिषु लक्षणस्याव्याप्तेः, नच प्रदेशभेदेन सहानवस्थानं, निरवयत्वेनात्मनो निःप्रदेशत्वादिति भावः।

विवरणाचार्य्यमतमाह— " अपरे तु " इति, । अस्तु तर्हि सदसद्रूपे व्यभिचार इत्यनैकान्तवादिमतमुत्थाप्य दूषयति,— " यदिकश्चिद् " इति,।

मू०—सदसद्रूपस्य सद्रूपेण प्रतीतिर्भ्रान्तिरिति चेत् तत्किमिदानीमसाकल्योपलब्धिरेव भ्रान्तिः, तथा सति सर्वोपलम्भानां विभ्रमता दुर्वारा, नो खल्विह केनचिदप्युपलम्भेन सर्वात्मनाऽर्थोवसीयते,—यथोक्तं—'सर्वात्मनार्थो ज्ञानेन केन चिन्नहि गृह्यत"इति, ।

न च न स्त एव भ्रान्तिबाधाविति वाच्यं, तत्प्रसिद्धिविरोधात्, सा भ्रान्तिरिति चेत्, तद्बाधो वाच्यः, तथाचायुष्मतैव भ्रान्तिबाधावाश्रिताविति किमलीकनिर्बन्धेन, ।

तस्मान्नसन्नासन्नापिसदसदपित्वनाद्यनिर्वाच्याविद्या-

---

टी०–भ्रान्तिसम्भवमाशङ्कते— " सदसद्रूपस्य " इति ।

गूढाभिसन्धिरुत्तरमाह— " तत्किमिदानीम् " इति, अस्तु को विरोध इति तत्राह—" तथा सति " इति, । कुत इत्यत आह—" नो खलु " इति, ।

दुर्निरूपत्वादसम्भव एव तयोरित्याशङ्क्याह—"न च नस्त" इति, । बाधकव्यतिरेकेण भ्रान्तेरभावाद् भ्रान्तेर्बाधोपि वक्तव्य इति तन्निराकरणवादिना स्वीकृतावेतावित्याह—" तद्बाध " इति ।

वादार्थमुपसंहरति—" तस्माद् " इति, । विभ्रमालम्बनस्यानिर्वाच्यतामाह— "अनाद्यनिर्वाच्याऽविद्या" इति, 'अलीक'

मू०—क्रीडनमलीकनिर्भासं विभ्रमालम्बनमिति सिद्धम्—

"सति चैवं प्रपञ्चोपि स्यादविद्याविजृम्भितः; ।

जाड्यदृश्यत्वहेतुभ्यां रजतस्वप्नदृश्यवद्" ।

इह केचिदाहुः—धर्मिग्राहकप्रमाणबाधितविषयतया नेदमनुमानमात्मानं लभते; यदि पुनरयं न प्रामाणिकः प्रपञ्चः कथं तर्ह्याश्रयासिद्धं न साधनमाश्रयहीनश्च दृष्टान्तः, अनैकान्तश्चात्मना हेतुः, अपराधीनप्रकाशत्वादात्मनो नानैकान्त इति चेद्,—मैवं मनोरथमात्रत्वादिति, ।

---

टी०—इति, अलीको निर्भासो यस्य तत् तथा ज्ञानज्ञेययोरनिर्वाच्यत्वमुभयोरुक्तं भवतीत्यर्थः, ।

नन्वात्मनोऽद्वितीयत्वप्रसाधनाय प्रपञ्चस्यैवानिर्वचनीयत्वं साधनीयं तत्किमिति शुक्तिरजतादेः प्रसाधितमित्याशङ्क्य तत्प्रसाधनेन दृष्टान्तः प्रसाधित इत्याह—" सतिचैवम् " इति, अत्र-अविद्याव्यतिरिक्तत्वे सतीति विशेषणम् * अन्यथाऽविद्ययानैकान्तिकत्वाद् । प्रपञ्चः प्रामाणिको नवेति विकल्प्याद्यं दूषयति,—"धर्मि" इति, । बाधितविषयतया कालात्ययापदिष्टत्वादित्यर्थः ।

" अनैकान्तिकश्च " इति, । आत्मनो † दृश्यत्वेप्यमिथ्यात्वादित्यर्थः ।

---

* अविद्याव्यतिरिक्तः प्रपञ्च इत्येव पर्यायितव्यमिति तत्त्वम् ।

† वृत्तिव्याप्यत्वं दृश्यत्वमित्यभ्युपगमे आत्मनोपि वृत्तिव्याप्यत्वाभ्युपगमादनैकान्तिकता, फलव्याप्यत्वं दृश्यत्वमित्यङ्गीकारे अतीन्द्रियेष्वदृष्टादिषु हेतोर्भागासिद्धतेति भावः ।

मू॰—तदेतन्निखिलमपि गगनग्रासकल्पं, तथाहि—यत्तावद्—'धर्मिग्राहकप्रमाणापबाधितविषयं साधनम्' इति, तदतिमन्दं, भेदप्रपञ्चस्य प्रत्यक्षादिगोचरतायाःप्राक् परास्तत्वाद्, ।

यत्तु—इदमाश्रयासिद्धं साधनमिति, तदप्यनाकलिताश्रयवृत्तान्तस्य भाषितं, ।

न खलु नभस्तलकमलायमानं प्रपञ्चमाचक्ष्महे येनायमाश्रयो न स्याद्,*

नचान्तरेण प्रामाणिकभावमाश्रयतानुपपत्तिरित्यपि कुलधर्मः, प्रसिद्धिमात्रेण तदुपपत्तेः विशेषणवैकल्यात्,

---

टी॰—अप्रामाणिकत्वेपि तुच्छविलक्षणत्वादाश्रयोपपतिरिति परिहरति—" नखलु " इति, ।

अप्रामाणिकत्वे शुक्तिरजतसंसर्गवदाश्रयत्वमेव न स्यादित्यत आह— " नचान्तरेण " इति, प्रसिद्धत्वे सति प्रमाणसिद्धत्वाभावेनाश्रयत्वाभावानुपलम्भात्प्रमाणप्रतिपन्नविशेषणवैयर्थ्याद्, विभ्रमावभातसंसर्गे मिथ्यात्वबाध्यत्वापरोक्षत्वधर्माणां परीक्षकैरभ्युपगमेन प्रामाणिकत्वायोगाद्, ।

ननु प्रतीतिमात्रसिद्धाश्रयादिपरिग्रहेणानुमानप्रवृत्तौ प्रतिवादिवचनमात्रेणानैकान्तिकत्वादिदोषोद्भावनेऽनुमानभङ्गः स्याद्, अनैकान्तिकत्वादेस्तत्रापि प्रतीतिमात्रसिद्धत्वादिति चेद्, न, साध्यसिद्धय आभासलक्षणानाक्रान्तस्य त्रिचतुरकक्षाविश्रान्तहेतुभावमापन्नस्य साधनाङ्गत्वेनाभ्युपगमाद्, अन्यथा सर्वपुरुषाबाध्यत्वस्यासर्वज्ञेन ज्ञातुमशक्यत्वात्कथाऽप्रवृत्तिरेव स्यादित्यर्थः ।

---

* न वयं प्रमितमप्रमित वाश्रयमाश्रयामहे, नापि नभस्तलकमलायमानमपि तु प्रतीतिमात्रसिद्धमिति भाव., ।

मू०—प्रसिद्धिश्च प्रपञ्चगोचरा प्राणभृन्मात्रवर्तिनीति कथं नायमाश्रयः, तथाचायमाश्रयहीनो दृष्टान्त इत्यपोढं,

यदपि—'आत्मनाऽनैकान्तो हेतुः' इति, तदप्यप्रेक्षावत्पुरुषभाषितम्, अपराधीनप्रकाशत्वादात्मनः, नचैतन्मनोरथमात्रम्, अनुमानागमाभ्यां तदुपपत्तेः, ।

तथाहि—अस्ति तावन्ममेदमनुकूलं प्रतिकूलमिति वा विज्ञायानुकूले प्रवर्तते प्रतिकूलाच्च निवर्तत इति लौकिकपरीक्षकाणां संप्रतिपत्तिः, तच्चास्य विज्ञानमवच्छेदकात्मप्रकाशाधीनमवच्छिन्नप्रकाशत्वाद् य उक्तसाधनः स उक्तसाध्यो यथा दण्डप्रकाशाधीनो दण्डप्रकाशः, ।

स चायमात्मप्रकाशः पराधीनतया न निरूपणगो-

---

टी०—प्रसिद्धिरपि किमस्तीति, वाढमित्याह— " प्रसिद्धिश्च " इति, । आश्रयवत्प्रतीतिर्सिद्धिमात्रेण दृष्टान्तोपपत्तेरुक्तदोषानवकाश इत्याह— " तथाच " इति, ।

परिशेषानुमानं दिदर्शयिषुस्तस्याश्रयासिद्धता मा भूदित्याश्रयं तावदाह— " तथाहि " इति, ।

आत्मनाऽवच्छिन्नानुकूलप्रतिकूलानुभवोऽनुभवसिद्ध इत्यर्थः ।

अनुमानमाह— " तच्च " इति ।

प्रमाणान्तरेणावच्छेदकात्मसिद्धौ कथं परिशेषसिद्धिरित्यत आह—" सच " इति, ।

मू०—चरतामाचरतीति प्रसक्तप्रतिषेधे परिशेषतः स्वयंप्रकाशतासिद्धिः, ।

कथं पुनः प्रसक्तनिषेधो, मानसप्रत्यक्षवेदनीयतायामप्यस्य प्रकाशोपपत्तेः, ।

तथा सति स्वाधारविज्ञानवृत्तिव्याप्यत्वादात्मनः कर्मत्वे स्वात्मनि वृत्तिविरोधादिति ब्रूमः ।

कर्तृकर्मणोरैकात्म्यानुपलम्भाद्, नो खल्वङ्गुल्यैवाङ्गुली स्पृश्यते, छिद्यते वा धारयैवासिधारा ।

तथाचायं न स्वाश्रयवृत्तिव्याप्यो वस्तुत्वादसिधारावद् इत्यप्रत्यूहमनुमानम्,

---

टी०—निराकरोति— " तथा सति " इति, विज्ञानवृत्तिः=विज्ञानलक्षणो व्यापार इति यावद्, ।

वृत्तिविरोधमेव दर्शयति—" कर्तृकर्मणोर् " इति, । यां प्रति यः कर्ता न स तामेव प्रति कर्म, यथा गमनक्रियांप्रति देवदत्तः,तथात्मनः स्वाधारक्रियां प्रति कर्तृत्वे न कर्मता स्यादित्यर्थः । उक्तमर्थमनुमानारूढं करोति—" तथा च " इति, । इदं चिरन्तनरीत्यावगन्तव्यम्, असिधारात्मनोरनुगतजातेरुपाधेर्वा स्वशब्दार्थस्यानुपलम्भेनानुमानाप्रवृत्तेः, ।

वस्तुतस्तु—'एतन्निष्ठमहमिति ज्ञानम् एतदात्मविषयं न भवति एतज्जन्यत्वाद् एतन्निष्ठघटादिज्ञानवद्' इति प्रयोगः, नचाश्रया-

मू०—यस्तु ब्रूते मा भूदयं मानसप्रत्यक्षगोचरस्तथापि नासावपराधीनप्रकाश, इन्द्रियाद्यधीनासु सर्वार्थसंवित्सु स्फुरणाद्,

न खल्वस्य क्रियाफलभाजोपि कर्मभावः, यतः स्वात्मनि वृत्तिर्विरुध्येत, ।

परसमवेतक्रियाफलशालि हि कर्मेति कर्मविदः,

---

टी०-सिद्धिर्,अहंप्रत्ययस्य देहव्यतिरिक्तात्मवादिभिः सर्वैरभ्युपगमाद्, न चाप्रसिद्धविशेषणत्वम्,एतदात्मविषयत्वस्य पुरुषान्तरनिष्ठैतदात्मविषयानुमानेपि सिद्धतया तदभावस्यापि घटादिज्ञाने सिद्धत्वाद्, नचाहंप्रत्ययस्य ग्राहकप्रमाणेनैवात्मविषयतयैव ग्रहणादेतस्यात्मविषयत्वाभावानुमानं धर्मिग्राहकप्रमाणवाधितमिति वाच्यं तथा सत्यहंप्रत्ययस्य देहेन्द्रियतदतिरिक्तात्मविषयत्वे वादिनां विप्रतिपत्त्यभावप्रसङ्गाद्, नचानात्मविषयत्वमुपाधिः, आत्मानात्मसमूहालम्बनज्ञानाव्याप्तेः, नच तत्रैव भवदनुमानस्यानैकान्तिकतेति वाच्यं तस्याप्यहंप्रत्ययस्य मम पक्षत्वाद्, नचानात्ममात्रविषयत्वमुपाधिः, पुरुषान्तरनिष्ठाहंप्रत्यये साध्याव्याप्तेः, तस्यैतदात्म्यविषयत्वाभावेप्यात्मविषयतयाऽनात्ममात्रविषयताभावादित्यर्थः ।

परिशेषसिद्धये*निराकर्तुं प्रभाकरमतमुत्थापयति-''यस्तु''इति,

एतन्निष्ठज्ञानजन्यफलाश्रयतया घटादिवत्कर्मतापि स्यादित्यत आह— " न खलु " इति, ।

विषयसंविद्बलेन प्रकाशमानस्यापिकर्मत्वाभावं दर्शयितुं कर्मलक्षणमाह— " परसमवेत " इति, । क्रियाफलशालि हि क-

---

* निराकरणाय प्रभाकरमतोत्थापनं पूर्वोक्तपरिशेषसाधनाय च तन्निराकरणमिति ज्ञेयम् ।

मू०—तथा सति नात्मनः कर्मभावो गन्तृवद्, ।

यथा खलु गन्तृगतया गत्या गन्तृचैत्रगन्तव्यनगराधिकरणायामपि प्राप्तौ क्रियमाणायां न चैत्रस्य गन्तुः कर्मता, तथा च न स्वात्मनि वृत्तिविरोधो, नगरस्यैव

---

टी०—मैत्यभिधाने कर्तर्य्यतिव्याप्तिः, प्राप्तेरुभयनिष्ठतया कर्तुरपि क्रियाफलशालित्वात्, तन्मा भूदित्युक्तं—"परसमवेत" इति, । परसमवेतफलशालीत्युक्ते तत्रैवातिव्याप्तिः, प्राप्तेरुभयनिष्ठत्वाद्, अत उक्तं—क्रियेति, । नन्वतिव्यापकमिदं लक्षणम् पर्णाश्रयपतनक्रियाफलविभागभाजोपि वृक्षस्यापादानत्वाद्*, नायं दोषः—विभागस्य पतनक्रियाऽजन्यत्वाद्, मूर्तद्रव्याभिघातकृतो हि विभाग इति नातिव्याप्तिः, † । भवतु कर्मैवंविधं तथापि कथमात्मनस्तद्भाव इति तत्राह— " तथा सति " इति, ।

दृष्टान्तं व्यपश्यति— " यथा खलु " इति, (आत्मनः स्फुरणं न परसमवेतक्रियाफलं ततो न कर्मत्वं यथा गन्तुश्चैत्रस्य स्वाश्रयगमनक्रियाफलनगरप्राप्तिमतोपि न कर्मत्वं तथात्रापीत्यर्थः) ‡ कस्य तर्हि कर्मतेत्यत आह— " नगरस्य " इति, ।

---

* वृक्षात्पर्णं पततीत्यत्र, ।

† केचित्तु धात्वर्थतावच्छेदकपरसमवेतक्रियाफलभागित्वं कर्मत्वं, तेन गमनस्य पूर्वदेशपरित्यागपुरस्सरोत्तरदेशसंयोगानुकूलरूपव्यापारत्वेनोत्तरसंयोगो धात्वर्थतावच्छेदक इति तद्भागी ग्रामादिः कर्म, पतनस्य त्वध संयोगः फलं नतु विभागः, तेन तद्भागिनोपादानस्य न कर्मत्वमित्याहुः, ।

नन्वेवमतिव्याप्त्यभावेपि 'आत्मानं जानामि' इत्यत्रात्मनः कर्मभिन्नत्वाभावेन परत्वाभावादव्याप्तिर्दुर्वारा नच तत्राप्युपाधिभेदात्परत्वं, कर्तृत्वाद्युपहितस्यात्मनः कर्मत्वं, केवलस्य च तद्भिन्नस्य कर्तृत्वमित्यङ्गीकाराद् इति वाच्यं निरुपाधिमात्मानं जानतोऽध्यात्मविदो ज्ञानस्यात्मकर्मकत्वाभावापातात्, तत्र केवल एवात्मा ज्ञाता ज्ञेयश्चेत्यभ्युपगमाद्, इति चेन्न केवलस्य ज्ञातृत्वाद्यसम्भवेन तत्राप्युपाधिसंसर्गस्यावश्यमभ्युपगमनीयत्वेनोपाधिभेदमादाय परत्वस्य सुवचत्वादिति दिक् ।

‡ ( ) एतच्चिह्नान्तर्वर्ती पाठः टिप्पणाद्‌ पतित 'इति टिप्पणम्' इत्येव लेखाद् ।

मू०—तु चैत्रसमवेतगमनजनितफलशालिनः कर्मभावः,

न चैतन्मानसप्रत्यक्षप्रवेदनीयतायामप्यात्मनः समानमिति मन्तव्यं, जानातेः सदा सकर्मकतया कर्मणा व्याप्तस्य तन्निवृत्तौ निवृत्तेः,

तस्मादर्थसंवित्तिरेवात्मानात्मप्रकाशनरूपा प्रकाशत इति न किञ्चिदवद्यमिति।

तस्याप्यविचारितरमणीयं वचनं, संविदधीनप्रकाशता हि संवेद्यता व्याप्ता कुम्भादेः सा च व्यापिका व्या-

---

टी०—तर्हि मानसप्रत्यक्षतैवास्तु उक्तलक्षणाभावेनात्मनोपि कर्मत्वाभावादित्यत आह— "नचैतद्" इति,। पटकर्मकज्ञानेनात्मनः सिद्धिरिति नैय्यायिकादिभिरनभ्युपगमाद् अहमितिज्ञानेऽनात्मकर्मत्वस्यानाशङ्कनीयत्वाद् आत्मनोपि कर्मत्वाभावे सकर्मकज्ञानक्रियानिवृत्तिरेव स्यादित्यर्थः,।

इदानीं प्रभाकरः स्वपक्षमुपसंहरति— "तस्माद्" इति, नीलादिसंवित्तिः स्वाश्रयमात्मानमनिर्दतया प्रकाशयति, विषयं चेदन्तया प्रकाशयत्ति, स्वयं च स्वप्रकाशतया स्फुरतीत्यर्थः,।

संविदतिरिक्तस्य संवित्कर्मत्वाभावे संविदधीनप्रकाशतैव न स्यादित्यभिप्रायेण निराकरोति— "तस्यापि" इति,।( यत्र शिंशपात्वं तत्र वृक्षत्वमप्यस्ति वृक्षता व्यापका व्यावर्त्तमाना यथा स्वव्याप्यं शिंशपात्वमप्यादायव्यावर्त्तते तद्वद् यत् संविदधीनप्र-

मू०—वर्तमाना स्वव्याप्यामपि संविदधीनप्रकाशतां संवेदितुः संविद इव व्यावर्तयति वृक्षतेव व्यावर्तमाना स्वव्याप्यमपि शिंशपात्वम्,

अत्र प्रयोगः—संवेदिता न संविदधीनप्रकाशः संवित्कर्मतामन्तरेणापरोक्षत्वात्संवेदनवदिति, ।

तदेवं प्रसिद्धः प्रसक्तप्रतिषेधः, तथा च परिशेषप्रसिद्धा पुरुषस्यापराधीनप्रकाशता कथमपन्हुयेत, ।

---

टी०—काशं तत्संवेद्यत्वं व्यापकं व्यावर्त्तमानं स्वव्याप्यं संविदधीनप्रकाशत्वमप्यादाय व्यावर्त्तत इत्यर्थः),*,-" अत्र प्रयोग " इति ।

ननु किमत्र संविज्जन्यप्रकाशविषयताभावः साध्यते किं वा संविज्जन्यव्यवहारविषयत्वाभावः, आद्ये सिद्धसाधनता संविज्जन्यज्ञानांतरस्य ज्ञाततया वानभ्युपगमेन तद्भावस्य सिद्धत्वाद्, नापि द्वितीयः संविदोपि संविज्जन्यव्यवहारविषयतया दृष्टांतस्य साध्यविकलत्वादिति चेद्, मैवं, संविदतिरिक्तत्वे संविज्जन्यव्यवहारविषयत्वाभावस्य, संवित्त्वे सति संविदधीनव्यवहारविषयत्वस्य वा प्रसाधनेनोदीरितदूषणगणातिक्रमाद्, असंविदधीनप्रकाश इति वार्थः, । संवित्तिषु भासते तस्यां संविदि भासत इति वदौपचारिकप्रयोगे सति यथाश्रुतमादाय तद्विघाते कुतोस्य नवकंवलवच्छलत्वापत्तेः, अत्र च घटादिषु व्यभिचारनिवारणार्थं—संवित्कर्मतामंतरेण इत्युक्तं, नित्यपरोक्षेषु व्यभिचारनिवारणार्थम्—अपरोक्षत्वादित्युक्तं। न चापरोक्षज्ञानविषयत्वाभावेनापरोक्षत्वादित्यसिद्धो हेतुरिति वाच्यं ज्ञानवदतिरिक्तसाधारण्येनापरोक्षव्यवहारविषयस्यैवापरोक्षत्वेनाभ्युपगमादितिभावः, ।

अस्तु प्रस्तुते किमायातमित्यत आह— " तदेवम् " इति।

---

* ( )एतच्चिन्हान्तर्वर्ती पाठोपि पूर्ववदागन्तुक इतिज्ञेयम् ।

मू०—श्रूयते चात्मनः स्वप्रकाशता—'अत्रायं पुरुषः स्वयं ज्योतिर्, आत्मैवास्य ज्योतिर्' इत्यादि, ।

विज्ञानरूपश्चायमात्मा वेदान्तेषु गीयते—'विज्ञा-

---

टी०-अनुमानमुक्त्वाऽऽगममाह—"श्रूयतेच" इति, । स्वप्नावस्थायां विज्ञानसाधनचक्षुरादिनिवृत्तावात्मनः प्रथनादात्मा स्वयं ज्योतिरित्युच्यते, नच तत्रापि मनसोऽनुपरमात्कथं स्वयंज्योतिष्ट्वसिद्धिरिति वाच्यं तदा मनसः कर्मतयैवावस्थानात् करणांतरस्याभावाद्, नचेन्द्रियत्वान्मनसोपरोक्षत्वाभावः, ज्ञानासमवायिकारणाधारत्वेनात्मवत्प्रत्यक्षत्वात्, नचेन्द्रियत्वव्याघातः प्रत्यक्षतायामिति मंतव्यं-साक्षिवेद्यतयेन्द्रियजन्यज्ञानाविषयत्वेन तदविघातादिति भावः, ।

ज्ञानात्मकत्वेनात्मनः स्वयंप्रकाशतां सिसाधयिषुस्तत्रप्रमाणमाह— " विज्ञान " इति । " अयमात्मा ब्रह्म " इत्यादिवाक्यादभिन्नस्य ब्रह्मणो विज्ञानमानन्दं ब्रह्मेति सामानाधिकरण्यादात्मनोपि ज्ञानरूपत्वमर्थादवगम्यते, नच वेदः प्रमाणमितिवत् ज्ञानाधारतया* विज्ञानं ब्रह्मेति सामानाधिकरण्यं, स्वगतनानात्वनिषे-

---

* भावल्युडन्तादर्शआद्यचि ज्ञानाश्रयतयेत्यर्थः, युक्तं चैतद् अन्यथैतत्समानार्थक "सत्यं ज्ञानमिति श्रुतौ ज्ञानपदमन्तोदात्त पठ्यमान व्याकुप्येत यथा चैतत् तथा स्पष्टीकृतमप्ययदीक्षितैः, तथाहि इह हि ज्ञानपदमन्तोदात्तमधीयते अन्तोदात्तस्वरश्च केवलल्युडन्तताया नोपपद्यते तथाहि ल्युडादेशस्य अन इत्यस्य आद्युदात्तश्चे"ति प्रत्ययप्रथमाकारे उदात्ते लितीतिलित्स्वरेण प्रकृत्याकारे चोदात्ते 'ऽनुदात्तंपदमेकवर्जमिति शेषनिघातस्वरेण प्रत्ययस्थयोरकारयोरनुदात्तयोरेकादेशे चोदात्ते सति प्रत्ययान्त्याकारस्याऽनुदात्तस्य विभक्त्यकारस्य च ' अनुदात्तौ सुप्पिताविति सुप्स्वरेणानुदात्तस्य ' अमिपूर्वः ' इत्येकादेशो भवन् ' स्थानेऽन्तरतम ' इति परिभाषयाऽनुदात्तः स्यात् तस्य चानुदात्तस्य 'उदात्तादनुदात्तस्यस्वरित इति स्वरितादेशो भवेत् । अत एतद् ज्ञानमितिपदं केवलल्युडन्तत्वे स्वरितान्तं स्यात् । यथा काठकेसज्ञान विज्ञानं प्रज्ञानमिति, तस्मादन्तोदात्तत्वनिर्वाहार्थमिदं ज्ञानपदं ल्युडनन्तरं मत्वर्थीयाच्प्रत्ययान्तं वाच्यम् । अर्शआदेराकृतिगणत्वात् । तथा सत्यन्तोदात्तस्वर उपपद्यते । अर्शआद्यच्प्रत्यये यस्येतिचेतिप्रकृतावन्त्याकारस्य लोपे चित् इति चित्स्वरेणमत्वर्थीयप्रत्ययस्योदात्तत्वे च सति तत्र विभक्त्यकारस्य चैकादेशस्यापि एकादेशउदात्तेनोदात्त इत्युदात्तस्यैव भावात् ।

मू०—नमानन्दं ब्रह्म, प्रज्ञानं ब्रह्म' इत्यादि, ।

स्वप्रकाशं च विज्ञानमिति कथं तद्रूपस्यात्मनो नात्मप्रकाशता, ।

यः पुनर्विज्ञानमप्यनात्मप्रकाशमभिधत्ते स इत्थं प्रष्टव्यः—किमप्रकाशमानमेवान्यप्रकाशनम्, आहो स्वित्प्रकाशमानं विज्ञानमिति ।

---

टी०—थकाद्वितीयश्रुतिविरोधाद्,*विज्ञप्तिर्विज्ञानमिति भावस्य भवित्रपेक्षया आदित एव बुद्धिस्थत्वेन तस्यैव ग्रहीतुमुचितत्वाच्चेति भावः ।

भवतु विज्ञानरूपत्वं तथापि कथं स्वयंप्रकाशत्वसिद्धिरिति तत्राह— " स्वप्रकाशं च " इति, ।

विज्ञानमेव स्वयंप्रकाशं न भवतीति नैयायिकमतमुत्थापयति— " यःपुनर् " इति, । किमप्रतिभासमानमेवान्यत्रार्थे ज्ञाततालक्षणं प्रकाशं व्यवहारं वा मतभेदेन† करोति किं वा प्रतिभासमानमेव स्वकार्यं करोतीति विकल्पार्थः ।

---

* उपलक्षणं चेद ज्ञानशब्दस्य ज्ञानाश्रयपरत्वस्वीकारे ज्ञानस्य तदाश्रयस्य च भिन्नत्वेन वस्तुपरिच्छेदस्य दुर्वारत्वात् ज्ञानसामानाधिकरण्येन श्रूयमाणं त्रिविधपरिच्छेदोच्छेदबोधकमनन्तमिति पदं कदर्थितं स्याद्' इत्यस्यापि ।

एवं च नायं ल्युडन्तः किन्तु 'यतिसु' इतिसूत्रविहितनप्रत्ययान्तः, ज्ञाधातोस्तत्रापठितत्वेपि बाहुलकात्तत. स ज्ञेय., तथा चाहुः परिमलकाराः-'ज्ञाधातोराकृत्य नप्रत्ययविधानाभावेपि उणादयो बहुलम् इति बहुलग्रहणेन 'यतो विहितास्ततोऽन्यत्रापि भवन्ति' इति सिद्धेः, एवंसति भावार्थत्वं होमशब्दवदन्तोदात्तत्वं चोपपद्यते नप्रत्ययाकारस्य प्रत्ययस्वरेणोदात्तत्वे सति तस्य तद्विभक्त्यकारेण भवत एकादेशस्याप्युदात्तस्यैव भावाद्' इति, तदेवाह--"विज्ञप्तिर्' इति ।

† मीमांसकमते ज्ञातो घट इत्येवमनुमेयो ज्ञाततालक्षणो व्यवहारो ज्ञानेन जन्यते नैयायिकमते प्रकाशते घट इत्येवं विषयोऽर्थप्रकाशरूपो व्यवहारो ज्ञानेन जन्यत इत्येवं मतभेदेनेत्यर्थः ।

मू०—न तावदप्रकाशमानं, तथा सति घटोयं मया ज्ञातो न वेत्यनन्तरक्षणे संदेहयोग्यतापाताद्, नच कश्चिदप्यद्राक्षीदमुं नो वा भवानिति पृष्टोप्यनन्तरं सन्दिग्धे किमहमद्राक्षं नो वेति किन्तु निश्चिनोत्येवाहमद्राक्षमिति, ।

तत्सिद्धमेतद्—'विज्ञानमर्थप्रकाशसमये प्रकाशते तदुपाधावनन्तरं सन्देहायोग्यत्वादर्थवद्' इति, ।

प्रकाशमानताभ्युपगमे तु. यदि*विज्ञानान्तराधीनमस्य प्रकाशनं तदैव तत्रापि विज्ञानान्तरमवश्यंभा-

---

टी०-प्रथमं पक्षं दूषयति—" नतावद् " इति, । प्रसंगस्य विपर्ययमाह— " नच " इति, । संदेहायोग्यत्वादित्युक्ते हेतोरसिद्धिर्नित्यमनित्यं वा स्वप्रकाशं नवेति संदेहयोग्यत्वादत उक्तं— " तदुपाधौ " इति, । तदुपाधौ=अर्थोपाधावर्थलक्षणेऽवच्छेदक इति यावत्, इदमपि चिरंतनरीत्यावगंतव्यम्, अर्थोपाधावित्यर्थविशेषितस्य विवक्षितत्वेऽर्थस्यार्थविशेषितत्त्वाभावेन दृष्टान्तस्य साधनविकलत्वात्, तस्माद् घटज्ञानं घटव्यवहारसमये व्यवह्रियमाणं ज्ञातो घट इतिव्यवहारविषयत्वाद्धटवदिति प्रयोगोनुसंधेयः, कथंचिदनन्तरसंदेहयोग्यत्वं तु विपक्षे बाधकस्तर्क उन्नेयः, ।

प्रथमज्ञानस्यापि विषयव्यवहारसमये ज्ञानान्तराधीनव्यवहार्यत्वमस्तु को दोष इत्यत आह— " प्रकाशमानता " इति, । अ-

---

* नच सुखादिवदन्याधीनप्रकाशत्वेपि सम्बन्धाद्यविषयत्वोपपत्तिरितिवाच्यं, द्वितीयज्ञानाभ्युपगमे प्रथमज्ञानवद् द्वितीयस्याप्यवश्यवेद्यत्वेऽनवस्थापात इत्याशयेनाह—"यदि" इत्यादिना, । न च सुखादिप्रतिवन्दी, तत्राप्यस्मन्मते तत्साधकसाक्षिणः स्वप्रकाशत्वेनानवस्थानवतारात्—भवतामेव तत्रापि दौस्थ्यात् ।

मू०—वीत्यनवस्था प्रसज्येत, न चास्त्येकदैवानन्तविज्ञानप्रतिभासः, ।

किञ्च विज्ञानविषयं विज्ञानान्तरं मानसमिष्यते तत्र येन मनःसंयोगेन विषयविज्ञानमजनि तेनैव विज्ञानविषयमपि विज्ञानं जन्यम्, उत संयोगान्तरेणेति वाच्यं, न तावदग्रिमः कल्पः, करणस्य* प्रत्ययपर्य्याये सामर्थ्यानभ्युपगमाद्, असमवायिकारणभेदानुरोधादेव च तदुपपत्तेः, ।

अपरथा त्वपेक्षणीयान्तरासंभवे स्मरणादियौगपद्यो-

---

टी०—नवस्थाया मूलक्षयकरीत्वमाह—" नचास्ति " इति, ।

ज्ञानग्राहकविज्ञानस्य सामग्र्यनिरूपणादपि ज्ञानस्य वेद्यत्वं न संभवति इति विकल्पपूर्वकमाह—" किंचं " इति, एकेनैव मनःसंयोगेन ज्ञानद्वयं जन्यत इति पक्षे तद्यौगपद्याभावात् क्रमेणेति वाच्यं, तत्र दूषणमाह— " करणस्य " इति, । एकस्य क्रमेण कार्यद्वयजनकत्वाभावे कथं कार्यक्रम इत्याशङ्क्यासमवायिकारणक्रमादप्युपपद्यत इति परिहरति— " असमवायि " इति, । असमवायिकारणभेदानंगीकारे दोषमाह— " अपरथा " इति, । संस्कारेंद्रियसंप्रयोगसहितेनैकेनात्ममनःसंयोगेन घटस्मरणघटानु-

---

* किं युगपदेव ज्ञानद्वयं जनयति स मनःसंयोग उत पर्य्यायेण, नाद्यः, अनुव्यवसाय प्रति कर्मकारकतया जनकस्यव्यवसायस्य तज्जन्यानुव्यवसायस्य च समसमयमेव जन्माभावाद् यौगपद्यायोगाद्, न द्वितीय इत्याह – 'करणस्य प्रत्ययपर्य्याये' इति, प्रत्ययपर्य्यायः = प्रत्ययपरम्परा, प्रत्ययपर्य्याये सामर्थ्याभावं स्पष्टयति – 'असमवायिकारणभेदानुरोधाद्' इत्यादिना ।

मू०—त्पत्तेः, अक्रमाच्च* कारणात्कार्यक्रमानुपपत्तेरिति, बाह्यसामग्र्यवच्छिन्नाच्च ततो युगपदुत्पत्तिप्रसंगात्, ।

नापि पश्चिमः, तथाहि कुंभज्ञानोत्पत्तिसमकालं मनसि क्रिया ततो विभागस्ततः पूर्वसंयोगविनाशस्तत उत्तरसंयोगोत्पत्तिस्ततो ज्ञानान्तरमिति वहुतरकाल-

---

टी०—भवयोर्युगपदुत्पत्तिप्रसंगोऽपेक्षणीयांतराभावादित्यर्थः । दूषणान्तरमाह—"अक्रमाच्च" इति, । कारणक्रममन्तरेण कार्यक्रमस्याकस्मिकत्वप्रसंग इत्यर्थः । एकत्वेपि मनःसंयोगस्य तत्तदिन्द्रियमनस्सन्निकर्षस्येन्द्रियार्थसन्निकर्षस्य च क्रमभावित्वादस्त्येव कारणक्रम इत्यत आह—" बाह्य " इति, । आत्मसंयुक्तेन मनसाधिष्ठितेन्द्रियैर्घटादीनां युगपत्सन्निकर्षे घटपटादिविषयानेकज्ञानयौगपद्यप्रसङ्गोपेक्षणीयान्तराभावाद्, अत एकस्यात्ममनःसंयोगस्यैकज्ञानजनकत्वनियम इति भावः ।

संयोगान्तरेणेति पक्षं दूषयति—" नापि " इति, । उत्तर-

---

* तदेवमनुभवक्रमरूपकार्यभेदः परिदृश्यमानस्तदुपपादकासमवायिकारणभेदं कल्पयतीत्युक्तमिदानीं कार्यक्रमोऽपि क्रमवत्कारणमन्तरेणानुपपद्यमानोऽसमवायिकारणक्रमं कल्पयति ततश्च संयोगस्याऽसमवायिकारणस्यानेकत्वमित्याह — 'अक्रमाच्च' इति, ननु भवतु कारणक्रमः, तथापि नासमवायिकारणस्य सोऽपितु विषयेन्द्रियसंयोगादिरूपा या बाह्यसामग्री तदीयः स इत्याशङ्क्याह — 'बाह्यसामग्री' इति, । बाह्यसामग्र्यवच्छेदकक्रमभेदेन कार्यक्रमाभ्युपगमे युगपदेव सम्प्रयुक्तेषु घटपटादिषु युगपदेवानेकज्ञानजन्मप्रसङ्ग इत्यर्थः,

अयं भावः — यत्र युगपदेव विषयेन्द्रियसंयोगस्तत्र युगपदेवानेकानि ज्ञानानि जायेरन् न तु तदस्ति, तस्मात् तत्रापि कार्यक्रमप्रयोजको बाह्यसामग्र्यतिरिक्तस्यान्तरस्य कारणस्य क्रमो वक्तव्यः, तत्र चात्ममनसोरेकत्वात्क्रमसंयोगात्मविशेषात् तयोः संयोगलक्षणासमवायिकारणक्रम एव प्रयोजको वक्तव्यः, ततश्च सिद्धमसमवायिकारणस्य क्रमवत्त्वमिति,

मू०—कलाकलापविलम्बितं कथमिव वर्त्तमानमाकलयेद्वि-ज्ञानं प्राचीनमिति परिशेषतः स्वप्रकाशतैवास्याश्रयणीया, किंच कुम्भादयो जडत्वान्न स्वतः प्रकाशन्ते नाप्यन्योन्यप्रकाशाः, तत्र संवेदनमपि चेज्जडं किन्तेनाधिकमाचरितम् ।

नच नयनादिवज्जडात्मनोपि सत्तामात्रेणास्याऽर्थप्रकाशकता, विकल्पासहत्वात्, तथाहि—किं विज्ञानादन्यदर्थप्रकाशनमर्थस्वभावस्ततोर्थान्तरं वा स्यात्, न तावदर्थस्वभावो द्रवकठिनयोरिव जडप्रकाशयोरैकात्म्यविरोधा-

---

टी०—ज्ञानसमये पूर्वविज्ञानस्याभावात्घटं जानामीति वर्त्तमानतया विज्ञानप्रतिभासो न भवेदित्यर्थः, ।

अन्यथा जगदान्ध्यप्रसङ्गादपि विज्ञानस्य स्वयंप्रकाशत्वमभ्युपेयमित्याह—" किंच " इति, । घटादीनामेव तर्हि मिथः प्रकाशकत्वमस्त्विति तत्राह—" नापि " इति, ।

चक्षुरादिवदप्रकाशमानस्यापि विज्ञानस्यार्थप्रकाशकता* किन्न स्यादित्यत आह—"नचनयन" इति, । प्रकाशकता नाम प्रकाशजनकता, तथा च विज्ञानजन्यो यः प्रकाशः स किं विज्ञानाद्भिन्नत्वे सति तद्विषयादभिन्नः किं वा भिन्न इति विकल्पार्थः, आद्यं दूषयति— " नतावद् " इति, । स्थिरास्थिरत्वेन विरोधा-

---

* ज्ञायमानमेव विज्ञानमर्थव्यवहारहेतुरिति न नियमो निलीनस्यापि तस्य नयनादिवद् व्यवहारहेतुत्वसंभवादिति भावः, ।

मू०—तु, क्षणभंगिनश्च प्रकाशस्य प्रकाश्यैक्यानुपपत्तेः, नाप्यर्थान्तरमर्थधर्म्मो विज्ञानाधेयमर्थप्रकाशनमिति युक्तं, प्रध्वस्तानागतयोस्तदयोगात्, अस्ति च तयोरप्यवभासः, यद्यान्तरमेवार्थप्रकाशनमाश्रीयेत विज्ञानमेव तत्संज्ञान्तरेणापन्नं, तच्चेज्जडं न प्रकाशेत, नाप्यर्थः केवलोऽनात्मप्रकाशत्वाद्, इत्यायातमान्ध्यमशेषस्य जगतः, ।

तस्माद् विज्ञानमेव स्वपरप्रकाशस्वभावं प्रकाशत इत्याश्रयणीयम् ।

स्वात्मनि वृत्तिविरोधान्न स्वसंवेदनं विज्ञानमिति चेद्, मैवं, वृत्त्यनभ्युगमाद्, आलोकवद् ।

---

टी०—द्व्यैक्यं न संभवतीत्याह—"क्षण" इति, । द्वितीयं दूषयति—"नापि" इति, । अस्तु तर्हि तयोरप्रतिभास इति तत्राह—"अस्तिच" इति, । मा भूद्बाह्यार्थधर्मत्वमात्मधर्मत्वं किं न स्यादित्यत आह— "यद्यान्तरमेव" इति, । भवतु को दोष इत्यतआह— "तच्चेद्" इति, । प्रथमाविज्ञानवदित्यर्थः ।

स्वप्रकाशं ज्ञानमिति वदता एकस्यैव प्रकाश्यप्रकाशकभावोऽभिहित इति मन्वानः शङ्कते— "स्वात्मनि" इति, ।

दृष्टान्तं प्रपञ्चयति— "यथा" इति, । आलोकस्य विषयसंस्कारत्वम्, इन्द्रियसंस्कारत्वं वेति मतभेदमङ्गीकृत्याह—

मू०—यथा खल्वालोकः तमःपटलपाटनेन चक्षुराप्यायकत्वेन वा घटादिभिः स्वप्रकाशनायापेक्ष्यते नचालोकेन स्वप्रकाशायालोकान्तरं, नचास्य स्वात्मनि वृत्तिविरोधः, ।

न खल्वस्य स्वभावभेदादालोकान्तरानधीनप्रकाशादन्या वृत्तिर्या स्वात्मनि विरुध्येत, तथैव विज्ञानेपीति सर्वमनवद्यम् ।

अथाप्यस्य क्षणभङ्गिनः कथं नित्यात्मस्वभावतेति चेद्, मैवं, विज्ञानस्यापि क्षणभङ्गितासिद्धेः, ।

न च नीलसंवेदनसमये पीतसंवेदनानुपलम्भात्

---

टी०—"तमःपटल" इति, । अन्धकारस्थस्याप्यालोकनिहितविषयस्यावभासनादालोकस्य विषयसंस्कारकत्वं, नयनस्य तैजसत्वादालोकेन तैजसेन तस्य प्रचुरताकरणादिन्द्रियसंस्कारकत्वमिति परीक्षकाः । प्रकाशान्तराभावे स्वात्मनि वृत्तिविरोध इति तत्राह—" नच " इति, ।

तदेव स्पष्टयति— " नखलु " इति, । * स्वसंवेदनं संवेदनमित्यत्र स्वशब्दः 'स्वयंदासास्तपस्विन' इतिवदन्यव्यावृत्तिपरो नतु स्वात्मवृत्तिविधायक इत्यर्थः, ।

स्वयंप्रकाशत्वेपि विज्ञानस्यात्मस्वरूपता न संभवति क्षणिकत्वाद् इति शङ्कते—" अथापि " इति, । उपाध्युपहितस्यानु-

* स्वात्मवृत्तित्वाभावे कथं स्वसंवेदनं विज्ञानमिति शब्दप्रयोगस्तत्राह – 'स्वसंवेदनम्' इति ।

मू०—क्षणभङ्गत्वसिद्धिः, नीलाद्यनुपलम्भेपि स्वाभाविक-स्वरूपोपलम्भस्य दुर्निवारत्वाद् ।

न खलु नीलसंवेदनं पीतसंवेदनमिति संवेदनव्यक्तय एवोदयन्ते व्ययन्ते चेति साम्प्रतं, तत्राजानतो भेदा-नुपलम्भाद्, ।

नचाऽन्यस्य नीलादेर्भेदोपलम्भस्तत्वतःसंवेदनभे-

---

टी०—पलम्भेपि स्वरूपस्योपलम्भान्न क्षणिकत्वसिद्धिरिति परि-हरति—" नीलादि " इति; ।

अनुपहितज्ञानस्याभावादुपहिता एव ज्ञानव्यक्तयो जायन्ते नि-रुध्यन्ते चेत्यत आह—" नखलु " इति, । विशेषणभूतार्थभे-दमन्तरेणगगनस्यैव स्वरूपतो भेदानवगमादिति हेतुमाह—"तत्र" इति, । नच विषयस्यैकत्वेपि तत्र ग्रहणस्मरणयोरुपलम्भादस्ति स्व-रूपतो भेद इति वाच्यं तत्र धर्मिण एकत्वेपि पूर्वानुभवकर्मत्वत-द्रहितस्वरूपविशेषणभेदेन विषयस्य भेदादिति भावः, ।

अस्तु तर्हि विशेषणभेदादेव विशेष इति तत्राह—" नच " इति, नच विषयभेदस्य विज्ञानभेदप्रयोजकत्वं, विषयस्यैकत्वेपि भवता विज्ञानभेदाङ्गीकारात्, तद्भेदे चेश्वरज्ञानस्यैकत्वाभ्युपगमात्, विज्ञानं विज्ञानमिति चानुवृत्तप्रत्ययस्य गकारो गकार इति वदे-कव्यक्तिविषयत्वात्,सामान्यविषयत्वे च व्यक्तिभेदकल्पनागौरवाद्, भेदप्रत्ययस्य च तत्तद्विषयतत्तदंतःकरणवृत्त्युपाधिभेदेन घटाकाशो मठाकाश इतिवदुपपत्तेः, विवादाध्यासितमेतज्ज्ञानं एतज्ज्ञानप्र-तियोगिकभेदाधिकरणं न भवति ज्ञानत्वादेतद्वदिति प्रयोगसम्भवा-च्च, नच घटादिष्वपि समानः प्रसङ्गो, अद्वैतवादिनं प्रत्यनिष्टत्वाभा-वाद्, नचेदमस्मादिति पुरत एव भेदप्रतीतेः प्रतिज्ञापदयोर्व्याघात

मू०—दोपादानायालं, न च नीलादीनामन्योन्यभेदोपि श-क्यनिरूपण इति निवेदितं,

तस्मात् संवित्स्वरूपतायामात्मनो न दूषणं पश्यामः, सा च स्वयंप्रकाशेति सिद्धा तद्रूपस्यात्मनः स्वप्रकाशता, तथाच न तेनानैकान्तं प्राक्तनं साधनमिति सर्वं निर्मलम्।

"मायामयत्वसिद्धौ च प्रपञ्चस्य प्रमाणतः,
प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम्, ॥१॥
अद्वैतागमवाक्यन्तु तत्त्वावेदनलक्षणम् ।
प्रमाणभावं भजते वाधवैधुर्य्यहेतुतः" ॥ २ ॥

---

टी०—इति वाच्यम्, उत्थितः शयनादद्यतनः श्वस्तनाच्च भिद्यत इति वदविरोधादिति भावः । प्रमाणानां भेदाग्राहकत्वाद्विशेषणभेदोप्य सिद्ध इत्याह— "नच" इति, संविद्रूपत्वेपि कथं स्वप्रकाशत्व-मित्यत आह— "साच" इति, स्वप्रकाशत्वसाधनस्य फलमाह— "तथा च" इति,।

निखिलप्रपञ्चस्य मायामयत्वेन तन्मध्यपातिनां प्रत्यक्षागमादीना-मपि तथात्वादद्वितीयब्रह्मस्वरूपासिद्धिः, आगमस्य प्रमाणत्वे वा प्रत्यक्षादीनामपि तथात्वं किं न स्यान्मायाशरीरत्वमानत्वयोरविशे-षादित्यत आह—"मायामयत्व" इति, सत्यपि मायाशरीरत्वे त-त्त्वतो विषयवाधात् सांव्यावहारिकमेव प्रामाण्यं प्रत्यक्षादीनामि-त्यर्थः। आगमेपि तर्हि तथा किं न स्यादित्यत आह— "अद्वैत" इति, तत्त्वतो विषयवाधाभावादद्वैतागमस्य तात्त्विकमेव प्रामाण्य-मित्यर्थः।

मू०—इह खलु निखिलप्रमाणानां मायाशरीरत्वाविशेषेपि तत्त्वतो विषयबाधात्सांव्यवहारिकमेव प्रामाण्यं प्रत्यक्षादीनाम्, अद्वैतागमवाक्यानां तु तद्विपर्य्ययात् तात्त्विकमेव प्रामाण्यमिति साम्प्रतं

दृष्टा च मायाशरीरेभ्योपि तत्त्वज्ञानोत्पत्तिर्वर्णदैर्घ्यादिभ्यः,

तथाहि—वर्णह्रस्वदीर्घादयोऽन्यधर्मा अपि समारोपि-

---

टी०-प्रथमश्लोकं व्याचष्टे—"इह खलु" इति, द्वितीयश्लोकं व्याचष्टे—"अद्वैत" इति, तद्विपर्य्ययात्=तत्त्वतोविषयबाधाभावाद्, न च मायाशरीरत्वे प्रत्यक्षादिवद्विषयासत्यतापि स्यादिति वाच्यं—"सत्यं ज्ञानमनन्तं ब्रह्म" इति, विषयसत्यत्वश्रुतिविरोधेन कालात्ययापदिष्टत्वात्. स्वरूपसत्यत्वाविशेषादेव च शुक्तिरजतविज्ञानवत् प्रत्यक्षादेरपि विषयसत्यता भवतोपि न स्याद्, अथ विषये बाधाबाधाभ्यां तद्व्यवस्था, स्वरूपसत्त्यत्वाविशेषे निरंकुशप्रसरे सापि भवतः कथं स्यात्, तथाभावे वा मायावादिना किमपराद्धं येन तत्र सा न भवेदिति भावः। मायाशरीरस्य तत्त्वप्रमितिजनकत्वमदृष्टचरमित्यत आह—"दृष्टाच" इति, स्वरूपतः सत्त्यस्यापि प्रमितिजनकत्वमदृष्टचरमिति पर्यनुयोगः सत्यवादिनोपि तुल्य एव तथापि सुहृद्भावेन वर्णदैर्घ्योदाहरणमिति मन्तव्यं,।

वर्णदैर्घ्यादीनां मायाशरीरत्वमुपपादयति— "तथाहि" इति, वर्णनित्यत्ववादे दैर्घ्यादीनां वर्णधर्मत्वाभावादभिव्यञ्जक-

मू०—ताः तत्त्वप्रतिपत्तिहेतवो, न खलु लौकिका नाग इति च नग इति वा पदात् कुञ्जरं गिरिं वा प्रतिपद्यमाना भवन्ति भ्रान्ताः।

प्रतिविम्बस्य चालीकस्य सत्यबिम्बानुमापकता दृष्टैव, न च तत्र विज्ञानमात्रस्य स्वरूपसतः प्रामाण्यं न

---

टी०—ध्वनिधर्म्मा वर्णेष्वारोपिताः स्वीक्रियन्ते। नन्वख्यातिवादे दीर्घत्वादयो वर्णेषु तथा व्यवह्रियमाणास्तत्त्वप्रतिपत्तिहेतवो नतु परारोपितास्तत्कथं दृष्टान्त इति चेद्, इतोपि दीयतां दृष्टिः प्रमाणप्रमेयप्रपञ्चोप्यविद्यमान एव ब्रह्मणि तथा व्यवह्रियमाणस्तत्त्वप्रतिपत्तिहेतुरस्तु,। नन्वभिव्यञ्जकध्वनिषु दीर्घादयः परमार्थतो विद्यमाना गकारादिषु तथा व्यवह्रियन्ते प्रपञ्चः पुनरन्यत्रातथाभूतः कथं ब्रह्मणि तथा व्यवह्रियतामिति चेत् तत्किमिदानीं वर्णविशिष्टतया तथा व्यवह्रियमाणमपि दीर्घत्वादिस्वरूपं परमार्थवस्तु, तथासति वाधो दत्तजलाञ्जलिः स्यात्, संसर्गप्रत्ययमनादृत्यासंसर्गाग्रहादेव संसर्गव्यवहाराङ्गीकारे च निरंकुशप्रसरोयमसंसर्गाग्रह. संसर्गग्रहावग्रासो मानकथामपि वितथी कुर्यात्, यत्राऽविसंवादिव्यवहारस्तत्र संसर्गज्ञानमन्यत्र पुनरन्यथेति चेद्.हन्त व्यवहाराविसंवादिविसंवादित्वयोरप्यसंसर्गाग्रहादेव तथाव्यवहारेऽविसंवादित्वमपि व्यवहारस्य कथं स्यादित्यलमतिविस्तरेण,।

ननु वर्णानित्यत्ववादे दीर्घत्वादयो वर्णेषु परमार्थभूतास्तत्कथमयं दृष्टान्त इत्यपरितोषादाह—"प्रतिविम्बस्य" इति, ननु बिम्बानुमानेपि प्रतिविम्बज्ञानमात्रस्य सत्यस्यैव प्रामाण्यं नतु मिथ्याभूतस्य प्रतिविम्बस्येत्याशङ्क्याह—"नच" इति, ज्ञानमात्रस्य विम्बानुमापकत्वमुतालीकप्रतिविम्बावच्छिन्नस्येति विकल्प्याद्यं दू-

मू०—पुनर्विषयस्याप्यलीकस्येति साम्प्रतं, विज्ञानान्तरेपि तत्प्रसङ्गाद्, अलीकालम्बनभेदावच्छिन्नस्यैव तस्य तथात्वान्नातिप्रसङ्ग इति चेत् कथं तर्हि तदवच्छिन्नस्य व्याप्यतायां तस्याप्रमाणता,

तदेवं मायाशरीरताविशेषेपि कस्य चिदर्थाविसंवादात्प्रामाण्यं कस्य चिन्नेति न किञ्चिदवद्यम्

उक्तं हि—" मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः, मिथ्याज्ञानाविशेषेपि विशेषोऽर्थक्रियां प्रति" इति, ।

एवं चेदमपास्तं यदाहुः—'प्रतिष्ठितप्रामाण्यप्राचीनप्र-

---

टी०-षयति—" विज्ञानान्तरेपि " इति, ।

द्वितीयं पक्षमुत्थाप्य दूषयति—" अलीक " इति, विशिष्टस्य प्रमितिजनकत्वे विशेषणस्यापि तदवश्यंभावीत्यर्थः,

उक्तव्यवस्थामुपसंहरति—" तदेवम् " इति, ।

सर्वस्य मायामयत्वे विसंवादाविसंवादव्यवस्थापि कथं स्यादिति शङ्कां धर्मकीर्त्तिवचनेन परिहरति—" उक्तम् " इति, प्रत्यक्षादीनां सांव्यवहारिकप्रामाण्योपपादनेनेदमपि चोद्यं निराकृतमित्याह—" एवंच " इति, एकप्रमाणवादिनापि चार्वाकेणाध्यक्षस्य प्रमाणद्वयवादिबौद्धेनाध्यक्षादेः प्रामाण्यस्य स्वीकरणात्प्रतिष्ठितम्, आगमस्य स्वरूपे प्रामाण्ये च विप्रतिपत्तेरप्रतिष्ठितं प्रामाण्यं, पदपदार्थयोः स्वरूपग्रहणे प्रत्यक्षस्य संगतिग्रहणे चानुमानार्थापत्त्योरुपयोगात्प्राचीनत्वं, प्रतिष्ठिताप्रतिष्ठितयोः सापेक्षनिरपेक्षयोश्च विरोधे प्रतिष्ठितं निरपेक्षं च प्रबलमितरद् दुर्बलमिति न्यायादागमस्याप्रामाण्यमित्यर्थः, ।

मू०—त्यक्षादिविरोधादाम्नायस्य तदपेक्षस्याप्रामाण्यम्' इति,

सांव्यवहारिकप्रामाण्यभावस्यैव प्रत्यक्षादेः स्वरूपसिद्धावाम्नायेनापेक्ष्यमाणत्वात्, तात्त्विकांशबाधनेऽपि विरोधाभावात्, ।

प्राचीनतया च प्रतिष्ठितस्यापि रजतज्ञानस्य प्रसञ्जकतया च स्वरूपसिद्धावपेक्ष्यमाणस्यापि नेदं रजतमिति पराचीनज्ञानेन बाधदर्शनाद्,

आम्नायस्यापि स्वतः सिद्धप्रमाणभावस्य प्रमिता-

---

टी०—सांव्यवहारिकप्रामाण्यस्योपजीव्यत्वे तदन्यथाप्रतिपादन उपजीव्यविरोधः किं वा तात्त्विकस्य,आद्ये तस्योपजीव्यत्वेपि तद्बाधाभावान्न विरोध इति परिहरति—" सांव्यावहारिक " इति, पदपदार्थयोः स्वरूपस्य संबंधस्य वाऽग्रहे शब्दस्याप्रामाण्यादुपजीव्यस्तात्त्विकांश इति न वाच्यं त्रिचतुरकक्षाविश्रान्तेनैव तद्ग्रहाङ्गीकाराद्, अन्यथा सर्वपुरुषावाध्यत्वस्यासर्वज्ञेन दुर्विज्ञानतया न शब्दप्रवृत्तिस्स्यादित्यर्थः । तात्त्विकांशस्यानुपजीव्यत्वात् तद्बाधेपि न विरोध इति द्वितीयं पक्षं दूषयति—" तात्त्विक " इति, आम्नायस्य सापेक्षत्वं किमुत्पत्तौ किं वा प्रमिताविति विकल्प्याद्ये दोषमाह—" प्राचीनतयाच " इति,।

द्वितीये दोषमाह—" आम्नायस्य " इति,।

मू०—अनपेक्षतासाम्याद् युक्तं तस्य परस्यैव वलीयस्त्वं, तदुक्तं महर्षिणा—"पौर्वापर्य्ये पूर्वदौर्वल्यं प्रकृतिवद्" इति* ।

---

टी०-उत्तरस्य प्रावल्ये जैमिनिसूत्रमुदाहरति— "तदुक्तम्" इति, इदमाम्नायते 'वहिष्पवमानं प्रसरतामृत्विजां यदि प्रतिहर्त्तापच्छिद्येत पशुभिर्यजमानो वाध्येत सर्वस्वं दद्यात्, यद्युद्गातापच्छिद्येत यज्ञेन यजमानो वाध्येत, अदक्षिणो यज्ञः समाप्यत, इति, तत्र प्रतिहर्त्तुरपच्छेदे सर्वस्वदक्षिणा उद्गातुरपच्छेदे दक्षिणाभाव. प्रायश्चित्तं प्रतीयते पूर्वाधिकरणे† युगपन्निमित्तद्वयसन्निपाते सत्युभयोरगृह्यमाणाविशेषत्वादुभयं निमित्तं विकल्पेन नैमित्तिकं प्रयोजयति, इति स्थापितं, यदा पुन प्रतिहर्तुरुद्गातुश्च क्रमेणापच्छद. तदा पूर्वनिमित्तं नैमित्तिकं प्रयोजयत्याहोस्विदुत्तरं निमित्तमित्ति संदिह्यते, तत्र प्रथमभाविनोऽनुपसंजातविरोधित्वात्तद्विरोधेन चोत्तरस्योत्थानानुपपत्ते. पूर्वमेव निमित्तं नैमित्तिकं प्रयोजयतीति प्राप्ते उच्यते— "पौर्वापर्ये पूर्वदौर्वल्यं प्रकृतिवद्" इति, निमित्तयोः पौर्वापर्ये पूर्वदौर्वल्यम्, उत्तरस्य वलवत्त्वं न्याय्यम्, उत्तरस्य दक्षिणाभावविषयशास्त्रस्य पूर्वनिरपेक्षतया जन्यविज्ञानस्य पूर्वज्ञानविषयापहारेणैव जायमानत्वात्‡ प्रथमस्य वलवत्त्वस्य पूर्वसापेक्षात्तर-

---

* जै० अ० ६ पा० ५ सू० ५४ अधि० २२ ।

† ज्योतिष्टोमे बहिष्पवमानार्थं हविर्धानान्निर्गच्छतामृत्विगयजमानानामन्वारम्भणं विहित—'अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारमुद्गातोद्गातार प्रतिहर्ता' इत्यादिना, तद्विच्छेदे च प्रायश्चित्तमाम्नायते 'यद्युद्गाताऽवच्छिद्येताऽदक्षिण तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद् दद्यात् यत पूर्वस्मिन् दास्यन् स्याद् यदि प्रतिहर्तापच्छिद्येत सर्ववेदसदद्याद् इति, तत्रोद्गातु प्रतिहर्तुश्च युगपद् विच्छेदे सति "तत्र विप्रतिषेधाद्विकल्पः स्याद्' इति पूर्वस्मिन्नधिकरणे उभयनिमित्तसद्भावादैच्छिक 'उद्गातृनिमित्तक. प्रतिहर्तृनिमित्तको वा' प्रायश्चित्तो निर्णीत', आनुपूर्व्या क्रमेणावच्छेदे त्वनेन निर्णीयत इति भावः ।

‡ पूर्वोदयकाले उत्तरस्याऽप्राप्तत्वादपि न पूर्वेण परस्य वाध, तथा चाहुः—पूर्वं परमजातत्वादवाधित्वैव जायते, परस्याऽनन्यथोत्पादान्नत्ववाधेन सम्भव:" इति, ।

मू०—तथाच—" पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्, अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेद्" इति,

ये पुनर्मायाशरीरताऽविशेषेण वेदबुद्धागमयोरविशेष इत्याचक्षते तेषां सर्वसत्त्यतायामपि समानः प्रसङ्गः, ।

पुरुषाधीनविरचनानां चैत्यवन्दनादिवचनानां तद्दोषदूषिततया विषयविसंवादशङ्कया वा न प्रामाण्यनि-

---

टी०—विषयत्वाद्, युगपदपच्छेदे प्रतिहर्तृमात्रापच्छेदे च पूर्वशास्त्रस्य सावकाशत्वाद् निरवकाशेनोत्तरेण पूर्वं बाध्यत इति, 'प्रकृतिवद्' इति निदर्शनं, तत्रेत्थं कुर्य्यादित्युपदेश, तद्वत्कुर्यादित्यातिदेशः, यत्रोपदेशत एवाङ्गानां प्राप्तिः सा प्रकृति., यत्रातिदेशतः प्राप्तिः सा विकृतिः, यथाविकृतौ 'शरमयं बर्हिर्' इतिप्रत्याम्नायेनोत्तरभाविना कुशानां प्राकृतानाम्, आज्यभागयोश्च 'तौ न पशौ करोति' इति प्रतिषेधेनोत्तरभाविना बाधः, तद्वदित्यर्थः,* ।

उक्तेर्थे भट्टवार्त्तिकमुदाहरति—" तथाच " इति, अन्योन्यनिरपेक्षाणां=प्रमितावन्योन्यनिरपेक्षाणां नतूत्पत्तौ, उत्पत्तौ सापेक्षस्यापि नेदं रजतमित्यस्य पूर्वबाधकत्वात्, ।

मायाशरीरत्वाविशेषाद्वेदस्य बुद्धागमेनाविशेष इति मतान्तरमुत्थाप्य निराकरोति—" ये पुनर " इति, वैषम्यं शङ्कते पूर्ववादी—" पुरुषाधीन " इति, तद्दोषदूषिततया=विप्रलम्भादिदोषदूषिततया, विसंवादशङ्कया, अङ्गुल्यग्रादिवाक्येषु† विसंवा-

---

* यथाहि प्रकृतौ क्रमोपकारा कुशा प्रथममतिदेशेनोपकाराकाङ्क्षया विकृतौ प्राप्ता अपि क्लृप्तोपकारतया चरमभाविभिरपि निरपेक्षैः शरैर्बाध्यन्ते तद्वदित्यर्थः,

एवं च यथा तत्र पूर्वं निमित्तकर्तव्यता बुद्धि परनिमित्तकर्तव्यताधिया बाध्यते तथा श्रुतिजन्याद्वैतधिया परया पूर्वं प्रत्यक्षजन्या कर्तृत्वादिधीर्बाध्यत इति सिद्धम् ।

† अङ्गुल्यग्रे करिणा शतमित्यादिषु ।

मू०—श्चयो,वेदे पुनरपौरुषेयतया निरस्तसमस्तदोषाशङ्कतया स्वाभाविकी प्रमाणता प्रतिष्ठां लभत इति चेत्,तत्पक्षान्तरेपि समानम्, ।

इयाँस्तु विशेष औपनिषदपुरुषाधिगमस्य कर्माधिकारविरोधितया ततः पुरस्तादेव कर्मविधयः स्वोचितमधिकारिणमविद्यावन्तमाश्रित्य व्यवहारनिर्वर्तकाः 'न हिंस्यात्सर्वा भूतानि ' इति साध्यांशनिषेधेपि श्येनादिविधय इव व्यामूढपुरुषापेक्षाः,तत्त्वदर्शिनस्तु विजितक्रोधारातयः प्रतिषेधशास्त्रार्थनिश्चयवन्त इव श्ये-

---

टी०—दस्य च दृष्टत्वात्, निरस्ता समस्तदोषाणामाशङ्का यस्मिन्स निरस्तसमस्तदोषाशङ्कस्तस्यभावस्तत्ता तयेति यावत्, तत्रहेतुर्— " अपौरुषेयतया " इति, तुल्यमेतदितरत्रापीति परि हरति— " तत्पक्षान्तरेपि " इति, तर्कि वेदस्य प्रमाणत्वाविशेषाज् ज्ञानकर्मकाण्डयोस्तुल्यवदधिकारिणं प्रति प्रवृत्तिजनकत्वमिति, नेत्याह— " इयाँस्तु " इति, ननु शास्त्रस्य विद्वदधिकारित्वात्कथमविद्यावन्तमाश्रित्य विधिप्रवृत्तिरिति तत्राह–"नहिंस्याद्"इति।

व्यामूढपुरुषापेक्षस्य विधेस्तत्त्वज्ञानिनं प्रति कर्त्तव्यविशेषानवबोधकत्वे दृष्टान्तमाह— " तत्त्वदर्शिनस्तु " इति, यावज्जीवमग्निहोत्रं जुहुयाद् इत्यविशेपेण विधिवशाद्विद्वदविद्वत्साधारण्यमेव किं नस्यादिति वा शङ्कां प्रत्याह— " तत्त्वदर्शिनस्तु " इति, तत्त्वदर्शिनः कर्मविधिभिर्नानुशिष्यन्त इत्यन्वयः, तत्र दृष्टान्तमाह—" विजितक्रोधारातय " इति,विजितः क्रोध एवारातिः=

मू०—नादिविधिना कर्मविधिभिरपि नानुशिष्यन्ते,

नचैवं परस्परपराहतिः, कर्मज्ञानभागयोर्विद्याऽविद्यावत्पुरुषभेदेन व्यवस्थोपपत्तेः।

सर्वस्य च मायाशरीरताध्यवसायेपि यावत्तत्त्वसाक्षात्कारं विपर्यासनिबन्धना व्यवहारानुवृत्तिरपि युक्तैव, यथा खलु गुडस्य माधुर्यविनिश्चयेपि पित्तोपहतेन्द्रियाणां तिक्तावभासानुवृत्तिः, आस्वाद्य थूत्कृत्य त्यागाद्,

तत्त्वसाक्षात्कारे तु प्रलीयत एव सकलोप्ययं भे-

---

टी०—शत्रुःयैस्ते विजितक्रोधारातयः, क्रोधाभावे हेतुः 'प्रतिषेधशास्त्रार्थनिश्चयवन्त' इति, उक्तविशेषणाः पुरुषा यथा श्येनेनाभिचरन् यजेतेत्यनेन नानुशिष्यन्ते, तथा तत्त्वदर्शिनः कर्मविधिभिरित्यर्थः।

एकमेवाधिकारिणं प्रति कर्मविधिभिर्ज्ञानविधिभिश्च कर्मणो विधानात्प्रतिषेधाच्च परस्परविरोधित्वादप्रामाण्यमिति, तत आह—" नचैवम् " इति,।

नन्वनुमानागमाभ्यां प्रपञ्चस्य मिथ्यात्वनिश्चयाद् देहाद्यभिमाननिबंधना प्रवृत्तिरेव न स्यादित्यत आह—" सर्वस्यच " इति,। परोक्षतत्त्वज्ञानेनापरोक्षस्य भ्रमस्याविनिवृत्तेस्तन्निबन्धना प्रवृत्तिरुपपद्यतैवेत्यर्थः।

तिक्तावभासानुवृत्तिः कथमवगतेति तत्राह— " आस्वाद्य " इति,। कथंतर्हि प्रपञ्चविभ्रमनिवृत्तिरिति तत्राह—"तत्त्व" इति,।

मू०—दावभासः, तस्य च मायात्मनोपि विषयसत्त्यतया प्रमाणभावो विपर्य्यासविरोधिता च युक्ता, स चाविद्यावभासमात्रविरोधितया स्वयमपि प्रलीयते,

यथा कतकरजो रजोन्तरसंपर्ककलुषिते सलिले प्रक्षिप्तं रजोन्तराणि विलापयत् स्वयमपि विलीयमानमनाविलं सलिलमापादयति तथा परमात्मतत्त्वसाक्षात्कारोप्यविद्यात्मकोऽविद्यावभासान्तराणि संहरन्स्वयमपि संह्रियमाणः परिशुद्धमात्मतत्त्वं व्यवस्थापयतीति न किंचिदवद्यम्,

एवं च प्रमाणोपपत्त्यनुपपत्त्योरद्वैतविघात इत्यप्यनवका

---

टी०—तत्त्वसाक्षात्कारस्यापिमायाशरीरत्त्वाद् रजतादिविभ्रमवत्प्रमाणत्वं विपर्य्यासविरोधित्वं च न स्यादित्यत आह— " तस्यच " इति, विषयसत्त्यताशब्देनाज्ञातवस्तुविषयत्त्वं विवक्षितमन्यथा स्मृतेरपि प्रामाण्यप्रसंगः, ।

ननु साक्षात्कारस्यापि निवर्त्तकान्तरमस्ति चेदनवस्थापातो निवर्त्तकाभावे तस्यानुवृत्तौ तदुपादानाविद्यानुवृत्तिरपि स्यादित्यत आह— " सच " इति, । साक्षात्कारस्यापि स्वपरविरोधित्वादुपादानाविद्यानिवृत्तौ तन्निवृत्तेरयत्नसिद्धत्वाच्च न निवर्त्तकान्तरापेक्षा नापि तदनुवृत्तिरित्यर्थः ।

भावानां स्वपरविरोधित्वे दृष्टान्तमाह—" यथा " इति, दार्ष्टान्तिकमाह— " तथा " इति, ।

अद्वैते यदि प्रमाणमस्ति तदा प्रमाणं प्रमेयं चेति द्वैतापातो नास्तिचेदद्वैतासिद्धिर्मानाभावादित्यत आह— " एवंच " इति, । प्र-

मू०—शं चोद्यं, सदद्वैताभ्युपगमाद्, अलीकाकारेण च प्रमाणादिविभागेन तदविघाताद्, अलीकाकारस्य च तत्त्वगोचरतया प्रमाणभावस्योपपादितत्त्वात्, प्रमाणोपपत्तौ प्रमेयानुपपत्तिरित्यपि न सुभाषितं,

" तस्मान्मायामयत्वेपि युक्ता ब्रह्मणि मानता,
अद्वैतागमवाक्यानामिति तावद् व्यवस्थितम् "

सिद्धे तत्त्वे मानभावो न युक्तो, वेदान्तानां तत्र सङ्गत्ययोगात्, तत्संवित्तिर्वृद्धचैष्टैकलिङ्गा, कार्य्ये सा चेत्याह कश्चिद्विपश्चिद् '

इह खलु संगतिसंवेदनापेक्षा सकलपदानामभिधेयधी-

---

टी०—माणस्यालीकत्वादद्वैताविघात इत्यर्थः। अलीकस्य कथं साधकत्वं तत्राह— " अलीकाकारस्य " इति,।

प्रमाणे सत्यद्वैतव्याघात इति यदुक्तं तदत्यन्तानुपपन्नमेव, प्रमाणस्य प्रमेयसाधकतया तदविघातकत्वादित्याह—" प्रमाण " इति,।

उक्तमुपसंहरन्नुत्तरवादस्य पातनिकामाह—" तस्माद् " इति,।

अद्वैतागमवाक्यानां ब्रह्मणि मानतेत्युक्तमसृष्यमाणः प्राभाकरः प्राह—" सिद्धे तत्त्वे " इति,। सङ्गत्ययोगं दर्शयितुं सङ्गतिग्रहोपायमाह—" तत्संवित्तिर् " इति,। सङ्गतिरपि सिद्धे किं न स्यादित्यत आह—" कार्य्ये " इति, वृद्धव्यवहारस्य कार्य्यैकनियतत्वात् तत्रैव सङ्गतिरधीत्यर्थः।

श्लोकं व्याख्यातुं भूमिकामारचयति—" इह खलु " इति,।

मू०—जनकतेत्यविवादमखिलवादिनां, वृद्धव्यवहाराधीनं च तत्संवेदनं, व्यवहारश्च कार्यावबोधनिबन्धन इति तत्परतयैव सर्वपदानां संगत्यधिगतिः,

तथा हि माणवक समिधमाहरेत्याचार्य्यवाक्यश्रवणसमनन्तरं समिदाहरणे प्रवर्तमानं माणवकमुपलभ्य पार्श्वस्थो व्युत्पित्सुरित्थमवधारयति बुद्धिपूर्वेयमस्य प्रवृत्तिः स्वतन्त्रप्रवृत्तित्वात्मदीयप्रवृत्तिवत्, यथा चाहं बुध्वा प्रवृत्तस्तथैवायमपि पदविशेषाद्, अहं च कार्यमेव बुध्वा प्रवृत्तस्तेनाय मपि तदेवावुध्य प्रवृत्तः, तदवबोधश्चास्याचार्यवचनानन्तरमुपजायमानः तन्निवन्धन एवेति कार्या-

---

टी०—तृतीयपादं व्याचष्टे—"वृद्ध" इति,। चतुर्थपादं व्याचष्टे—"व्यवहारश्च" इति,।

कार्यपरतायां सङ्गत्यधिगमं दर्शयति,—"तथाहि" इति,। उन्मत्तप्रवृत्तौ व्यभिचारनिवारणार्थं—"स्वतंत्र" इति विशेषणं, भवतु ज्ञानानुमानं तस्य कथं कार्यविषयत्त्वमत आह—"यथाचाहम्" इति,। तथापि किमित्यत आह—"अहंच" इति,। भवतुकार्यज्ञानस्यानुमानं तथापि शब्दजन्यत्वं कथमित्यत आह—"तदवबोधश्च" इति,। तथापि किं पदं कस्यार्थस्य वा-

मू०—भिधायितां वाक्यस्य कल्पयति, तत्र च लिङ्ङादेः साक्षात्कार्य्यगोचरतामितरस्य च पदजातस्य तदन्वितस्वार्थपरतामध्यवस्यति, तदेवं साक्षात्परम्परया वा सकलपदानां कार्य्यपरतैव वृद्धव्यवहारवशाद् व्युत्पन्ना तत्कथमनवसितसङ्गतिकेभ्यः पदेभ्यः सिद्धार्थमात्रगोचरा धीः सम्भवेद्,

स्यान्मतं विनापि व्यवहारं सिद्धार्थपदादपि लौकिकाद्वचनात् संभवत्येव व्युत्पत्तिः, तद् यथा—पुत्रस्ते जात इति पदनिचयश्रवणसमनन्तरं वदनविकसनादिना श्रोतुर्हर्षोत्पत्तिमनुमाय तस्याश्च तद्धेतुमंतरेणासंभवमधिगम्य प्रियार्थप्रतीतेश्च हर्षहेतुभावं स्वात्मदृष्टान्तेनाधिगम्य तस्याश्च कारणविशेषाकाङ्क्षायां पुत्रस्तेजात

---

टी०—चकमिति विशेषनिर्णय कथमिति तत्राह—"तत्रच" इति,। कार्ये सङ्गतिग्रहणमुपसंहरति—" तदेवम् " इति, सिद्धेपि तथा किं न स्यादित्यत आह—" तत्रकथम् " इति,।

व्यवहारं विनापि सिद्धेपि सङ्गतिग्रहणमाशङ्कते— " स्यान्मतम् " इति, । " हर्षोत्पत्तिमनुमाय " इति, । अयं हर्षवान्विकसितवदनत्वात् मद्वदित्यर्थः, तथापि कथं सिद्धे व्युत्पत्तिरित्यत आह—" तस्याश्च " इति, अयं हर्षः प्रियार्थप्रतीतिनिबन्धनो हर्षत्वान्मदीयहर्षवद्, इत्यधिगम्येत्यर्थः, भवतुप्रियार्थाधिगतिःतस्याः शब्दवाच्यत्वं कथमित्यत आह—" तस्याश्च " इति,।

मू०—इति वाक्यस्यान्वय व्यतिरेकाभ्यां तद्धेतुभावमध्यवस्यति, पुत्रजन्मैव चास्य प्रियं प्रमाणांतरेणाधिगतमिति तदभिधायकतैव शब्दस्याऽऽश्रीयते, तत्र च प्रतिपदमावापोद्धाराभ्यां स्वार्थविशेषसंबन्धाध्यवसायः, ।

तथाच देवदत्तः काष्टैः स्थाल्यामोदनं पचतीति वर्तमानार्थनिष्ठेपि प्रयोगे व्युत्पन्नेतरपदविभक्त्यर्थोऽव्युत्पन्नकाष्ठप्रातिपदिकार्थः प्रसिद्धार्थपदसमभिव्याहारेण यत् पाके करणं तत्काष्टशब्देन प्रतिपाद्यत इत्यवगम्य प्रत्यक्षेण च काष्ठानां करणभावमवगच्छन् काष्टशब्दस्य तदर्थनिष्ठतां व्युत्पद्यते तत्र कथं कार्य्यान्वय्येव शब्दगोचर इति निश्चेतुं शक्येतेति,

तदयुक्तं तथाहि यद्यपिवदनविकसनादिना लि-

---

टी०—भवतु वचनात्प्रियार्थाधिगति पुत्रजन्मनस्तु कथमधिगतिरित्यत आह—" पुत्रजन्मैव " इति, । तथापि पदविशेषस्यार्थविशेषे कथं सङ्गत्यधिगतिरित्यत आह—" तत्रच " इति, ।

सङ्गतिग्रहोपायान्तरमाह—" तथाच " इति, । व्युत्पन्न इतरपदानां=काष्टपदव्यतिरिक्तपदानां विभक्तीनां चार्थो येन स तथा, " प्रसिद्धार्थपदसमभिव्याहारेण " इति, । पचतीति प्रसिद्धार्थपदेन काष्ठपदस्य संभूयोच्चारणादिति यावत् ।

भवतु पाके करणमात्रप्रतीतिस्तथापि कथं विशेषनिर्णय, इत्यत आह—" प्रत्यक्षेण " इति, ।

मू०—ङ्गेन हर्षोत्पादानुमानं, तेन च तद्धेत्ववगमः, तत्कारणताध्यवसायश्च शब्दस्य सम्भवी, तथापि पुत्रस्ते जात इति वचनस्य पुत्रजन्माख्यहर्षहेतुबोधकता दुरधिगमा,नो खलु पारिशेष्येण तद्बोधकताधिगमो, भूतभविष्यद्वर्तमानानां सन्निहितव्यवहितानां च हर्षहेतूनां संभवात्परिशेषावधारणानुपपत्तेः, व्यवहारः पुनः प्रत्यक्षतो विषयविशेषगोचरतयोपलभ्यमानो नाव्यवस्थामवलम्बत इति व्यवहार एव व्युत्पत्तावादिमार्गः, तस्य च कार्यावगमं विनानुपत्तेः कार्यपरतैव तद्वशात्सर्वशब्दानामाश्रयणीया, तथाच यः कश्चन सिद्धार्थपरतया पदप्रयोगो लोके स सर्वोपि लाक्षणिको भविष्यति, कार्यान्वयो हि परस्परान्वयाव्य-

---

टी०—ननु पारिशेष्येण तद्बोधकतानिश्चय इत्यत आह—"नोखलु" इति,। व्यवहारेपि तर्हि पारिशेष्यावधारणं न स्यादित्यत आह—" व्यवहार " इति,।

भवतु व्युत्पत्तावादिमार्गस्तथापि कार्य्यपरत्वं कथमित्यत आह—" तस्य " इति,। ननु कार्य्यवत् सिद्धेपि प्रयोगो दृश्यते तत्कथं तत्र प्रतिपत्त्यभावस्तत्राह—" तथाच " इति,। लाक्षणिकः=कार्य्यलक्षणापर इति यावद्,।

संबन्धाभावे कथं लक्षणेत्यत आह— " कार्य्यान्वयोहि "

मू०—भिचारीत्यविवक्षित्वा कार्य्यान्वयं परस्परपदार्थान्वयविवक्षयापि लक्षणया लोकः शब्दं प्रयुङ्क्त इति प्रथमावसितौत्सर्गिककार्यपरतानुसारेण कल्प्यते, ।

एतेन समभिव्याहारादिना व्युत्पत्तिरित्यपि परास्तं, तादृश्या व्युत्पत्तेः व्यवहारनिबन्धनव्युत्पत्त्युत्तरकालतया कथं चन तदानुगुण्येनैव सम्भवाद् ।

एवं च वेदान्तानामपि आत्मा ज्ञातव्य इत्यपु-

---

टी०—इति, । 'देवदत्त गामभ्याज'इत्यत्र देवदत्तादिपदानां परस्परान्वयस्य कार्य्यान्वयेनाव्यभिचारित्वात्—पुत्रस्ते जात इत्यत्रापि परस्परान्वयस्तं पश्येति कार्य्यान्वयं लक्षयति द्वारमित्यत्र संव्रियतामिति वदित्यर्थः ।

सिद्धप्रयोगस्य परस्परान्वयत्वमेव किं न स्यादित्यत आह—"प्रथमावगत" इति ।

प्रसिद्धपदसमभिव्याहारादपि व्युत्पत्तिरिति यदुक्तं तद्विघटयति—"एतेन" इति, । "तादृश्या" इति, तादृश्याः=प्रसिद्धपदसमभिव्याहारनिबन्धनाया देवदत्तादिपदानां कार्य्यपरत्वावगमोत्तरकालत्तया समभिव्याहारव्युत्पत्तेः वर्त्तमानापदेशेपि यः पचति तमानयेति कार्य्यपरत्वमेव निश्चीयत इत्यर्थः ।

भवतु लोके कार्यपरत्वं तथापि न तद्वेदान्तानां 'सत्यं ज्ञानम्' इत्यादिषु लिङ्ङादेरश्रवणादित्यत आह—"एवंच" इति, । आत्मा ज्ञातव्य इति विहितज्ञानस्य फलाकाङ्क्षायाम्—"एतावदरे खल्व-

मू०—नरावृत्तये समाम्नातेन विधिनैकवाक्यभावमाश्रित्य कार्यपरतैव वर्णनीयेति सिद्धम् ।

अस्तु वा सिद्धार्थसङ्गतिः पदानां तथापि नाद्वैतानन्दादिरूपे ब्रह्मणि मानभावो वेदान्तानां, प्रमाणान्तरविरोधात्, आत्मा हि ब्रह्म स चाहंकारास्पदतया

---

टी०—मृतत्वम् " इति वाक्यशेषे श्रूयमाणममृतत्वमेव फलमाम्नायते प्रतिष्ठाफलमिव रात्रिसत्रस्य,*फलान्तरकल्पनायां कल्पनागौरवप्रसंगात्, तथाचकोसावित्याकाङ्क्षायामात्मस्वरूपसमर्पणेन सत्यं ज्ञानमित्यादीनि वाक्यानि विधिनैकवाक्यभावं प्रतिपद्यन्त इत्यर्थः ।

लोके सिद्धार्थव्युत्पत्तिमङ्गीकृत्य वेदान्तेषु सा न सम्भवतीत्याह—" अस्तु वा " इति, । ननु मानान्तराऽविषये ब्रह्मणि कथं तद्विरोधः स्यादित्यत आह—" आत्मा हि " इति, ।

तथापि किमित्यत आह—" स च " इति, । घटमहं जानामि स्मरामीति वा द्वितीयतया प्रकाशते न पुनरद्वैतानन्दरूपतया तेन भवति मानान्तरविरोध इत्यर्थः, नचानंदस्वरूपस्यावृतत्वादप्र-

---

* जैमिनीये " प्रतितिष्ठन्ति ह वा य एता रात्रीरुपेयुर् " इत्यत्र'आयुर्ज्योतिर्'इत्यादिवाक्यविहितरात्रिशब्दितसोमयागविशेषेषु फलाश्रवणात्कि विश्वजिन्न्यायेन स्वर्ग एवाधिकारिविशेषणम्,उत वाक्यगता प्रतिष्ठेति संशय्य, एवंकाम इत्यश्रवणाद् विधिशक्तिलभ्यः स्वर्ग एव ह्यधिकारिविशेषणं यथा विश्वजिति सन्देहे हि वाक्यशेषस्वीकारी न निश्चये, निश्चितश्च हि सर्वाभिलषित. स्वर्गो'नियोज्यविशेषणम्'या तु प्रतिष्ठाविषया श्रुतिः सापि लक्षणया स्वर्गपरैव कल्पनीयेत्येव प्रत्यवस्थाय " फलमात्रेयो निर्देशादश्रुतौ ह्यनुमान स्याद् " अ० ४ । पा० ३ स० १८ इत्यनेन प्रतिष्ठाफलस्य निर्देशात्तदेवाधिकारिविशेषणम्,अतएवान्याश्रुतफलकल्पनातः श्रुताया एव प्रतिष्ठाया फलत्वकल्पनाया न्याय्यत्वेनानुमानिकस्वर्गफलकल्पनानवकाशाद् इति निर्णीत, तथा च यथा तत्र ये प्रतिष्ठाकामास्तेरात्रिसत्रमुपेयुरिति विधिकल्पन तथा य अमृतत्वकामास्तैरात्मा ज्ञातव्य इति कल्पनमिति भावः ।

मू०—सकलप्रतिपत्तिषु प्रमाणस्मृतिभूतासु प्रकाशते न पुनरद्वैतानन्दरूपेण, नच तस्य स्वप्रकाशस्य केन चिदावरणाद्युपपत्तिर्येन यथावन्न प्रकाशेत तस्मादद्वैतानन्दरूपं ब्रह्म वेदान्तप्रमाणकमिति महानयं व्यामोहो ब्रह्मवादिनामिति सिद्धम् ।

अत्राऽभिधीयते स्यादेतदेवं यदि सिद्धार्थगोचरा प्राथमिकी शब्दशक्तिव्युत्पत्तिरापादयितुमशक्या शक्यते तु सा पुत्रस्ते जात इत्यादौ प्रागुन्नीतन्यायेनापादयितुं

यत्पुनरत्राऽभिहितं परिशेषावधारणानुपपत्तिरिति, तदसाधु, प्रमाणान्तरावसितपुत्रजन्मलक्षणहर्षकारणसंभवे सत्यत्यंतापरिदृष्टभूतभविष्यद्वर्त्तमानादीनां कल्पनानुपपत्त्या परिशेषावधारणायाः सुकरत्वात्,

यो हि प्रतिपन्नदेवदत्तप्रमोदहेतुपुत्रजन्मा तद्वार्ताहारेण सह देवदत्ताऽभ्यासमागतस्तस्य हि सबन्धवोद्धृ-

---

टी०–तिभास इत्यत आह—" न च तस्य " इति, । स्वप्रकाशत्वादावरणं न सम्भवतीत्यर्थः ।

( प्रागुन्नीतन्यायेन ) वदनविकाशादिना हर्षोत्पत्त्यनुमानादिना,

ननु येन पुत्रजन्म नावसितं तस्य कथं पुत्रस्तेजात इति पदनिचयसंगत्यवगतिरित्यत आह—" योहि " इति, । दृष्टगवानयनस्येव कार्य्ये शब्दव्युत्पत्तिवदवसितपुत्रजन्मन एव सिद्धे व्युत्पत्ति-

मू०—ताभ्युपगम्यते स कथं परिदृष्टतत्प्रमोदकारणपुत्रजन्मातिरेकेण कारणान्तरं परिकल्पयेत्, न खलु संभवत्येव दृष्टकारणेऽदृष्टकल्पना युक्ता, अतिप्रसङ्गात्

यदवोचदाचार्यवाचस्पतिः—'एवंविधेपि विषये हर्षहेत्वन्तरमाशङ्कमाना जननीजारशङ्कया स्वकीयमपि ब्राह्मणत्वं प्रति संदिहाना नाधिकारभाजो ब्राह्मणोचितासु क्रियास्विति कृतं मीमांसाभ्यासपरिश्रमेण तेषामिति,

यदपि केन चिद् विपश्चितोक्तं-नच स्वाधिगततत्प्रिये

---

टी०-रित्यर्थः।प्रतिपन्नं देवदत्तस्य प्रमोदहेतुपुत्रजन्म येन स नथा। किमिति न कल्पयेदित्यत आह—"न खलु" इति,। 'अतिप्रसङ्गाद्' इति। प्रत्यक्षदृष्टगवानयनादिकार्य्यव्यतिरेकेण कार्य्यान्तरपरिज्ञानादेव प्रवृत्तिरिति तत्रापि शङ्का स्यादित्यर्थः,।

दृष्टकारणसंभवेपि कारणान्तरपरिकल्पनया संदेहे सर्वव्यवहारविरोधः स्यादित्यत्र वृद्धसंमतिमाह—"यदवोचद्" इति,। एवंविधेपि विषये=दृष्टपुत्रजन्मविषये, हेत्वन्तरम्=अदृष्टं भूतभविष्यदादिकं,।

पुत्रजन्मसुखप्रसवयोरुभयोरपि दृष्टत्वात्परिशेषावधारणानुपपत्तिरितिपूर्ववादिमतमुत्थापयति—"यदपि" इति,। स्वेन व्युत्पित्सुनाधिगतं यद् देवदत्तस्य प्रियं पुत्रजन्म तस्मिन् पुत्रजन्मनि तस्य पितुः, तस्माद् वाक्याद् धीरिति विशेषावधृत्तिः संभवति पुत्रजन्मनः फलत्वादिति न वाच्यमित्यन्वयः, कुत इत्यत आह—

मू०—तद्धीरिति क्लृप्तत्वादवधृतिः, तत्रैव चानेकस्य संभवात् सुतो जातः प्रसूता ते सुखं प्रियेत्यादेरिति,

तत्र समाधिः—संभवतु कामं प्रियासुखप्रसवाद्यधिगतचरमेवानेकं तथापि तत्रैवान्यतमविषया शक्तिरप्यध्यवसीयते, नच तत्रान्यतमस्य परिशेषावधारणासंभवः, तत्र प्रतिपदमावापोद्धाराभ्यां पुत्रादिपदानां तत्र तत्र तनयाद्यर्थेषु सम्बन्धाध्यवसाये सति पदार्थानामेवान्वितानां वाक्यार्थतया प्रागपि पुत्रस्तेजात इति पदयनिचयेन पुत्राद्यर्थ एव परस्परान्वितः प्रत्यपादि नतु

---

टी०—" तत्रैवच " इति, । अनेकसंभवमेव दर्शयति—" सुत " इति, । परिशेषावधारणं न भवतीत्युक्तमिति तत्राह—" नच " इति, । प्रतिपदमावापोद्धाराभ्यां=पुत्रस्तिष्ठति पुत्रो गच्छतीति पदान्तरप्रक्षेपपूर्वपदानुच्चारणाभ्यामिति यावत् । भवतु पुत्रादिपदानां तनयाद्यर्थेषु संगतिः तथापि पुत्रजन्मलक्षणवाक्यार्थावगतिः कथमित्यत आह—" पदार्थानाम् " इति, । अयमभिसन्धिः—यद्यनेकदर्शनमात्रेण परिशेषानवधारणं तदा गवानयनवदातपत्रदण्डादेरपिदर्शनात्तुल्या तत्रापि परिशेषावधारणानुपपत्तिः,

अथावापोद्धाराभ्यामन्यतरनिर्णयः, प्रकृतेपि तर्हि नासौ दण्डवारितो, लोकाचारपरिप्राप्तपुत्रजन्ममात्राव्यभिचारिणा तत्पदाङ्कितपटप्रदर्शनादिना लिङ्गेन परिशेषावधारणोपपत्ते, 'पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोर्'इति पुत्रजन्मनः प्रियतमत्वादपि प्रियासुखप्रसवेनातुल्यकक्षतया संदेहानुपपत्तेश्चेति, ।

मू०—प्रियाद्यर्थ इति सुकरत्वात्परिशेषावधारणायाः,

नच पुत्रमानयेत्येवमादिप्रवर्त्तकवाक्ये एवावापोद्धारभेदेन पुत्रादिपदानां तनयाद्यर्थविशेषेषु सामर्थ्याधिगमसंभवादावापोद्धारसिध्यर्थमपेक्ष्यमाणप्रवर्त्तकवाक्यानुसरणेनैव पुत्रस्ते जात इत्यत्रापि कार्याध्याहारो लक्षणावाऽध्यवसातुं युक्तेति मंतव्यं, पुत्रस्ते देशान्तरादागतः पुत्रस्ते निरामयो जात, इत्यादिहर्षहेतौ सिद्धनिष्ठेप्यावापोद्धारसंभवात्, पुत्रस्ते जातइत्यत्राप्रतीयमानकार्याध्याहारलक्षणाश्रयणाभ्यामुभयानुगतयोग्येतरान्वयस्यैव पदसामर्थ्यप्रयोजकताया युक्तत्वादध्यवसातुं लाघवात्,

किंच येनापि कार्य्यान्विताभिधायित्वं शब्दानामभ्युपगम्यते तेनाभ्युपगम्यत एव तावदर्थान्तरान्विताभि-

---

टी०—पुत्रादिपदानामावापोद्धारादिभेदेन तनयाद्यर्थेषु सम्बधाधिगमाय पुत्रमानयेति प्रवर्त्तकवाक्यस्यावश्याश्रणीयत्वात्पुत्रस्ते जात इत्यत्रापि पुत्रादिपदानां लक्षणयाध्याहारेण वा कार्यपरत्वमित्यत आह—" नच " इति, अप्रवर्त्तकवाक्येप्यावापोद्धारसंभवे लक्षणाध्याहाराश्रयणापेक्षया च लाघवेन योग्येतरान्वितत्वस्यैव पदसामर्थ्यप्रतियोगित्वकल्पनाया युक्तत्वान्न कार्यपरत्वमित्यर्थः।

'कार्याध्याहारलक्षणाश्रयणाभ्याम्' इति पञ्चमीद्विवचनं,।

कार्यान्वितेप्यन्यान्वितस्यापि संभवादुभयानुगतमेतदेव पदसामर्थ्यप्रयोजकमङ्गीकरणीयं कार्येण प्रयोजकविशेषणेन गौरवादित्याह—" किंच " इति,।

मू०—धायित्वं तावता च कार्यान्विताभिधानस्याप्युपपत्तेर्न शक्या कार्यस्यापि सकलपदसामर्थ्यप्रतियोगिता कल्पयितुं गौरवात् ।

स्यान्मतं—व्युत्पत्तिदशायां सर्वत्र कार्यान्वयाव्यभिचारात् सर्वव्यवहारेषु तदन्विताभिधायिता न शक्यते हातुमिति, हन्त भावार्थकार्यान्वयस्यैव लोके सर्वत्राव्यभिचारात् तदन्वितस्वार्थबोधकतापदानां नियता प्रसज्येत, तथा च वेदे भावार्थातिरेकिनियोगापरपर्य्यायकार्य्यान्वितार्थधीजनकता हता वत तपस्विनी पदानामिति प्रसज्येत, ।

यदपीदमन्यान्विते सामर्थ्यमंगीकुर्वतामन्यपदार्थानन्त्येन तदन्वितानामप्यानन्त्यात् वहुविषयता पदसामर्थ्यस्याऽऽप-

---

टी०—अव्यभिचारित्वेन कार्यस्यापि प्रयोजकतान्तर्भावमाशङ्कते—“ स्यान्मतम् ” इति, । तर्हि भावार्थस्याव्यभिचारात्प्रयोजकतांतर्भावः स्यादिति परिहरति— “ हंत ” इति, । अस्तु को दोष इत्यत आह—“ तथाच ” इति, ।

अन्यान्विते सामर्थ्यकलपने कल्पनागौरवमुक्तं प्रतिबन्दीन्यायेन परिहरति— “ यदपि ” इति, । कल्पनागौरवपरिहाराय धात्वर्थकार्य एव पदसामर्थ्यमभ्युपेयं तथा च प्रागुक्तनियोगासिद्धिरित्यर्थ ।

ननु लोके कार्यव्युत्पत्तिसमये भावार्थेन न कार्यस्य विशेषणं युक्तं लोकव्युत्पत्त्युत्तरकालतया भावार्थातिरिक्तनियोगपरिज्ञानस्य

मू०—चत इति, तत्राप्येतदेव वक्तव्यं, कार्य्यान्वितगोचरपदसामर्थ्याङ्गीकरणेपि कार्य्याणां भावार्थतदतिरेकिणामानंत्याद, माभूद्बहुविषयं पदसामर्थ्यमिति भावार्थकार्यान्वितविषयमेव तदाश्रीयेतेति, ।

नच सङ्गत्यधिगमसमये भावार्थातिरेकिणः कार्यस्याशक्याधिगमतया अप्रसक्ततया न तद्व्यवच्छेदाय भावार्थेन प्रयोजकं विशिनष्टीति युक्तं, तदतिरेकिणीनामपि द्रव्यगुणव्यक्तीनां कार्याणां बहुलमुपलम्भात्,

नो खल्वपूर्वस्यापि ताभ्यो विशेषःकार्यतायां विचारं सहते।

---

टी०—प्रथमव्युत्पत्तिसमये च तस्याबुद्धिस्थतया तद्व्यवच्छेदाय विशेषणानुपपत्तेरित्यतआह— "नच" इति, । कुतो न युक्तमित्यत आह—"तदतिरेकिणीनाम्" इति, । नियोगमन्तरेणापि भावार्थातिरिक्तकार्यस्य बुद्धिस्थतया तद्व्यच्छेदाय भावार्थविशेषणोपादानं युक्तमित्यर्थः ।

ननु साक्षात्कृतिसाध्यतया भावार्थस्यैव कार्यत्वं न द्रव्यगुणव्यक्तीनामतस्तद्व्यवच्छेदाय न विशेषणोपादानमित्यत आह— "नोखलु" इति, । नियोगस्यापि न साक्षात् कृतिसाध्यतया कार्यत्वं तथा सति कृतिनियोगयोर्मध्येऽघटितसंघटकविषयप्रवेशानुपपत्तेः,तथाच शालिकानाथेनाभिहितं 'कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः, कार्ये संघटिताकारे कारणत्वेन संमत'इति, 'दध्ना जुहोति' 'अरुणया क्रीणाति'इत्यादौ क्रियाव्यवधानेन नियोगवद्द्रव्यगुणयोरपि कार्यत्वमिति तद्यवच्छेदाय भावार्थविशेषणोपादाने तदतिरिक्तनियोगासिद्धिरित्यर्थः, ।

मू०—यदि पुनः प्रयोजकगतगौरवपरिहाराय भावार्थमनादृत्य कार्यान्वितमात्रं प्रयोजकमाश्रीयेत आश्रीयतां तर्ह्यन्यान्वितमेव प्रयोजकं ततोपि लघीयः केवलव्यतिरेकाभावश्च भावार्थकार्य्ययोस्तुल्य एवेत्यलमलीकनिर्बन्धेन, ।

प्रयोगश्चात्र भवति विवादपदानि न कार्य्यान्वितस्वार्थनियतसामर्थ्यानि पदत्त्वात् कार्यपदवत् यद्वा कार्यं न समस्तपदसामर्थ्यप्रतियोगि अन्वयातिरिक्तत्वादुभयवाद्यविवादास्पदपदार्थान्तरवदिति, नच कार्य्यपदवदि-

---

टी०–गौरवाद्भावार्थस्य न प्रयोजकविशेषणत्वमित्याशङ्क्य कार्य्यमपि तर्हि न विशेषणं गौरवादिति परिहरति—" यदि " इति, ।

ननु सति कार्ये धात्वर्थाभावेन प्रतीतिप्रयोगाभावानुपलंभान्न भावार्थस्य प्रयोजकविशेषणत्वमित्याशंक्य तर्हि योग्येतरान्वितत्वे सति कार्याभावेन प्रतीतिप्रयोगाभावाभावान्न तस्यापि प्रयोजकविशेषणत्वमिति परिहरति—" केवल " इति, । केवलस्य कार्यस्य भावार्थस्य वा व्यतिरेके अभावे प्रतीतिप्रयोगलक्षणकार्यस्य व्यतिरेको नास्ति तेनोभयोरपि न प्रयोजकत्वं तदभावप्रयुक्तकार्याभावस्यैव प्रयोजकलक्षणत्वादिति भावः, ।

" विवादपदानि " इति । सिद्धार्थबोधकानीति यावत्, यदा योग्येतरकार्यस्यानुप्रवेशस्तदा कार्यान्वितस्वार्थसामर्थ्यवत्त्वमप्यस्तीति तदभावसाधने बाधस्तद्व्यावृत्तये 'नियमेन' इति, विशेषणं, नियमेन कार्यपराणि न भवन्तीति यावत्, ।

नन्विदमनुपपन्नं सिद्धसाधनत्वात् कार्यान्वितमात्रे सामर्थ्यस्यानङ्गीकाराद्,अन्वितकार्ये कार्यान्वयान्वयिनि वा तदाश्रयणा-

मू०—ति साध्यविकलो दृष्टान्तः, तस्य कार्यान्तरान्वितस्वार्थाभिधाननियमानुपपत्तेः, कार्य्यस्य कार्य्यान्तराभावात्, स्वार्थपदेन चासाधारणस्यैवार्थस्याभिधानाद्, ।

---

टी०—दिति चेद्, मैवं कार्यपदसमान्वितपदानामन्वितकार्यपरत्वे पर्यायत्वप्रसङ्गाद्, नचान्वितपरत्वे पर्यायत्वप्रसङ्गो, ऽन्वितकार्यवदेकस्यान्वितस्य सर्वपदप्रतिपाद्यत्वानङ्गीकारेण पर्यायत्वप्रसङ्गानवकाशात्, कार्याकार्ययोरुभयोरप्यन्वितयोः प्रतिपाद्यत्वाभ्युपगमाद्, अन्वयिनि च शब्दसामर्थ्ये सति कार्यान्वययिनीतिवक्रोक्तेः केवलकण्ठशोषकरतयोपेक्षणीयत्वाद् । " न समस्तपदसामर्थ्यप्रतियोगि " इति । समस्तपदसामर्थ्यप्रतियोगि न भवतीतियावत्, नचान्विते व्यभिचारो ऽन्वयशब्दस्य वाक्यार्थोपलक्षणत्वात्, पदार्थानामन्वयोऽन्विताः पदार्था वा वाक्यार्थ,स्तथाचान्विततदन्वयाभ्यामतिरिक्तत्वादिति हेत्वर्थस्य विवक्षितत्वान्न व्यभिचारः, न च हेत्वासिद्धिः कार्यस्याप्यन्वितपदार्थत्वादितिवाच्यं विकल्पासहत्वात्, कार्यं किं स्वरूपतोऽन्वितपदार्थः किं वा पदांतरसमभिव्याहारादन्विततया प्रतीयते नाद्यः, अन्वितस्य पदार्थान्तरेणान्वयेऽन्वयद्वैगुण्यपातात्, कस्मिन्नन्वितमिति च पर्य्यनुयोगे कार्य्यमात्र एव तस्य वक्तव्यत्वाद्, न द्वितीयः, स्वरूपेणानन्वितं कार्य्यं पदान्तरसमभिव्याहारादन्विततया प्रतीयत इति वदता भवतैवानन्वितकार्यान्वितस्य स्वीकारादिति भाव । "कार्यान्तराभावाद्, "इति, । एकस्मिन् वाक्ये कृतिसाध्यप्रधानरूपकार्यद्वयाङ्गीकारे वाक्यभेदप्रसङ्गाद्, भावार्थकार्यत्वस्य च कार्य्यप्रतीत्युत्तरकालीनतया कार्यपदस्य कार्यान्वितत्वाभिधायकत्वाभावादिति भावः, ।

मू०—एवं च कार्यपदव्यतिरिक्तानां कार्य्यान्विते सामर्थ्यं कार्य्यपदस्य तु स्वरूपेऽन्यान्विते वेति प्रयोजकद्वैविध्याङ्गीकारे गौरवप्रसङ्गादपि योग्येतरान्विते सामर्थ्यमित्येकमेवप्रयोजकमुपादेयं, तथा च लोके भूतार्थपरः पदसमभिव्याहारो लाक्षणिकइति पराकृतं, ।

दिङ्मात्रमत्र सूचितं विस्तरस्तु न्यायदीपिकायामवगन्तव्यः, ।

यत्तु वेदान्तानामप्यात्मा ज्ञातव्य इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यभावमाश्रित्य कार्यपरतैव वर्णनीयेति, तदपि न मनोहरम्, ।

---

टी०—भवतु तर्हि कार्यपदस्य कार्यमात्रेऽन्यान्विते वा पदसामर्थ्यमित्यत आह—“ एवं च ” इति, ।

ननु कार्यपरपदार्थान्वितस्वार्थे पदानां सामर्थ्यमित्येकमेव प्रयोजकमित्यत आह—“ दिङ्मात्रमत्र ” इति, । अत्राप्यन्वितमात्रस्य पदसामर्थ्यप्रयोजकत्वे तदितरग्रन्थकथाया उद्वेगजननमात्रप्रतीतिकरतयोपेक्षणीयत्वात्, लक्षणार्थानिरूपणाच्च, कार्यपरत्वस्य पदधर्मत्वे सर्वपदानां लिङ्ङादिपदवत्कार्यपरत्वेन पर्यायत्वापत्तेः, मुख्यगौणसाक्षात्परंपराभेदेन पर्यायत्वपरिहारे चाऽनुगतैकार्थाभावेन लक्षणस्याव्यापकत्वापत्तेः, कार्यपरत्वस्य पदार्थधर्मत्वे च पदार्थानां कार्यप्रतीतिजनकत्वाभावेन लक्षणस्यासंभवित्वात्, नच कार्यशेषत्वेन तत्परत्वं, कार्यस्य कार्यान्तरशेषत्वाभावेन कारकपदानां तदन्वितस्वार्थाभिधायकत्वाभावादिति भावः ।

मू०—आत्मा ज्ञातव्य इति हि ब्रह्मणि प्रत्तिपत्तिर्विधातव्या, तिस्रश्च प्रतिपत्तयो ब्रह्मणि संभवन्ति, प्रथमा शाब्दी, द्वितीया च भावनात्मिका, तृतीया च साक्षात्काररूपा, ।

तत्र न तावच्छाब्द्यां प्रतिपत्तौ विधिना पुरुषो नियोक्तव्यो, विदितपदपदार्थस्य समधिगतशाब्दन्यायतत्त्वस्यान्तरेणापि विधिं शब्दादेवोत्पत्तेः, नापि भावनायां, तत्रापि ज्ञानप्रकर्षहेतुभावस्यान्वयव्यतिरेकसिद्धतया प्राप्तत्वेनाविधेयत्वात्, नापि साक्षात्काररूपायां, स खलु ब्रह्मस्वभावो वा स्यात्तद्गोचरो वान्तःकरणपरिणति-

---

टी०—विधिं निराकर्त्तुं विधेयस्वरूपमाह—" आत्मा ज्ञातव्य " इति, । ततः किमित्यत आह—" तिस्रश्च " इति, । भावनात्मिका=ध्यानरूपा, ।

भवतु त्रैविध्यं तथापि कथं न विधिरतआह—" तत्र न तावद्," इति, । पदपदार्थज्ञानेपि तात्पर्यार्थनिश्चयाभावे कथं वाक्यार्थप्रतिपत्तिरित्यत आह—" समधि गत " इति, ।

उपक्रमोपसंहारादिषड्विधतात्पर्यद्योतकः शब्दो न्यायस्तत्परिज्ञानवत इति यावत्, द्वितीयां प्रतिपत्तिं दूषयति—" नापि " इति, । अभ्यासोऽभ्यस्यमानवस्तुनि प्रकर्षाधायक इत्यन्वयव्यतिरेकसिद्धत्वाद् न शब्दमपेक्षत इत्यर्थः, । तृतीयप्रतिपत्तौ विध्यसंभवं वक्तुं तां विकल्पयति—" स खलु " इति, । कृतिसाध्यत्वेन

मू०—भेदः, न तावद्ब्रह्मस्वभावगोचरो नियोगो युक्तिमान्, तस्य नित्यत्वादकार्य्यत्वात्, नाप्यन्तःकरणपरिणतिगोचरः, तस्यानंदसाक्षात्काररूपतया फलत्वात्, फले च निसर्गसुन्दरतया चेतनसमीहास्पदे विध्यनुपपत्तेः, ।

तस्मादात्मा ज्ञातव्य इत्यादीनां विधायकताऽसंभवादर्हार्थतैव व्याख्येया, युक्तंचैतत्, तत्रात्मस्वरूपप्रतिपादनेनोपक्रमात् तेन चोपसंहारादर्हार्थतायामेव च ज्ञातव्य इत्यादीनामेकवाक्यतोपपत्तेः, संभवन्त्यां च तस्यां

---

टी०—सहैकार्थविषयो हि नियोगस्तन्निवृत्तौ सोपि निवर्तत इत्यर्थः। अकार्येहेतुः—" नित्यत्वाद् " इति, ।

अस्तु तर्हि कार्य्यत्वादन्तःकरणपरिणामे नियोग इति तत्राह—" नाप्यन्तःकरण " इति, ।

ननुविधेयाभावे विधायकलिङ्ङादिशब्दानां वैय्यर्थ्यमित्याशङ्क्योपसंहारव्याजेन परिहरति—" तस्माद् " इति, । " अर्हेकृत्यतृचश्च " इत्यर्हार्थेपि लिङ्ङादीनां विधानान्न वैय्यर्थ्यमित्यर्थः, ।

अर्थान्तरपरत्वे वाक्यभेदप्रसङ्गाद्प्यर्हार्थत्वमेव युक्तमित्याह—" युक्तं चैतद् " इति। एकवाक्यत्वे किं नियामकमित्यत आह—" तत्र " इति, ।

ननूपरिधारणादौ(१)वाक्यभेदोपि दृश्यत इत्यत आह—" सम्भवन्त्यां च " इति, ।

---

* अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्य इत्यादौ, ।

मू०—वाक्यभेदस्यायोगात्, तस्मात् न बोधविधिपरा वेदान्ता इति सिद्धम्, ।

यदपि सत्यामपि सिद्धार्थसङ्गत्तौ पदानां नानन्दरूपे ब्रह्मणि मानभावो वेदान्तानां प्रमाणान्तरविरोधादिति, तदप्यसारं, मानान्तरविरोधेपि वेदान्तानामेव प्राबल्यहेतोरुक्तत्वात्, न चाऽस्त्यद्वैते मानान्तरविरोध इत्यधस्तादावेदितं, ।

नच मानान्तरेण नावभासत इत्येव विरोधोऽतिप्रसङ्गात्, योग्यता च तद्रूपस्य मानान्तरं प्रत्यसिद्धैव, परमानंदरूपता तु परप्रेमास्पदतया प्रकाशत एव,

अस्ति हि मा न भूवं भूयासमिति प्राणभृन्मात्र-

---

टी०—मानान्तरविरोधेनोक्तमप्रामाण्यमनूद्य दूषयति—"यदपि" इति। 'उक्तत्वाद्'=सांव्यवहारिकप्रमाणभावस्यैव प्रत्यक्षादेरित्यत्राम्नायस्य प्राबल्यमुक्तमित्यर्थः, । अधस्तादावेदितं=द्वितीयवादे प्रत्यक्षस्य व्यवच्छेदकत्व निराकुर्वतेत्यर्थः।

किमनवभासनाद्विरोधः किं वा योग्यत्वविशेषितादिति विकल्प्याद्ये दूषणमाह—" नच " इति, । चक्षुषानवभासनाद्रसादेरप्यभावः स्यादित्यर्थः,। द्वितीयं पक्षं दूषयति—" योग्यता च " इति। यत्पुनरुक्तं स्वात्मप्रतिभासेप्यानन्दरूपं न प्रकाशत इति तत्राह—" परमानन्द " इति,।

परप्रेमास्पदत्वमेवासिद्धमित्यत आह—" अस्तिहि "

मू०—वर्तिनी प्रतीतिः, कथमेषा प्रेमास्पदतामन्तरेणात्मन्यवकल्प्यते, न चान्तरेण सुखभावं तत्साधनभावं वा प्रेमास्पदता युक्ता,

नचात्मनश्चन्दनवनितादिवत् तत्साधनभावेन प्रेमगोचरता, निरुपाधिकत्वाद्,

न खल्वानन्दमपि लौकिकं रूपतो रोचयते किन्त्वात्मार्थम्, अन्यथा रूपाभेदेन स्वपरानन्दयोरविशेषाद्, अन्तरेणात्मनः स्वाभाविकप्रेमास्पदतां कथं तदर्थतयान्यत्सकलमपि प्रेमास्पदभावमनुभवेत्, ।

---

टी०—इति, । भवतु प्रतीतिस्ततः किमित्यत आह—"कथम्" इति, । भवतु प्रेमास्पदता ततः किमित्यत आह—" नचान्तरेण" इति, । अन्तरेणैव सुखरूपतामन्यथैव प्रेमास्पदता किं न स्यादित्यत आह—" नचात्मन " इति । निरुपाधिकत्वाद्=आत्मव्यतिरिक्ताशेषत्वे सति प्रियत्वात् । नन्वात्मव्यतिरिक्ताशेषत्वमसिद्धमात्मनः सुखशेषत्वादित्यत आह—" नखलु " इति, । लौकिकस्यानंदस्य स्वरूपत एव प्रियत्वं किं न स्यादित्यत आह—" अन्यथा " इति, । भवतु सुखस्यात्मार्थतया प्रियत्वं तावता कथमात्मनो निरुपाधिकप्रेमास्पदत्वमित्यत आह—" अन्तरेण " इति, । यद्वा सर्वशेषिभूतं सुखमप्यात्मशेषतया प्रियं तदात्मनो निरुपाधिकप्रेमास्पदत्वे किमु वक्तव्यमिति भावः, ।

मू०—तदेवं परप्रेमास्पदभावः परमानन्दभावमन्तरेणा-त्मनि नावकल्पत इति सिद्धम्; ।

अथापि स्याच्छरीरोपघातजन्मनो दुःखादयं बिभ्यद् भूयासं मा न भूवमिति प्रार्थयते न पुनरात्मानमानन्दरूपमभिमन्यमानः, किञ्चाऽयमात्मा चेदनतिशयानन्दरूपः प्रतिभासेत प्राणभृत्मात्रेणैव प्राप्तं प्रापणीयमिति न कश्चिदपि मोक्षायातिष्ठेतेति, तदपि न हृद्यं, तथा हि भवतु नाम प्राणवियोगजन्मनो दुःखादस्य भयं तदेव तु कुतो, नो खलु दुःखं दुःखतया भयहेतुरन्यगतस्यापि तस्य तथाभावप्रसङ्गात्,

---

टी०—तावता कथमानन्दत्वमित्यत आह—" तदेवम् " इति, । आत्मा सुखस्वभावः, आत्मव्यतिरिक्ताशेषत्वे सति प्रेमास्पदत्वादित्यनुमानेनोक्तहेत्वन्यथानुपपत्त्या वाऽत्मनः सुखस्वरूपत्वसिद्धिरिति भाव', ।

सुखरूपत्वमन्तरेण प्रेमास्पदत्वसंभवादप्रयोजकत्वं हेतोरर्थापत्तेरन्यथाप्युपपत्तिमाशङ्कते— " अथापि " इति, । मुक्तिसंसारयोरविशेषप्रसंगादप्यात्मनो न सुखरूपेणावभास इत्याह—"किंच" इति, । दुःखस्य भयहेतुता आत्मनो निरतिशयप्रेमास्यदत्वं सुखरूपत्वं चान्तरेण न सम्भवतीत्यभिप्रेत्य परिहरति—"तदपि" इति, ।

मू०—भोगोस्य भयहेतुः, स तु साक्षात्कारः, नच परपरिवर्त्तिन्यस्ति दुःखे स इति चेत्, सत्यं, स एव तु मत्प्रतिकूलमेतदित्यनुभवः, ।

तथाहि मत्प्रतिकूलमेतदित्यनुभवन्नयं तप्यते, प्रेमास्पदपरिपन्थ्यर्थश्च प्रतिकूलः प्रतीयत इत्युपपन्न आत्मनि प्रेमा निरुपाधिकः, तथाचायं परिशेषतः परमानंदः प्रकाशत इत्युक्तम् । नचैवं मुक्तिसंसारयोरविशेषो येन न कश्चिदपि मोक्षायातिष्ठेत, प्रकाशमानोपिह्ययमानन्दोऽनाद्यनिर्वाच्याविद्योपदर्शितविविधविचित्रना-

---

टी०—स्वदुःखात्परदुःखस्य वैषम्यमाशङ्कते—" भोग " इति, । भोगरूपमेवदर्शयति—" सतु " इति, । तथापि कथमुक्तदोषपरिहार इत्यत आह—" नच " इति, । अस्ति दुःखे सः=,योगिव्यतिरिक्तस्येति शेषः । उक्तरूपतामन्तरेण दुःखभोग एव न संभवतीति परिहरति—" स एवतु " इति, ।

अनुभवं स्पष्टयति—" तथाहि " इति, भवतु कथं तावताभिमतसिद्धिरित्यत आह—" प्रेमास्पद " इति, । मुक्तिसंसारयोरविशेषप्रसङ्गं दूषयति—" नचैवम् " इति, । अनाद्यविद्योपदर्शितश्चासौ विविधो विचित्रो नामरूपप्रपञ्चः, तन्मयतया=तदुपप्लुततयेति यावद्, विविधः=पृथिव्यादिपञ्चरूपभेदेन, विचित्रस्तु तदवान्तरजातिभेदेन, ।

मू०—मरूपप्रपञ्चमयतया विवेकतः स्फुटतरमनवभासमानो न भासत इव सांसारिकदशायाम्,

यथा खल्वापातजायां संविदि भासमानावपि सामान्यविशेषौ न भासेते इव विवेकानध्यवसायात्;

स्वयमेवच 'सामान्यविशेषौ द्वे वस्तुनी प्रतिपद्यमानं प्रत्यक्षमुपपद्यत' इत्यभिधायानन्तरमभिहितं प्रमेयपारायणे ' किन्तु वस्त्वन्तरानुसन्धानशून्यतया सामान्यविशेषरूपता न प्रतीयत ' इति, तथा 'निर्विकल्पकेन सामान्यविशेषौ द्वे वस्तुनी प्रतिपद्यमानेनापि तयोर्भेदो न प्रत्येतुं शक्यत' इति च, ब्रह्मसाक्षात्कारोन्मीलितनिखिलाविद्योपप्लवस्तु परितः

---

टी०—अवभासानवभासावेकस्मिन् विरुद्धावित्यत आह— " यथा खलु " इति, । आपातजायां=निर्विकल्पिकायाम्, इदमप्यसङ्गतमित्याशङ्क्य तदीयग्रन्थदर्शनेन दृढयति— " स्वयमेव च " इति, । अभिहितमेव दर्शयति—" किन्तु " इति, । व्यस्त्वन्तरप्रतीतावनुवृत्तत्वेन सामान्यरूपता प्रतीयते व्यावृत्तत्वेन तदितरस्य विशेषरूपता, निर्विकल्पके तु वस्त्वन्तरस्यानवभासे तदुभयरूपता न प्रतीयत इत्यर्थः ।

ग्रन्थान्तरमाह— " तथा " इति, । मुक्तेः संसारदशातो विशेषमाह—" ब्रह्म " इति, । ब्रह्मसाक्षात्कारेणोन्मीलितो निखि-

मू०—प्रद्योतमानपरिशुद्धपरमानन्दभावो मुक्ताविति भेदसिद्धिः, किंचानन्दप्रकाशाविशेषेपि सांसारिकविविधदुःखसंभिन्नस्य तद्विधुरविशदानन्दप्रकाशस्य च महानयं विशेष इति कथं संसारमोक्षयोरविशेषः शङ्कितुमपि शक्यः।

यत्तु नास्य स्वप्रकाशस्य केनचिदावरणाद्युपपत्तिरिति, क्वेदमायुष्मतोपलब्धं, संवेदन इति चेन्मैवं तस्यैवात्मत्वाभ्युपगमात्, नो खलु विवादपदमेवोदाहरणम्।

अथापि प्रकाशमानस्याप्रकाशतानुपपत्तेरावरणाद्ययोग उच्यते कथं तर्हि सामान्यविशेषौ स्वभावभिन्नौ प्रकाशमानावप्यापातजायां संविदि न भेदेन प्रकाशेते, न तत्रात्यन्ताऽप्रकाशः, किन्तु स्फुटतरप्रकाशभाव इति

---

टी०—लाविद्योपप्लवोऽस्मिन्स तथा। अविद्योपप्लवानुपप्लवाभ्यां विशेषमभिधाय दुःखसम्भेदासम्भेदाभ्यां विशेषमाह— "किञ्च" इति। स्वप्रकाशेऽनुपपन्नमावरणमिति यदुक्तं तद् दूषयति— "यत्तु" इति,। यत् स्वप्रकाशं तदनावृतमिति न क्वचिदपि सम्प्रतिपन्नमित्यर्थ,। पृष्टंमत्वोत्तरमाह—"सम्वेदन" इति,।

विशेषव्याप्त्यभावे सामान्यव्याप्तिरस्तीतिशङ्कते— "अथ" इति,। नैवमपि व्याप्तिः व्यभिचारादित्याह— "कथम्" इति,। विशेषमाशङ्क्यास्मन्मतेपि तुल्य इति परिहरति—"नतत्र"

मू०—चेन्न तर्ह्यत्राप्यत्यन्ताप्रकाशः, परप्रेमास्पदतया सुखप्रकाशाश्रयणात्, तस्मादद्वैतानन्दरूपं वेदान्तप्रमाणकमिति महानयं व्यामोहो ब्रह्मवादिनामित्ययमेव महामोह इति सिद्धम्,

"इति विगलितदोषो मानभावः श्रुतीनां,
निरतिशयसुखात्मन्यद्वितीये प्रकाशे,
ननु परमतकार्ये वेदलेशोपि मात्वं,
भजत इति वदामस्तत्र सङ्गत्ययोगाद्"

अथ कथमिह कार्य्यात्मनि पदसङ्गत्ययोगः, प्रवृत्तिकार्यसंदर्शनादेवहि प्रवर्तकबोधमनुमाय तस्य च प्रवर्तकबोधत्वादेवात्मीयप्रवर्त्तकबोधदृष्टान्तेन कार्यगोचरतामनुमायानन्तरं च शब्दान्वयव्यतिरेकानुविधायितया तत्र शब्दशक्तिं बालाः समाकलयन्ति, ।

---

टी०—इति, । परोक्तमुपहासमुपहसति—"तस्माद्" इति, । वादार्थमुपसंहरन्नुत्तरवादार्थमुपक्षिपति— "इतिविगलित" इति, । "मात्वं" मानभावत्वमिति व्याख्येयं शब्दस्य प्रमारूपत्वाभावात्, ।

सङ्गत्ययोगमाक्षिपति पूर्ववादी—" अथ " इति, । सङ्गतिग्रहे को हेतुरित्यत आह—" प्रवृत्ति " इति, ।

कार्यबोधे विप्रतिपत्तेः कथं शब्दस्य तत्परत्वमिति सिद्धान्ती

मू०—स्यादेतत्, न स्वात्मन्यपि कार्य्यबोधस्य प्रवर्तकभावः प्रसिद्धो येन तद्दृष्टान्तावष्टम्भात्परस्यापि कार्य्यगोचर एव बोधः प्रवर्तक इत्यध्यवसीयते ।

बहुधा हि विप्रतिपद्यन्ते तत्र वादिनः, केचित् तावद् भावार्थावबोधमेव प्रवर्तकमास्थिताः, केचित् फलबोधम्, अपरे फलसाधनतावबोधम्, अपरे रागम्, अन्ये पुनः यथा तथास्तु स्वप्रवृत्तौ, शाब्दे तु व्यवहारे लिङ्ङादिशब्द एव प्रवर्तक इति मन्यन्ते, केचन तद्व्यापारमनभिधेयं प्रवृत्तिहेतुमाचक्षते, अपरे पुनरभिधेयम्, अभिधामेवेतरे, तत्र कथमविचार्य्य प्रवर्तकनिर्णयः, कथन्तरां च विशेषगोचरसङ्गत्यवसायः, तस्माद् विचार्य्य निर्धारणीयमिति ।

---

टी०-शङ्कते—"स्यादेतद्" इति, । बालस्य स्वात्मन्यपि कार्यबोधस्य प्रवर्त्तकत्वं कुतो न निश्चितमित्यपेक्षायां वादिविप्रतिपत्तेरित्याह—"बहुधाहि" इति, । विप्रतिपत्तिं दर्शयति—"केचिद्" इति, । वेदान्तिनां मतमाह—"अपरे फलसाधनतावबोधम्" इति, । भट्टानां मतमाह—"केचन तद्व्यापारमनभिधेयम्" इति, । तेषामेव मतान्तरमाह—"अपर" इति, । अभिधा=अर्थविषयाऽभिधानक्रिया, ।

तत्र पूर्ववादी कार्य्यबोधस्यैव प्रवर्तकत्वं सिसाधयिषुः पक्षा-

मू०—सत्यं, तत्र शब्दतद्व्यापारयोः प्रवर्तकत्वपक्षस्तावदतिस्थवीयानेव, तथापि यदि कश्चित्तथा प्रत्यवत्तिष्ठते तं प्रत्येतावदेव तावदभिधातव्यं, सर्वत्र दृष्टानुसारिणी कल्पना प्रसरीसरीति नत्वन्यथा क्वापि, तथाच यदन्यदा प्रमाणान्तरनिबंधने व्यवहारे प्रेक्षावत्प्रवृत्तिहेतुतया स्वात्मन्युपलब्धं तदेव शब्दनिबन्धनेपि व्यवहारे चेतनप्रवृत्तिहेतुतया बालाः कल्पयितुमलम्, नचैतैर्मानान्तरनिबन्धने व्यवहारे शब्दतद्व्यापारयोः प्रवृत्तिहेतुभावः क्वचिन्निश्चित इति कथं तयोरिह प्रवृत्तिहेतुभावंकल्पयेयुर्, अर्थभेदाववोधादेव हि प्रेक्षापूर्वकारिणस्तत्र तत्र प्रवर्त्तन्ते न शब्दतद्व्यापारावसायमात्रात्।

---

टी०—न्तराणि निराकर्तुमाह—"सत्यम्" इति,। सूचीकटाहन्यायेन शब्दतद्व्यापारयोः प्रवर्त्तकत्वं निराकरोति—"तत्र" इति,। स्थवीयान् स्थूलतरः, सूक्ष्मतरन्यायदर्शनरहित इति यावत्, तावता कथं निराकरणमिति, तत्राह—"तथाच" इति,। ततः किमित्यत आह—"नच" इति,। स्वप्रवृत्तौ तयोः प्रवर्त्तकत्वाभावान्न शाब्दे व्यवहारे तयोः प्रवर्त्तकताध्यवसाय इत्यर्थः,।

कथं तयोः स्वव्यापारे प्रवर्त्तकत्वाभाव इति तत्राह—"अर्थभेदावबोधाद्" इति,।

मू०—शङ्खादिध्वनेरपि समयवशादनुविधेयपुरुषाभिप्रायविशेषरूपार्थाववोधादेव प्रवर्तन्ते, समयसंवेदनशून्यानां तदवसायेपि प्रवृत्त्यदर्शनात्, ।

किंच लिङादिशब्दानां प्रवर्त्तकत्त्वे सर्व एव श्राविणो नियमेन प्रवर्त्तेरन् नचैवं दृश्यते, सम्बन्धग्रहणापेक्षायास्तु दत्त एवजलाञ्जलिः, तस्माच्छब्दरूपमात्रमेव प्रवर्तकमिति स्वसाहसप्रकटनमात्रं, ।

तद्व्यापारस्य चानभिधेयस्य प्रवर्त्तकतायां समानैव संबन्धग्रहणानपेक्षा, ।

---

टी०—ननु शब्दमात्रादपि क्वचित्प्रवृत्तिर्दृष्टेति तत्राह—"शङ्खादि" इति, । शङ्खादिध्वनिरपि अभिप्रायविशेषानुमापकतया प्रवृतिहेतुर्न स्वरूपेण,संख्यानुमापकोर्ध्वीकृततर्जनीवदित्यर्थः, कस्मादित्यत आह—" समय " इति, ।

पक्षद्वयसाधारणं दूषणमभिधाय शब्दे विशेषतो दूषणमाह—" किञ्च " इति, । सम्बन्धग्रहणसापेक्षः शब्दः प्रवर्त्तको न स्वरूपेणातो नाति प्रसङ्ग इत्यत आह—" सम्बन्ध " इति, । अर्थवोधजनने शब्दस्य सङ्गत्यपेक्षा तस्यानङ्गीकरणे कुतः सम्बन्धज्ञानापेक्षेत्यर्थः, ।

उक्तं दूषणं शब्दव्यापारेप्यति दिशति—"तद्व्यापारस्य " इति, ।

शब्दव्यापारः शब्दाभिधेयतया प्रवर्त्तक इति पक्षं निराकर्तुं-

मू०—नचाभिधेयस्य प्रवर्त्तकताध्यवसानं, समधिगतप्रवर्तकभावस्यैव शाब्दव्यवहारे शब्दाभिधेयतया प्रवर्तकतोपपत्तेः ।

एतेनाभिधाव्यापार एवाभिधेयतया प्रवर्तक इत्यपि पराकृतं ।

किंच स्वव्यापारं ब्रुवन्तो लिङ्ङादयो व्यापारान्तरेण ब्रुवन्त्याहोस्वित् तेनैव व्यापारेण, न तावद् व्यापारान्तरेणानवस्थापातात्, नापि तेनैव विषयविषयिणोरैक्यानुपपत्तेः, नो खल्वङ्गुल्यैवाङ्गुली स्पृश्यते, यथोक्तम् 'अङ्गुल्यग्रं स्वमात्मानं नात्मना स्प्रष्टुमर्हति, इति, नचाभिधाव्यापारो नाम प्रमाणिकः, ।

नन्वर्थधीप्रसवान्यथानुपपत्त्यैवायं कल्प्यमानः कथमप्रामाणिकः, तदयुक्तं, तथासत्यन्यलभ्यतया शब्दगो-

---

टी०-ति—" नच " इति, । स्वप्रवृत्तौ तस्यापि प्रवर्त्तकतानवगमात्परप्रवृत्तावपि तस्याभिधेयतया न प्रवृत्तिहेतुत्वमित्यर्थः, ।

उक्तं दूषणमभिधाय लिङ्ङादिशब्दाभिधेयपक्षेप्यतिदिशति—" एतेन " इति. । द्वितीयं पक्षं दूषयति—" नापि " इति, । कर्मकरणविरोधादित्यर्थः, ।

अर्थापत्तिसम्भवात्कथमप्रामाणिकत्वमिति शङ्कते—" ननु " इति, । भवत्वन्यलभ्यत्वं तथापि शब्दार्थता किं न भवेदित्यत आ-

मू०—चरभावानुपपत्तेः, अनन्यलभ्यस्तु शाब्द इति हि त्रैविद्यवृद्धाः, ।

किञ्चायमभिधाव्यापारश्चेदन्तरेणाभिधाव्यापारान्तरमभिधेयः किमर्थ एव तथा न स्याद्, अभिधाव्यापारान्तरकल्पने त्वभिहितैवानवस्था, ।

कश्चायमभिधाव्यापारः, नतावत् प्रस्पन्दः, तस्य मूर्त्यनुविधायितया विभौ विभुगुणे वा शब्दे मूर्त्यभावेनासंभवाद्, असर्वगतद्रव्यपरिमाणं मूर्तिरिति च प्रामाणिकाः, ।

---

टी०–ह—" अनन्य " इति, ।

न व्यापारान्तरेण नापि तेन किन्तु शब्दैरेवमेवाभिधीयत इत्याशङ्क्याह—" किञ्च " इति, । व्यापारान्तरेणाभिधेयत्वस्वीकारेऽभिहितामनवस्थां स्मारयति—" अभिधा " इति, । स्वरूपतो दुर्निरूपत्वादपि नाभिधाव्यापार इत्याह—" कश्च " इति, । किं परिस्पन्दः किं वा प्रयत्न इति विकल्प्याद्यं दूषयति—" नतावद् " इति, । मूर्त्तेष्वेव कर्मणोऽवस्थाननियमात्सर्वगद्द्रव्यत्वेन गुणत्वेन च मूर्त्तत्वाभावेन परिस्पन्दः न सम्भवतीत्यर्थः, शब्दः सर्वगद्द्रव्यमितिभाट्टाः, गुण इति प्रभाकरा वैशेषिकादयश्च, मूर्त्यभाव एव कथमित्यत आह—" असर्वगत " इति, ।

द्वितीयं पक्षं दूषयति—" नापि " इति, । व्यापारान्तरमेव

मू०—नाप्यस्पन्दात्मा प्रयत्नरूपः, चेतनैकाधारतया तस्याचेतने शब्दे ऽनुपपत्तेः, नचान्यो व्यापारः प्रसिद्धो लोके,

यदि कश्चिद् ब्रूयाद् अजनकावस्थातो जनकावस्थायामतिशयमात्रमिह व्यापारो न पुनः प्रस्पन्दप्रयत्नयोरन्यतर इति, स इत्थं शिक्षणीयो—हन्तोभयवाद्यविवादास्पद एव विज्ञानगोचरभावलक्षणस्तादृशोऽतिशयोस्तु किमतिशयान्तरपरिकल्पनदुर्व्यसनेनेति, तस्मादभिधाव्यापार एव प्रवर्त्तक इत्यप्ययुक्ता कल्पना,

तथैव भावार्थफलबोधयोरपि प्रवर्तकभावः पराकरणीयः, तयोरपि क्वापि प्रवर्तकतादर्शनाद्, वर्तमानापदेशादौ च व्यभिचाराद्, ।

---

टी०—किं न स्यादित्यत आह—" नच " इति,।

न्यूनतापरिहाराय व्यापारान्तरं शङ्कते—" यदि " इति, । तज्जन्यस्तज्जन्यजनको व्यापारः स चात्र जनकावस्थायामतिशय इत्यर्थः, ।

ज्ञानविषयत्वस्यैवातिशयतया स्वविषयज्ञानस्य चार्थप्रतिपत्तिजनने नितरां व्यापारत्वादतिरिक्तव्यापारो न कल्पनीय इति परिहरति—" स इत्थम् " इति,।

भावार्थफलज्ञानयोः प्रवर्त्तकत्वं निराकरोति— " तथा " इति,। भावार्थपक्षे दूषणांतरमाह—" वर्त्तमान " इति,। पस्यत्यऽपाक्षीदित्यत्र भावार्थबोधेपि प्रवृतेरभावाद्, नच लिङ्ङादिपदबोध्यो धात्वर्थः प्रवर्त्तको, अनिष्टधात्वर्थबोधे व्यभिचारादित्यर्थः,।

मू०—नापि फलसाधनताप्रतीतिः प्रवर्तिका, भूतादौ व्यभिचाराद्, नो खल्वधिगतेपि तृप्तिसाधने भोजनादावतीते वर्तमाने वा प्रवृत्तिः, नापि भविष्यति, सामुद्रविदाख्याते प्रवृत्त्यनुपलम्भाद्, ।

रागस्तु यद्यपि प्रवर्तकस्तथापि न शब्दार्थः, स खलूत्पन्नः प्रवर्तको न प्रतीतः, केवलव्यतिरेकानुपपत्तेः, ।

प्रतीत्यपेक्षायामपि तस्य मानसावसेयत्वेनान्यलभ्यत्वान्न शब्दगोचरता, ।

तस्माच् छब्दार्थीभूतप्रवर्तकनिरूपणे कार्य्यमेव न्यस्रूपन्निरूपकाः, प्रैषादिष्वपि कार्य्यमेवानुवर्तमानं प्रवृ-

---

टी०—इष्टसाधनतापक्षं निराकरोति—" नापि " इति । भूतादावित्यादिशब्देन वर्त्तमानमभिप्रेतम, अस्तु तर्ह्यनागतमिष्टसाधनं प्रवर्त्तकमित्याह— " नापि " इति, । सामुद्रविदाख्याते=भाविनि राज्यादौ ।

रागपक्षं निराकरोति—" रागस्तु " इति, । कुत इत्यत आह—" सखलु " इति, । सति रागे तत्प्रतीत्यभावेनाऽप्रवृत्त्यनुपलम्भादित्यर्थः, ।

अङ्गीकृत्यापि दूषयति—" प्रतीत्यपेक्षायाम् " इति, । प्रभाकरः परिशेषादिदं सिद्धमुपसंहरति—" तस्माद् " इति, ।

मू०—त्तिर्हेतुतां भजते, ।

तथाहि प्रवर्त्यपुरुषापेक्षया ज्यायसा वक्त्रा प्रतिपाद्यमानं कार्य्यं प्रैष इति व्यपदिश्यते, समेनामन्त्रणं, हीनेनाऽध्येषणम्, इति कार्य्यमेव तत्तदुपाधिभेदेन प्रैषादिव्यपदेशगोचरीभावमाचरति, ।

तदाहुः "कार्य्यमेव च वक्तृणां ज्यायःसमकनीयसाम्, प्रवर्त्यापेक्षया भेदात्प्रैषादिव्यपदेशभाग्" इति, तस्मात् कार्यमेव प्रैषाद्युपाधिभेदेन प्रवर्त्तकं ।

कार्यं च कृतिसाध्यप्रधानं, तदेव च कृतेः प्रधानं

---

टी०—ननु कार्यमेवेति कथं लोके प्रैषादीनामपि प्रवर्त्तकत्वादित्यत आह—"प्रैष" इति, ।

प्रैषादौ कार्यस्यानुवृत्तिमेव दर्शयति,—"तथाहि" इति, ।

उक्तेर्थे शालिकामुदाहरति—"तदाहुर्" इति । प्रवर्त्यपुरुषापेक्षया ज्यायस्समकनीयसां पुरुषाणां भेदात् प्रतिपाद्यमानं कार्यमेव प्रैषादिव्यपदेशभागित्यन्वयः, ।

कार्यस्य लक्षणमाह—"कार्यंच" इति, । फलतत्साधनयोर्व्यवच्छेदार्थं क्रमेण विशेषणद्वयं, प्रधानशब्दार्थमाह—"तदेवच" इति, । ननु दर्शपूर्णमासयोरस्ति भवत्पक्षे प्राधान्यं न च कार्यत्वमिति शङ्कां वाऽपाकरोति—"तदेवच" इति, । फलमधिकृत्यैव कृतिः प्रवर्त्तते न दुःखरूपं धात्वर्थमतो न व्यभिचार इति भावः, ।

म०—यदधिकृत्य कृतिः प्रवर्तते, तत्र कृत्यन्वयव्यतिरेकानुविधायितया कृतिसाध्यता तावदनुमानसमधिगमनीया, प्रधानता च मानसावसेया, कृतिप्रयोजनता हि सा, प्रयत्नश्च कृतिः, स च मानसावसेय इति विशिष्टप्रयोजन भावोपि तस्य तदवसेय इति युक्तं, तेन प्रत्यक्षानुमानाभ्यां कार्यमवसीयते, यथोक्तं 'कृतिसाध्यं प्रधानं यत् तत्कार्य्यमभिधीयते, तच्च मानान्तरेणापि वेद्यमोदनपाकवद्' इति, ।

तथा चाभिलषितसाधनतैव कार्यतेत्यपि प्रत्युक्तं, कार्यता हि कृतिसाध्यतारूपा, साधनता तु फलोपायता,

---

टी०—विशेषणद्वयविशिष्टे तस्मिन् किं प्रमाणमित्यत आह—"तत्र" इति, । मानसावसेयत्वं दर्शयितुं प्रधानशब्दार्थमाह—" कृतिप्रयोजनता " इति, । ततः किमित्यत आह— " प्रयत्नश्च " इति, । नच मानद्वयस्य परस्परवार्तानभिज्ञत्वान्मिथो घटनाऽयोगः, अनुमितिजन्यसंस्कारसचिवे मनसि सोहमिति प्रत्यभिज्ञानवन्मिथः संकलनोपपत्तिरिति भावः,—" ओदनपाकवद् " इति, ओदनः प्रत्यक्षेणावसीयते पाकस्य तत्साधनत्वमन्वयव्यतिरेकाभ्यामित्यर्थः, ।

ननुकार्यं प्रवर्त्तकमिति वदता इष्टसाधनमेवोक्तं तयोरभेदादित्याशङ्क्य विरुद्धधर्माध्यासेन भेदं साधयति— " तथा " इति, । जन्यत्वेन जनकत्वेन च तयोर्भेदादित्यर्थः ।

मू०—तदेवं दहनतुहिनवद् विविक्ताकारयोः कथमेकता-
शङ्का युक्तिमती,।

किंच—अतीतस्य वर्तमानस्य चाभिलषितसाधनता समस्ति, न च तत्कार्यतयाध्यवसीयते, साधनातिरेकिण श्च सुखस्यास्ति कार्यता, सर्वश्च निदाघशर्वरीषु सुरतारम्भपरिश्रान्तशरीरः सुधामरीचिमण्डलं मन्यत एव समीहितोपायं न पुनः कार्य्याकारं, तदन्या च कार्यताऽन्या च साधनतेति जानीमः, तदेवाह 'फलसाधनता नाम या सा नैव च कार्य्यता, कार्य्यता कृतिसाध्यत्वं फलसाधनता पुनः, करणत्वं फलोत्पादे ते भिद्येते परस्परम्' इति,।

तस्मात्फलसाधनतातिरेकिणः कार्य्यस्यैव प्रवर्तकत्वोपपत्तेः तस्यैव परत्रापि प्रवर्तकत्वाध्यवसायः, तच्च

---

टी०—सत्यपीष्टसाधने कार्य्यत्वाभावादपि न तयोरभेद इत्याह—"किञ्च" इति,। सति कार्यत्वे साधनत्वाभावादपि नाभेद इत्याह—"साधन" इति,। अनागतेषु साधनकार्ययोरभेदस्तर्हि स्यादित्यत आह—"सर्वश्च" इति,। कस्मादित्यत आह—"कार्य्यता" इति,। ततः किमित्यत आह—"तस्माद्" इति, भवतु कार्यं प्रवर्त्तकं तथापि शब्दस्य तद्बोधकत्वं कथमित्यत आह—"तच्च" इति,। प्रागुन्नीतन्यायः=शब्दान्वयव्यतिरेका-

मू०—कार्य्यं प्रागुन्नीतया नीत्या शब्देनैव बोधितमित्युपपन्न एव कार्य्ये शब्दशक्त्यध्यवसायः, ।

तत्राप्यावापोद्धाराभ्यां लिङ्ङादेः कार्य्याऽभिधायित्वमितरपदानां च तदन्वितस्वार्थाभिधायित्वं व्युत्पित्सुभिरध्यवसीयते, ।

तदेवं लोके स्वव्यवहारसमधिगतप्रवृत्तिहेतुभावे कार्य्यात्मनि व्युत्पत्तिसम्भवाद् वेदेपि लिङ्ङादियुक्तवाक्यप्रतिपाद्यं कार्य्यमेव प्रतिपद्यन्ते, तच्च कार्यमन्वितमभिधेयमिति स्थितौ सत्याम् 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादिवाक्येषु षष्ठाद्यराद्धान्तानुसारेण स्वर्गकामपदेन नियोज्यतया स्वर्गकामः समर्पणीय इति स्थितम्, ।

---

टी०—नुविधायितया इति यावत्, ।

तथापि कस्य पदस्य कुत्रार्थे विशेषतः शक्तिपरिज्ञानमित्यत आह—"तत्र" इति, ।

भवतु लोके वेदवाक्येषु तु कथं कार्यमित्यतआह—"तदेवम्" इति, । तथापि क्रियातिरिक्तकार्याभिधायकत्वं कथमित्यत आह—"तच्च" इति, । 'षष्ठाद्यराद्धान्तानुसारेण'=स्वर्गकामपदं न कर्त्तुः फलस्य वा समर्पणपरं किन्तु नियोज्यस्येति प्रतिपादितराद्धांतानुसारेणेति यावत्, ।

मू०—यश्च कार्यं बुध्यते स नियोज्यः, यथाह “ नियोज्यः स च कार्यं य. स्वकीयत्वेन बुध्यते ” इति, ।

स च कमिसंबन्धात्साध्यस्वर्गविशिष्टस्तस्मिन्नेव कार्ये नियोज्यतयाऽन्वेति यदेव तस्य काम्यमानोपायतामनुभवितुमुत्सहते,

न च क्रिया क्षणभङ्गिनी कालान्तरभाविफलानुकूलतां गन्तुमलमिति क्रियातो भिन्नमपूर्वमेव मानान्तरावेद्यं लिङ्ङादयः कार्यमवगमयन्ति, ।

तच्च मानान्तरापूर्वतया अपूर्वमिति गीयते, तदाह स्म'क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत्, अतो मानान्तरापूर्वमपूर्वमभिधीयते' इति, ।

---

टी०—नत किमायातमित्यतआह—“ यश्च ” इति, ।

तथापि किमित्यत आह—“ सच ” इति, । स्वर्गे कामो यस्येति शब्दात् स्वर्गस्य कामनासम्बन्धात्सिद्धे च कामनासम्भवात्साध्यस्वर्गविशिष्टो नियोज्यः कार्य्यान्वितः प्रतीयत इत्यर्थः, । कस्मिन्नित्यत आह—“ यदेव ” इति, ।

यागादिक्रियैव तथा किं न स्यादित्यत आह— “ नच ” इति, । भवतु क्रियातो भिन्नं तथाप्यपूर्वत्वे किं निमित्तमित्यत आह—“ तच्च ” इति, । मानान्तरापूर्वतया=मानान्तराऽविषयतयेति यावत्, ।

मू०—तदेव च कार्यतया गम्यमानं स्वात्मनि पुरुषं नियुञ्जानं नियोग इति व्यपदिश्यते यथाह 'कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ, नियोग इति मीमांसानिष्णातैरभिधीयते' इति, न च फलजनकतया गुणभावादपूर्वस्य प्राधान्यप्रच्युतिः, स्वानुकूलनियोज्यलाभायैव फलानुकूलतावलम्बनात् स्वामिवत्, ।

यथा खल्वात्मन एव संविदधानः(१) स्वामी गर्भदासस्योपकरोति तथैतदपि, ।

एवं च लोकव्युत्पत्तिरेव वेदवाक्यानुसारेणापूर्वपर्यन्तं प्रसृता, तदुक्तं ' व्युत्पत्तिरपि कार्यर्थे व्यवहारानुसारिणी, किन्तु निर्द्धारणामात्रं वेदवाक्यविमर्शजम्, इति, ।

---

टी०—ननु वेदेऽपूर्वं प्रवर्तकमिति प्रभाकरास्तत्कथं नियोग इत्यत्र आह—" तदेवच " इति, निष्णातैः=प्रवीणैरिति यावत्, तथापि स्वर्गशेषतया ऽपूर्वस्य प्राधान्यं हीयेतेत्यत आह—" नच " इति, तदुक्तं-'स्वात्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये, कुर्वत्स्वर्गादिकमपिप्रधानं कार्यमेव न" इति, ।

स्वामिवदित्युक्तमुदाहरणं प्रपञ्चयति—" यथा " इति, ।

ननु लोके नियोगस्य मानान्तरागोचरत्वेन सम्बन्धाग्रहो, मानान्तरगोचरत्वेऽपूर्वत्वव्याघात इत्याशङ्क्य लोकसिद्धकार्यव्युत्पत्तिरेव नियोगे पर्यवस्यतीतिपरिहरति—" एवं च " इति, । एवं=निर्धारणमात्रं=लोकसिद्धकार्य्यमात्रस्य क्रियातिरिक्ताविशेषानिर्धारणमात्रं वेदवाक्यविमर्शनेन जायत इत्यर्थ, ।

---

(१) संविदधान.=योगक्षेम कुर्वाण इत्यर्थ. ।

मू०—तद्यथा वैदिकवाक्यशेषानुसारेण दीर्घशूकाद्यर्थमेव यववराहादिपदं निर्णीयते तथैव वैदिकनियोज्याभिधायि-स्वर्गकामपदसमभिव्याहारानुसरणेन लिङ्ङादीनामपूर्व-कार्याभिधायकत्वनिर्णयो नानुपपन्नः,

तदेवं सङ्गतिग्रहणसम्भवादुपपन्नमपूर्वकार्य्यात्मनि प्रामाण्यमाम्नायस्येति सिद्धम्, ।

अत्राभिदध्महे-यत् तावत् 'कथमिह कार्यात्मनि' इत्या-रभ्य 'बालाः समाकलयन्ति' इत्यन्तमभिहितं, तद्यु-ज्येत यदि कार्यबोधस्य स्वात्मनिप्रवर्तकभावः प्रसिद्धः,

---

टी०—वेदवाक्यविमर्शनेन प्रसिद्धातिरिक्तविशेषनिर्णये दृष्टान्तमाह— "तद्यथा" इति, । 'यवमयश्चरु' 'वाराही उपानहौ' 'वैतसे कटे प्राजापत्यान् सञ्चिनोति' इत्यत्र यव-वराह-वेतसाः किमार्य्यसिद्धा. किं वा म्लेच्छप्रसिद्धाः प्रियङ्गुकृष्णशकुनिजम्बुः स्वीकर्तव्या इति सन्देहे 'अथान्या औषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति' 'वराहं गावोनुधावन्ति' 'अप्सु जो वेतस' इति वाक्यशेषत्रयानुसारेण यववराहवेतसपदानि दीर्घशूक-शूकरवानीरपरतया यथा निर्णीयन्ते तथा स्वर्गवाक्यगतस्वर्गकामपदानुसारेण लिङ्ङादिपदं क्रियातिरिक्तकार्य्यविषयतया निर्णीयत इत्यर्थ, ।

लोके वृद्धव्यवहारानुसारेण शब्दानां कार्यपरत्वमुक्तं विघटयति "यत् तावद्" इति, ।

परमतनिराकरणेन परिशेषात्कार्यपरत्वमुक्तं परिशेषाभावेन

मू०—यदपि तत्सिद्धये वहुविधवादिविवादानुपन्यस्य निराकृतं तत्र फलवोधपर्यन्तानां प्रवर्तकतानिराकरणमस्मदिष्टमेव चेष्टितं, कः खल्वनुकूलमाचरति प्रतिकूलमाचरेत् ।

फलसाधनताप्रतीतिरपि न प्रवर्तिका, इति तु न क्षम्यते तस्याः स्वात्मन्यन्वयव्यतिरेकावसितप्रवृत्तिहेतुत्वात्, नो खल्वयं कदाचिदप्यनवसितश्रेयःसाधनभावव्यापारे प्रवृत्तः, प्रैषादयोपि हि समीहितोपायभावानुरोधेनैव प्रवर्तकाः, अननुविधेयप्रैषादिषु प्रवृत्त्यभावात्, ।

यत्तु 'भूतादौ व्यभिचार'इति तन्न हृदयंगमं, येनापि हि फलसाधनताधियः प्रवर्तकता नास्ति किन्तु कार्य्यस्यैव सेत्यभ्युपगतं तेनाप्यभ्युपगतैव तावत्प्रवर्त-

---

टी०—तद्दूषयति—"यदपि" इति ।श्रेयःसाधनस्य प्रवर्त्तकत्वान्न परिशेषसिद्धिरित्यर्थः, । व्यतिरेकंदर्शयति—" नोखलु " इति । कथं तर्हि तदभावेपि प्रैषादिषु प्रवृत्तिरित्यत आह—" प्रैषादयोपि " इति । तदेव कथमित्यतआह—"अननुविधेय" इति ।

व्यभिचारित्वेन नेष्टसाधनस्य प्रवर्त्तकत्वमित्युक्तमनुवदति—" यत्तु " इति, ।

यादृशेष्टसाधनस्य कार्यवोधजनकत्वं तादृशस्याव्यभिचारात्प्रवर्त्तकत्वमुपपन्नमिति परिहरति—" येनापि " इति, ।

मू०—कीभूतकर्तव्यधीजनने फलसाधनताप्रतीतिरुपकारिता,।

यत आह स्म 'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत्, फलसाधनता तत्र कारणं तेन कार्य्यता' इति, ।

तथा 'स्वभावेन हि कर्माणि दुःखोत्पादनहेतुभूतानि तेषु कार्यत्वावगमः फलसाधनतावगमनिबन्धन' इति च।

अन्योप्याह स्म 'इष्टोपायताधिया हि ममेदं कार्यमिति बुद्ध्या स्वतन्त्रः प्रवर्त्तत इति, 'इष्टोपायताधीत एव क्लेशरूपस्य कार्यता' इति च, तत्रेष्टोपायताधियः कार्य्यताधीजननेपि तुल्य एवायं भूतादिपर्यनुयोगः, ।

यदपि मतं कृत्युद्देश्यतैवेष्टोपायस्य भूताद्याकारस्य

---

टी०—तदप्यसङ्गतमित्याशङ्क्य तत्साधनत्वेन शालिकावचनमुदाहरति—"यत" इति,। स्वयं क्लेशरूपं कर्म कार्यतां व्रजेदिति यत्तत्र फलसाधनताकारणं तेन तस्य दुःखरूपकार्यस्यापि कार्यतेत्यर्थः।

तदीयमेव वचनान्तरमुदाहरति—"तथा" इति,।

भवनाथवचनमुदाहरति—"अन्योपि" इति,। तस्यैव ग्रन्थान्तरमाह—"इष्ट" इति,। ततः किमित्यत आह—"तत्र" इति,।

कार्यबुद्धिजनकेष्टसाधने व्यभिचारपरिहारमाशङ्कते—"यदपि"

मू०—व्यावर्त्तिका, द्विविधा खल्विष्टोपायधीर्भूताद्याकारा कार्याकारा च, तत्र कार्याकारायाः प्रवृत्तेः कार्यधीतः प्रवृत्तिरिति गीयते,

नचैवमिष्टोपायधीवेद्यमेव कार्यं नत्विष्टोपायताज्ञाप्यमिति सांप्रतम्, इष्टोपायताकारोल्लेखादेव हि कार्यतापर्यन्तं वेद्यतेति तज्ज्ञाप्यत्वमुक्तम्, ।

यथा खल्वेकधीवेद्यत्वेप्याकृतितो व्यक्तिधीरुक्तेति, तत्रैतावदेव वक्तव्यं हन्ताऽस्मन्मतेपि द्विविधैवाभिलषित साधनता भूताद्याकारा कृतिसाध्यतैकार्थसमवायिनी चेति, तत्र कृतिसाध्यतैकार्थसमवायिनी प्रवृत्तिहेतुरुपेयते न पुनः समीहितसाधनतामात्रं, सिद्धे स्वतोऽन्यतो

---

टी०—इति, । कृत्युद्देश्यताया भूताद्याकारव्यावर्त्तकत्वं दर्शयितुमिष्टसाधनबुद्धेर्द्वैविध्यमाह—"द्विविधा" इति, । कार्याकाराया हितसाधनबुद्धेर्हेतोः पुरुषप्रवृत्तेः कार्यधीतः प्रवृत्तिरित्यर्थ, ।

ननु तर्हीष्टसाधनकार्ययोरेकज्ञानवेद्यत्वादिष्टसाधनज्ञानेन कार्यज्ञानं जायते इति परिभाषा परित्यक्तेत्यत आह—"नचैवम्" इति, । विशिष्टज्ञानस्य विशेषणाकाराल्लेखपुरस्सरं विशेष्याकारोल्लेखादुपचारेण तत्र ज्ञाप्यत्वमुक्तमित्यर्थ., ।

एवंविधोपचारोऽन्यत्रापि दृश्यत इत्याह—"यथा" इति, ।

आकृतित.=जातितः, 'जातिमाकृतिं प्राह' इति वचनाद्, ।

अयं परिहारोऽस्मन्मतेपि तुल्य इत्याह—"तत्र" इति, ।

कुत इत्यत आह—"सिद्ध" इति, । मा प्रसांक्षीत्–प्रवृत्तिरिति

मू०—वा तस्मिन्ननपेक्षितव्यापारे मा प्रसाङ्क्षीत्, ।

अन्यथा हि यजमानसमापिता कारीरी भवत्यवग्रहविशोषिशस्यानां कृषीवलानामभिमतोपाय इति प्रसज्यते तत्रापि प्रवृत्तिः, ।

नापि कृतिसाध्यतामात्रं फले व्यभिचाराद् ।

अतएवोक्तमाचार्यवाचस्पतिना 'कर्तव्यतैकार्थसमवायिनी समीहितसाधनताविधिर्' इति, ।

नच कृतिसाध्यतामात्रातिरेकिणी कृत्युद्देश्यता नाम प्रमाणपथमवतरतीति निरूपयिष्यामः, ।

ननु हितसाधनताया अपि प्रवर्तकरागोत्पादहेतुभावेनान्यथासिद्धत्वान्न प्रवर्त्तकताध्यवसानं, मैवं, विकल्पासहत्वात्,

तथाहि रागमात्रं वा प्रवृत्तिहेतुः,

---

टी०—शेषः, स्वतोऽन्यतो वा सिद्धे हि साधने प्रवृत्तिर्माभूदित्येतदर्थं कृतिसाध्यविशेषणमङ्गीकरणीयमित्यर्थः, ।

कृतिसाध्यतातिरिक्तकृत्युद्देश्यत्वमङ्गीकृत्येष्टसाधनस्य भूतादौ व्यभिचारः परिहृतस्तदेव तु नास्तीत्याह—" नच " इति, । यद्येष्टसाधनकार्यपक्षयोर्न परिहारसाम्यं कार्यपक्षेतिरिक्तकृत्युद्देश्यत्वाऽङ्गीकारादित्यत आह—" नच " इति, । अन्यथासिद्धत्वादिष्टसाधनस्यापि न प्रवृत्तिहेतुत्वमिति शङ्कते—" ननु " इति, । न फ-

मू०—हितसाधनतावच्छिन्नो वा रागः, न तावत् प्रथमः पक्षः, फलरागे व्यभिचारात् ।

यस्तु फलराग एव साधने प्रवृत्तिहेतुरिति मन्येत तस्यान्यरागोऽपि चेदन्यत्र प्रवर्तकः स्यादतिप्रसङ्गः, तत् साधन एवेति नियमान्नाति प्रसङ्ग इति चेद्, न, तत्राप्यनवसिते फलसाधने सत्यपि फलरागे प्रवृत्त्यनुपलंभात्, ।

सत्येव तदधिगमे फलरागः प्रवर्त्तक इति चेत्, तर्हि प्राप्ताप्राप्तविवेकेन हितसाधनताधिगम एव प्रवृत्तिहेतुः, ।

अथ साधनगोचर एव रागस्तदवच्छिन्नः प्रवृतिहेतुः, तथापि तदवछिन्नस्य प्रवृत्तिहेतुतायां सिद्धा तावत् तस्यापि प्रवृत्तिहेतुता, ।

---

टी०—लरागे व्यभिचारः तस्यापि तत्साधने प्रवृत्तिहेतुत्वादित्याह—“ तत्साधन ” इति, । व्यभिचारेण दूषयति—“ नतत्र ” इति, । परिहरति—“ तर्हि ” इति, । प्राप्तःफलरागो अप्राप्तमिष्टसाधनज्ञानं तयोः कारणत्वविवेकेन क्रियमाणेनेति यावत्, ।

फलरागे सत्यपीष्टसाधनज्ञानस्यावगमाभावात्प्रवृत्त्यनुपलम्भात् तस्यैव प्रवर्त्तकत्वमित्यर्थः, द्वितीयंविकल्पमाशङ्कते—“ अथ ” इति, । विशिष्टस्य प्रवृत्तिहेतुत्वे विशेषणांशस्यापि तद्हेतुत्वमनिवार्यमित्यर्थः, ।

इष्टसाधनातामात्रं न प्रवर्त्तकं रागाभावे प्रवृत्त्यनुपलम्भादिति

मू०—सत्त्यं नतु तन्मात्रं प्रवृत्तिहेतुः, सम्भवति हि कदाचिज् जानन्नपि फलसाधनतां जान्हवीजलाप्लवनस्य रागवैधुर्य्यान्न प्रवर्त्तत इति, ।

स्यान्मतं न तत्र फलसाधनतैव विज्ञाता, फलं हि नाम तदेवाभिधीयते यदभिलाषगोचरीभूतं यदा पुनर्जान्हवीजलाप्लवनादौ नायं प्रवर्त्तते तदा नास्त्येव तत्फलेप्यभिलाषः, नचान्तरेणाभिलाषगोचरीभावं फलतैवेति कथं तत्साधनस्य फलसाधनता कथन्तरां च फलसाधनज्ञानेप्यप्रवृत्तिरभिधीयते कथंतमांच रागावच्छेदेन प्रवृत्तिहेतुभावः कल्प्येत, ।

---

टी०—शङ्कते पूर्ववादी—"सत्त्यम्" इति, ।

फलस्येच्छाविषयत्वलक्षणत्वादिच्छानुत्पादेन तत्र तत्साधनस्येष्टसाधनत्वाभावान्न व्यभिचार इति सिद्धान्तिनः शङ्कामुत्पादयति—"स्यान्मतम्" इति, । फलसाधनत्वाभावं दर्शयितु फललक्षणमाह—"फलंहि" इति, । ततः किमित्यतआह—"यदा पुनर्" इति, मा भूदभिलाषस्तथापि कथमिष्टसाधनत्वाभाव इति तत्राह—"नचान्तरेण" इति, । फलसाधनत्वाभावादेव न प्रवृत्तिव्यभिचार इत्याह—"कथंतरां च" इति, । व्यभिचाराभावादेव न तत्परिहाराय रागावच्छिन्नत्वमपि वचनीयमित्याह—"कथन्तमाञ्च" इति, ।

मू०—यदा पुनरुन्नीतफलसाधनताध्यवसीयेत रागोऽपि तन्नान्तरीयकस्तदा जायत एवेति तत्राप्रवृत्तौ रागपक्षेपि समानो व्यभिचारः, विरोधिरागप्रतिबन्धाद् रागपक्षेपि प्रवृत्तिविच्छेदे समीहितसाधनपक्षेपि न प्रतिबन्धकल्पना दण्डवारिता, सत्यं तथापि समीहितसाधनताध्यवसायसमनन्तरं तद्गोचररागोत्पादस्तदनन्तरं प्रवृत्तिरिति स्वानुभवसिद्धत्वात् सर्वप्राणिनां रागप्रवृत्त्योर्यौगपद्यानुपलम्भात्, समीहितसाधनताज्ञानं रागमुत्पाद्य तत्सहकारिप्रवर्तकमिति समाश्रयणीयम् अन्यथा सति कारणपौष्कल्ये कार्य्यक्षेपानुपपत्ते रागप्रवृत्त्योर्युगपदुत्पादापाताद्, अतः सत्यपि समीहितसाधनतावसाये रागोत्प-

---

टी०—यदि पुनरिच्छाविषय एव फलं तत्साधनमेवेष्टसाधनं तदा प्रवृत्तिव्यभिचारशङ्कापि नावतरतीत्याह—" यदापुनर् " इति,। रागपक्षे व्यभिचारो विरोधिरागप्रतिबन्धादित्यात्याशङ्क्य सोऽस्मन्मतेपि तुल्य इत्याह—" विरोधि " इति, । तथापीष्टसाधनज्ञानस्य रागादिजनकतयाऽन्यथासिद्धत्वान्न प्रवृत्तिहेतुतेति दूषयति सत्यवादी—" सत्यम् " इति,। एकस्य युगपदनेककार्य्यजनकत्वदर्शनाद् रागप्रवृत्त्योर्युगपदुत्पाद एव किं न स्यादित्यत आह—" राग " इति, । कस्मादित्यत आह—" अन्यथा " इति, । क्षेपः=विलम्बः, ततः किमित्यत आह—" अत " इति, । ननु रागस्य प्र-

# विज्ञप्तिः ।

१ अस्यां चौखम्बासंस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते ।

२ एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

५ भारतवर्षीयैर्ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं — मूल्यम् मुद्राः ७ आणकाः ८

६ कालान्तरे प्रतिस्तबकं — " " १ " ०

७ प्रापणव्ययः पृथग् नास्ति ।

८ साम्प्रतं मुद्र्यमाणा ग्रन्थाः–

| | | मुद्रिताः स्तबकाः |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत–न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । सम्पूर्णः । | (वेदान्तः) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला–श्रीपार्थसारथिमिश्र विरचिता सम्पूर्णः । | ( मीमांसा ) | २ |
| (८) ब्रह्मसूत्र भाष्यम्–वादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । सम्पूर्णः । | ( वेदान्तः ) | ६ |

मू०—त्त्युत्तरकालं प्रवृत्तिसंदर्शनात् प्राक्चादर्शनाद्, अन्वयव्यतिरेकसिद्धा रागस्यापि प्रवर्तकता, तन्मात्रस्य प्रवर्तकता चेत् फलादौ व्यभिचरति, मा भूत्, फलसाधनतावच्छिन्नस्य प्रवर्तकतायां न किञ्चिदवद्यम्पश्याम इति। सत्यं, न वयमपि रागस्य प्रवर्तकतां पराकुर्मः किं पुनरवश्याश्रयणीया श्रेयःसाधनतायाः प्रवर्तकतेत्येतावदुपपादयामः, तत्र भवानपि चेच्छुद्धरागस्य प्रवर्तकतामपहाय समीहितसाधनताया अपि रागावच्छेदेन प्रवर्तककोटिनिवेशमङ्गीकुरुते नैवास्ति विवादः,

तस्मात् कृतिसाध्यतैकार्थसमवायिनी श्रेयःसाधनता

---

टी०—वृत्तिहेतुता फलेव्यभिचरतीत्युक्तमिति तत्राह—"तन्मात्रस्य" इति,। ननु रागस्य प्रवृत्तिहेतुनास्तीति उच्यते किं वा हितसाधनस्य सा नास्तीति, आद्योऽङ्गी क्रियत इत्याह—"सत्यम्" इति,। द्वितीयस्त्वनुपपन्न इत्याह—"किं पुनर्"इति,। ननु रागस्य प्रवर्त्तकत्वे कथं भवदभिमतसिद्धिरिष्टसाधनज्ञानस्य रागजननेनान्यथासिद्धेरुक्तत्वादित्यत आह—"तत्रभवान्" इति, । भवतापि फलरागे व्यभिचारपरिहारायाभिमतसाधनावच्छेदेन रागस्य प्रवर्त्तकता वचनीया, तथा च प्रवर्त्तकविशेषणतयेष्टसाधनस्यापि प्रवृत्तिहेतुत्वसिद्धिः, न च कारणकारणतयान्यथासिद्धि, हेतुत्वसिद्धौ स्वाङ्गं स्वस्याव्यवधायकमिति न्यायेन व्यवधानस्य तदविघातकत्वाद्, यागस्य स्वर्गजननेऽपूर्ववदभिलाषस्याऽवान्तरव्यापारतया उपपत्तेरिति भावः, ।

समीहयैवभूतादेर्व्यावृत्तिसिद्धौ कृतिसाध्यत्वविशेषणमनुपयो-

मू०—रागावच्छेदेन प्रवृत्तिहेतुतामवलम्बतइति सिद्धम्,

नन्वेवमपि किं कृतिसाध्यतैकार्थसमवायिताविशेषणेन, श्रेयःसाधनतैव चेतनसमीहास्पदत्त्वेन प्रवृत्तिहेतुरस्तु, चेतनसमीहा च नातीतादाविति सिद्धा समीहयैव तद्व्यावृत्तिरपीति, ।

मैवं, अस्तिहि निदाघनिशीथिनीसुरतारम्भपरिश्रान्तसुन्दरीसमीहास्पदस्य समीहितसाधनस्यापि सुधामरीचिमण्डलोदयस्य प्रवर्तकताव्यभिचारः, तस्माद् विषयस्य कृतिसाधनतार्हतापि कर्तृसामर्थ्यादिवत् समीहितसाधनतासहकारिभावेन प्रवृत्तावुपयुज्यत एवेति रमणीयम्, ।

यदपि कैश्चित्—कृतिसाध्यतायाः कालोपबन्धाधिगत-

---

टी०–गीति शङ्कते-"नन्वेवम्" इति । तावता कथमतिप्रसङ्गनिवृत्तिरिति तत्राह—" चेतनसमीहाच " इति ।

स्वसमीहामात्राविषयत्वेनावगतेष्टसाधनस्याप्यप्रवर्त्तकत्वात्कृतिसाध्यत्वविशेषणमुपयोगीति परिहरति— " मैवम् " इति ।

कृतिसाध्यत्वविशेषणस्योपयोगप्रकारमुपसंहारव्याजेनाह–" तस्माद् " इति, कृतिसाध्यत्वस्य प्रतिबन्धनिरासद्वारेणान्यथासिद्धौ कथमुपयोग इति मतान्तरमुत्थापयति—" यदपि " इति, ।

मू०—लक्षणप्रतिबन्धव्युदासद्वारेण कथं चिद् अन्यथासिद्ध्युपपत्तिर् 'इति वर्णितम्,

अस्तु नामायमपि पन्थाः सर्वथापि तावत्साक्षात्परम्परया वा कृतिसाध्यताया अप्यस्त्येव प्रवृत्त्युपयोगः, किन्तु न तन्मात्रस्य, व्यभिचारात् फलादावित्युक्तम्, तन्मात्रस्य प्रवर्त्तकताभ्युपगमेपि न पराभिमतसिद्धिः, पराभिमतं हि प्रधानतापरपर्यायकृत्युद्देश्यतोपहितमर्यादमेतत्कार्यमिति, यतआह—' कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयते ' इति ।

यदपि रागस्य प्रवर्त्तकतायामपि न तस्य शब्दार्थतेत्युपपादितं तत्राविवाद एव ।

---

टी०—अतीतवर्तमानकालविशिष्टवस्तुनि न भवति प्रवृत्तिर् अनागतेऽपि चाऽशक्या तदेतत्प्रतिबन्धनिरासद्वारेण कृतिसाध्यत्वमुपयोगि न पुनः साक्षात्प्रवृत्तिहेतुतयेत्यर्थः, सामर्थ्यवत्सहकारितया प्रतिबंधनिरासद्वारेण परम्परया वा कृतिसाध्यत्वं तावत् प्रवृत्त्युपयोगीति दूषयति— " अस्तु " इति । तर्हि कृतिसाध्यत्वमेव प्रवृत्तिहेतुरस्तु कृतमितरेणेति तत्राह—" किन्तु " इति, आदिशब्देन दुःखतत्साधने संगृहीते ।

अङ्गीकृत्यापि दूषयति—" तन्मात्रस्य " इति,। प्रधानतापरपर्य्यायो यस्याः कृत्युद्देश्यतायाः सा तथा, उपहिता मर्य्यादा=सीमा यस्य तत्तथा तद्विशिष्टमिति यावत् ।

रागस्य न शब्दार्थत्वमित्युक्तमनूद्य दूषयति–"यदपिरागस्य"

मू०—यत्तु शब्दार्थीभूतप्रवर्तकनिरूपणे कार्य्यनिरूपणमिति, तन्न मनोहरम्, उन्नीतन्यायेन श्रेयःसाधनस्यैव तद्भावाद्, ।

यच्च प्रैषादिष्वपि कार्य्यमेवानुवर्तमानं प्रवृत्तिहेतुरिति प्रतिपादितं तदपि प्रागुक्तन्यायेन परास्तम्, ।

यत्त्विदं कार्य्यलक्षणमवादि—'कृतिसाध्यं प्रधानम्' इति, तत्र कृतिसाध्यतायामविगानं, प्राधान्यं तु न जानीमः, ।

स्यान्मतं—तदेव कृतेः प्रधानं यदधिकृत्य कृतिः प्रवर्तते, तत्तु प्राधान्यं मानसवेद्यं, कृतिर्हि प्रयत्न एव स च मानसावसेय इति विशिष्टप्रयोजनभावोऽपि तस्य तदवसेयः, कृतिप्रयोजनतालक्षणं च प्राधान्यमिति निवेदितम् ।

अद्धा, नतु तद् युक्तिमत्—कृतिर्हि फलं तत्साधनं

---

टी०—इति । प्रैषादिष्वनुवर्त्तमान कार्यमेव प्रवर्त्तकमिति यदुक्तं तद्विघटयति—"यच्च" इति, । किं प्राधान्यानिरुक्तिरुत प्रमाणाभाव इति विकल्प्याद्ये दूषणमाह—"तदेव" इति, । द्वितीयं दूषयति—"तत्तु" इति, । तदुपपादयति—"कृतिर्हि" इति. साधनफलयोरतिव्यापकत्वेन प्राधान्यं दूषयति—"अद्धा" इति,।

मू०—वाऽधिकरोति, तथा च फलता तत्साधनता वा प्रधानतेत्यभिहितं स्यान्नतु तदतिरेकिणी सा मनसाऽप्यनुभूयते।

यदि मतम्—एकैकव्यभिचारेपि फले तत्साधने चानुवर्तमानः प्रयोजनीभाव एव कृतिं प्रति प्राधान्यमिति।

हन्ताभिलाषगोचरीभाव एव प्रयोजनीभावो न पुनस्तदतिरेकीति विधान्तरेणाभिलाष एव प्रवर्तक इत्यभिहितं स्यात्, स च न फलमात्रगोचरो विशिष्टप्रवृत्तिहेतुरिति तत्साधनगोचर एवाभिलाषस्तद्गोचरो वा साधनविशेषः प्रवृत्तिहेतुरित्यायातमर्थात्,

सचायमस्मत्पक्ष एवायुष्मताप्यतिनिरूपणेन समर्थितः स्यात्, ।

---

टी०-प्रमाणं दूषयति—" नतुतदतिरेकिणी " इति, ।

फलतत्साधनयोरनुवर्त्तमानं प्रयोजनत्वमेवातिरिक्तमस्तीति शङ्कते—" यदिमतम् " इति, ।

उभयसंमतेच्छाविषयतातिरिक्तं प्रयोजनत्वमपि तत्र नास्ति तेन व्यभिचारस्तदवस्थ इति परिहरति—" हन्त " इति, । ननु नाभिलाषस्य प्रवर्त्तकत्वं फले व्यभिचारादित्युक्तमत आह—" सच " इति, । अर्थाद्=अनुपपत्त्या, ततः किमायातमित्यत आह—" सच " इति, । अतिरिक्तं कार्य्यं सिसाधयिषुस्तद्विषयं तावत्साधयति—

मू०—स्यादेतद्—अस्ति तावन् ममेदं कार्यमिति धीः, नचेयं कृतियोग्यतामात्रमवलम्बत इति साम्प्रतम् ।

सत्यामपि तस्यामनिष्टतत्साधनयोरस्याः कदाचिदप्यनुपलम्भाद्, नचास्याः श्रेयःसाधनतैव गोचर इति साम्प्रतं, नह्यस्ति सम्भवो यदेव समीहितं प्रति साधनन्तदेव कार्यबुद्धिगोचर इति, भूतवर्तमानयोः सत्यामपि समीहितसाधनतायां कार्यधीगोचरभावाऽभावात्, तथाच फलस्याऽपि सुखस्य साधनतां विनापि कार्यताऽवगतिरस्ति, शिशिरमरीचिमण्डलादौ च सत्यामपि समीहितसाधनतायां नास्ति कार्य्यताधीरिति निर्वेदितम्,

---

टी०-"स्यादेतद्" इति, । एवं विधा बुद्धिरनुभवसिद्धेत्यभिप्रायः, तथापि कृतियोग्यतामात्रविषयतायां सत्यां नातिरिक्तसाधनत्वमित्यत आह—" नचेयम् " इति, । श्रेयःसाधनत्वमेव तर्हि विषय इत्यत आह—" न च " इति, । किमतीतवर्त्तमानेष्टसाधनं तद्बुद्धेर्विषयः किं वाऽनागतमिति विकल्प्याद्ये दूषणमाह—" न ह्यस्ति " इति, । साधनत्वाभावेपि कार्य्यबुद्धिसद्भावादपि न तस्य विषयत्वमित्याह—" तथाच " इति, । द्वितीयं दूषयति—" शिशिर " इति, । तर्हि फलमेव विषय इत्यत आह—

मू०—अतः समीहितसाधनतारिक्तमेव कार्य्यबुद्ध्यालम्बनं, नापि फलमेवाऽस्या आलम्बनमिति युक्तं, तत्साधनेऽप्यस्याश्चन्दनपङ्कस्पर्शादौ वहुलमुपलम्भात्, नाप्यभिलाषगोचरताकार्यधीपदं, सुधाकरमण्डले व्यभिचारात्,

तस्मादेकैकव्यभिचारेपि फलतत्साधनयोरनुवर्त्तमानं तदतिरेकिणमेव कञ्चनाकारं गोचरयति गोबुद्धिरिव कालाक्ष्यादिष्वनुगता तदतिरेकिणं गोत्वाकारमिति युक्तमुत्पश्यामः, ।

सचायमाकारः कार्यपदवेदनीयः कृतिप्रधानता कृत्युद्देश्यता चेति गीयते, तद्गोचरा चेयं बुद्धिर्मनोमात्रप्रभवा स्तनपानादिस्वप्रवृत्तिसंततावितिं मानसवेदनीयं प्राधान्यं प्रवृत्तिहेतुरितिगीयत इति, ।

---

टी०-"नापि" इति, । फलसाधनयोरनुगताभिलाषगोचरत्वमेव कार्यबुद्धिविषयः स्यादित्यत आह—"नाप्यभिलाष" इति, ।

उपसंहरति—"तस्माद्," इति, ।

भवतु नाम तथापि कार्यसिद्धिः कथमित्यत आह—"सचायम्" इति, । प्रमाणमपि न तत्र दुर्वचनमित्याह—"तद्गोचरा" इति, । ममेदं कार्य्यमितीच्छाया एवमनुभूयमानत्वादतिरिक्तबुद्धिसद्भावे मानाभावान्न तद्विषयतया कार्य्यसिद्धिरिति कृ-

मू०—तदेतदखिलमप्याकाशरोमन्थनमिवाभाति, न खल्वियं ममेदं कार्यमितिधीः किन्त्वभिलाष एवायं चिकीर्षालक्षणः सकलजनमानसप्रत्यक्षप्रवेदनीयतया साक्षिमात्रनिर्भास्यतया वा प्रथत, इति नैषा कञ्चनार्थं व्यवस्थापयितुमलं प्रमाणभावाभावाद्, इन्दुमण्डलोदयादौ चाभिलाषभावेपि न तत्र चिकीर्षालक्षणः कृतियोग्यतानुविधानात् तस्य, तत्र च कृतियोग्यताभावात्, अतोभिलाषरूपाविशेषेप्यसाधारणाकारभेदाद् निर्भासभेदोपपत्तिः।

यत्पुनरिहैके वर्णयांबभूवुः, यावदियं सङ्कल्परूप-

---

टी०-षयति—"न खलु" इति,। मानसप्रत्यक्षइत्यादिना मतभेदेन साधनद्वयोपन्यासः, तथाप्यभिलाषस्य सविषयतया विषयव्यवस्थापकता किन्न स्यादित्यत आह—"नैषा" इति,। तस्याऽमानत्वाद्, आज्ञानत एव सविषयत्वे विज्ञानत्वप्रसङ्गाद्, एतज्जनकविज्ञानस्य सविषयतया सविषयत्वोपचाराच्च न विषयसाधनत्वमित्यर्थः। नन्वभिलाष एव यदि ममेदं कार्यमिति प्रथते अभिलाषत्वाविशेषादिन्दुमण्डलाभिलाषोपि तथाप्रथामनुभवेदित्यत आह—"इन्दुमण्डल" इति। अवान्तरभेदादेव तथा न प्रथत इत्यर्थः, कृतियोग्यतापि तत्र स्यादित्यतआह—"तत्र च" इति। अशक्यविषयत्वादित्यर्थः।

चिकीर्षैवानुपपद्यमाना स्वकारणतया कार्यधियमुपस्थापयतीच्छाज्ञानयोर्जन्यजनकभावादिति शङ्कते—"यत्पुनर्" इति।

मू०—चिकीर्षातिरेकिणी कार्यधीर्नोदेति तावद् बुद्धिपूर्वकारिणश्चिकीर्षैव न सम्भाविनी, समीहितोपायधीमात्राच्चिकीर्षानुत्पत्तेः, सङ्कल्पधियोस्तु तुल्याभिलापत्वादभेदाभिमान इति ।

तदतिमन्दं, यादृशस्याभिलषितसाधनस्य कृत्युद्देश्यतानिरूपकताभिमता भवतां तादृशस्यैव चिकीर्षालक्षणाभिलाषकारणतोपपत्तेः, तत्र यदि कृतिसाध्येष्टसाधनताधियः कृत्युद्देश्यताबुद्ध्युत्पादादिष्टसाधनताधियःकार्यधीरिति गीयते, हन्त तादृश्या एवेष्टसाधनताधियश्चिकीर्षाकारणतोपपत्तिः,असति च भेदावगाहिनि प्रमाणे तुल्याभिलापनिमित्तः सङ्कल्पधियोरभेदाभिमान इत्यपि

---

टी०—इष्टसाधनज्ञानमेव चिकीर्षाया हेतुरित्यत्राह—"समीहित" इति, । इन्दुमण्डलोदयादौ व्यभिचारादित्यर्थ, । यदि संकल्पातिरिक्ता कार्यधीस्तदा किमिति भेदो न प्रथत इत्यत आह—"संकल्प" इति, । वाचकशब्दाभेदादभेदाभिमानो, गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यभिधानाभिधेयज्ञानेषु परीक्षकाणामभेदभ्रमवदित्यर्थ ,।

कृतियोग्यश्रेयःसाधनविज्ञानस्यैव चिकीर्षाहेतुत्वादतिरिक्तकार्यसद्भावे न प्रमाणमस्तीति परि हरति—"तदतिमन्दम्"इति, । तदेव स्पष्टयति—"तत्रयदि" इति, । संकल्पधियोस्तुल्याभिलापत्वादभेदाभिमान इति यदुक्तं तद्दूषयति—"असति च"

मू०—को ब्रूयादन्तरेण स्वदृष्टिपक्षपातम् ।

चिकीर्षातिरेकिणश्च प्रधानभावस्य मानसवेदनीयताभिधानमनुपलम्भपराहतं नरविषाणभानाभिधानवत्, नच वादिविप्रतिपत्तौ प्रत्यक्षवाचोयुक्त्यैवार्थसंप्रतिपत्तिसम्भवः, सम्प्रतिपन्नेनैव हि प्रमाणेन विप्रतिपन्नो वोधनीयः, नच प्रकृते सम्प्रतिपन्नं मानसं प्रत्यक्षमिति कथं तेन तदापादनम्, ।

अस्तु वा पराभिमता कार्यता, तथापि नासौ प्रवृत्तिहेतुः फले व्यभिचाराद्, ।

नच फलसमवायिन्येव कर्त्तव्यता साधने प्रवृत्तिहेतुरिति साम्प्रतं, नो खल्वन्यकर्त्तव्यताऽन्यत्र प्रवर्त्तयत्यति

---

टी०—इति, । ननु चिकीर्षातिरिक्तं प्राधान्यं मानसवेदनीयमित्युक्तं तत्राह—"चिकीर्षा" इति, । नरविषाणसत्त्वाभिधानवदित्यर्थ, ननु सति प्रत्यक्षे कथं नरविषाणसमत्वाभिधानमित्यत आह—"नच" इति, । कस्मादित्यत आह—" सम्प्रतिपन्न " इति, । ततः किमित्यत आह—" न च " इति, । अङ्गीकृत्यापि दूषयति—" अस्तुवा "इति। साधने प्रवृत्तिहेतुत्वाद्व्यभिचार इत्याशङ्क्याह—" न च " इति ।

मू०—प्रसङ्गात्, तत्साधने नियमान्नातिप्रसङ्ग इति चेन् मैवं, तत्राप्यनधिगते तत्साधने फलकार्यताधिगमेपि प्रवृत्त्यनुपलम्भात, सत्येव तदधिगमे फलकार्य्यताधिगमः प्रवृत्तिहेतुरिति चेदेवं तर्हि प्राप्ताऽप्राप्तविवेकेन तत्साधनाधिगम एव प्रवृत्तिहेतुरित्यलमति वाचालतया, ।

कृतिसाध्यतामात्रस्य च ममीहितसाधनतातिरेकित्वमभ्युपेयत एव नतु तन्मात्रात्पराभिमतसिद्धिः, नच कृतिसाध्यतामात्रं प्रवर्त्तकम्, अनिष्टादौ व्यभिचाराद्, उन्नीतरीत्या च कार्यस्य प्रवर्त्तकत्वाभावे तत्र पदसङ्गतिग्रहोपि परास्तावकाश एव, सङ्गतिग्रहेपि न सर्वपदानां तदन्वितस्वार्थाभिधायित्वमध्यवसातुं शक्यत इति प्रागेवाभिहितम्, ।

---

टी०—अनवगते तत्साधने व्यभिचारस्तदवस्थ इति परिहरति—"मैवम्" इति ।

विरुद्धधर्माध्यासादिष्टसाधनातिरिक्तं कार्यमस्तीति यदुक्तं तद्दूषयति—"कृतिसाध्यता" इति, । तर्हि पराभिमतकार्यसिद्धिरित्यत आह—"न तु तद्" इति, कृतिसाध्यतातिरिक्तप्राधान्यस्याऽनिरूपणादित्यर्थः, तर्हि तन्मात्रमव प्रवर्त्तकमस्त्विति तत्राऽऽह—"न च" इति, । माभूदस्य प्रवर्त्तकत्वं ततः किमित्यत आह—"उन्नीत" इति, । सम्बन्धग्रहणमङ्गीकृत्याह—"संगति" इति, । कार्यपदे कार्यान्वितस्वार्थाभिधायित्वाभावादित्यर्थः ।

मू०—यद्यपि च लोके लिङ्डादीनां कार्य्याभिधायिता समधिगता तथापि कथमपूर्वाभिधानसम्भवो वेद इति विवेचनीयं, ननूक्तमेव स्वर्गकामपदसम्बन्धाद्वेदेऽपूर्वविशेषाभिधानसिद्धिर्, नो खलु साध्यस्वर्गविशिष्टो नियोज्यः क्रियामेव कर्त्तव्यां प्रतिपत्तुमुत्सहते तस्या आशुतरविनाशशीलतया फलानुकूलताऽसम्भवात्, तद्धि तदुत्पादनानुकूलं यस्मिन्सति यदुत्पद्यते नासति, नचामुष्मिकं स्वर्गादि सति कर्मणि भवति, चिरविनष्टे तस्मिंस्तदुत्पत्तेरिति,

कथं तर्हि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'इत्य-

---

टी०—लोके लिङ्डादीनां क्रियाकार्याभिधायित्वमङ्गीकृत्य वेदे तदतिरिक्तकार्याभिधायित्वं न सम्भवतीति दूषयति—" यद्यपि " इति।

उक्तमनुस्मारयति पूर्ववादी—" ननु " इति,। तावता कथमतिरिक्ताभिधानसिद्धिरित्यत आह—" नोखलु " इति,। फलानुकूलत्वासम्भवन्दर्शयितुमनुकूललक्षणं तावद्दर्शयति—" तद्धि " इति । अधुना क्रियायां तदसम्भवमाह—" न च " इति,।

प्रतिबन्दीग्रहणेन परिहरति—" कथं तर्हि " इति, आग्नेयो, अग्निषोमीय, उपांशुयाज, आग्नेय, ऐन्द्रं दधि, ऐन्द्रं पय, इत्याग्नेयादयः षड्यागा, यजेतेत्यत्र प्रकृत्या यागानां प्रत्ययेन तदवच्छिन्नाधिकारनियोगस्य च प्रतीतेः, तस्यैव प्रतीत्यनुबन्धितया विषयभूता-

मू०—आग्नेयादीनामाशुतरविनाशशीलानामसहभुवां चाधिकारापूर्वं प्रति साधनीभावसम्भवः ।

स्यान्मतम्—अधिकारापूर्वोत्पत्तिसमसमयमाग्नेयादीनामसतामपि प्रमाणसिद्धसाधनीभावानामुत्पत्त्यपूर्वावान्तरव्यापाराः कल्प्यन्त इति ।

हन्तैवं स्वर्गादिकमपि प्रत्यवगतसाधनभावायाः क्रियाया अवान्तरव्यापारोऽपूर्वं भवतु ।

---

टी०—नामेव तेषां सिद्ध्यनुबन्धत्वेन साधनत्वमपि स्वीक्रियते, क्षणिकत्वेन यदि यागादिक्रिया न कालान्तरभाविस्वर्गसाधनं तदा नैषामपि नियोगसाधनता स्यात्क्षणिकत्वाविशेषादित्यर्थः, असहभावित्वे हेतुर्—"आशुतरविनाशशीलानाम्" इति ।

अथवाशुतरविनाशशीलानामपि नियतपूर्वमात्रवर्त्तितया युगपदवस्थाने पि हेतुत्वं स्यादत उक्तम्—"असहभुवाम्" इति, ।

लिङ्ङादिप्रत्ययेन कृतिसाध्यतया नियोगः प्रतीयमानः साक्षात्कृतिसाध्यत्वानुपपत्तेः कृतिसाध्याग्नेयादिसाध्यतामात्मनः कल्पयति, ततश्चोपादानेन प्रमाणनाग्नेयादीनामवगते साधनत्वे स्वरसभङ्गुराणां तदनुत्पत्तेरपूर्वाण्यवान्तरव्यापारा कल्प्यन्त इति शङ्कते—"स्यान्मतम्" इति, ।

अस्मन्मतेपि तर्हि प्रकृत्यर्थानुरक्तलिङ्ङादिप्रत्ययैः स्वर्गकामपदसमभिव्याहृतैर्यागक्रियायाः स्वर्गसाधनत्वेऽवगते स्वरसभङ्गुरायास्तदनुपपत्तेरपूर्वाण्यवान्तरव्यापारा इति तुल्य मिति परि हरति—"हन्त" इति, । तथा भावनावाक्यार्थपक्षे समानपदोपादानलक्षणया श्रुत्या यागं भावयेदिति प्रथमतः प्रतीतौ यागस्यापुरुषार्थत्वेन तदनुपपत्तेः पदान्तरोपात्तस्वर्गस्य भाव्यत्वे सति 'यागेन स्वर्गं

मू०—कथमसति व्यापारवत्यवान्तरव्यापार इति चेद्, आग्नेयाद्यवान्तरव्यापाररूपापूर्वेपि समानः पर्यनुयोगः ।

अथानपेक्षागममात्रगतसाधनभावानामाग्नेयादीनामसहभुवामसमानकालान्यप्युत्पत्त्यपूर्वाणि व्यापार इत्यभिधीयेत, तुल्यमिदमन्यत्रापि, अभिनिवेश एवायुष्मतः परिशिष्यते ।

नचैवं न फलसाधनभावः क्रियायाः किन्तु साधनसाधनतैवेति सांप्रतं, फलप्रवृत्ताया एव तस्यास्ता-

---

टी०-भावयेद्' इति वाक्यार्थः सम्पद्यते, तत्रापि क्षणिकस्य तदनुपपत्तेरपूर्वमवान्तरव्यापार इत्यवगन्तव्यम् ।

असत्याधारे कथं तद्व्यापार इति शङ्कते—" कथम् " इति, गुरुमतेपि तुल्यमेतदिति परिहरति—" आग्नेयादि " इति, ।

ननु तज्जन्यस्तज्जन्यजनको व्यापार इति न पुनस्तदाधारस्तेनाग्नेयादीनां प्रमाणसिद्धसाधनीभावेन तदुपपादकानामवान्तरापूर्वाणामसमानकालत्वं न विरुध्यत इति शङ्कते— " अथानपेक्ष " इति, । समानमेतदस्मन्मतेपीति परिहरति—" तुल्यम् " इति, ।

इदमपि प्रौढवादेन, अस्मन्मते यागजन्यापूर्वस्य चेतनाधारतया क्रियाजन्येश्वरप्रसादस्य तन्निष्ठतया वावस्थानमवान्तरव्यापारस्य सम्भवति, न पुनः परमते, तथाऽनङ्गीकाराद्,अपरतन्त्रस्यादृष्टत्वानुपपत्तेरित्यवगन्तव्यम् ।

व्यापारस्य तर्हि साधनत्वमव्यवहितपूर्वभावित्वान्न पुनः क्रियायास्तेन व्यवहितत्वादित्यत आह—" नच " इति, । न व्यापा-

मू०—दर्श्येनापूर्वसाधनत्वाद्, अन्यथा परमापूर्वसाधनाभिमतेष्वाग्नेयादिष्वपि समानः प्रसङ्गः, ।

नच परमापूर्वं प्रत्युत्पत्त्यपूर्वाणामेव साधनत्वं नाग्नेयादीनामिति साम्प्रतं, तेषां दर्शपूर्णमासशब्दानभिधेयत्वात्, ।

नचोत्पत्तिवाक्यान्येव यथास्वमुत्पत्त्यपूर्वाणि प्रत्याग्नेयादीनां करणभावमवगमयितुमीशते येन तेषामेवोत्पत्तिवाक्यावगतानां परमापूर्वसाधनभावोऽधिगम्येत,

---

टी०—रस्य व्यापारिव्यवधायकत्वं स्वाङ्गमव्यवधायकमिति न्यायादित्यर्थ, विपक्षे दोषमाह—" अन्यथा " इति, ।

उत्पत्त्यपूर्वाणामेव परमापूर्वसाधनत्वं नाग्नेयादीनामतो विषमो दृष्टान्त इत्याशङ्क्य किमुत्पत्त्यपूर्वाणां परमापूर्वसाधनत्वं दर्शपूर्णमासवाक्येनावगतं किंवाग्नेयोष्टाकपाल इत्याद्युत्पत्तिवाक्यैरिति विकल्प्याद्ये दोषमाह—" नचपरमापूर्वंप्रति " इति, । दर्शपूर्णमासशब्दस्य कर्मनामधेयत्वाद्यजेतेत्यस्य परमापूर्वाभिधायकत्वेनोत्पत्त्यपूर्वानभिधायकत्वान्न तेषामधिकारापूर्वसाधनतायामेतत्प्रमाणमित्यर्थ, द्वितीये दोषमाह—" नच " इति, । तत्तत्प्रत्ययेन स्वस्वप्रकृत्यर्थावच्छिन्नोत्पत्त्यपूर्वाणामवगमे प्रकृत्यर्थानां प्रत्ययार्थं प्रति करणता प्रतीयत इत्यर्थः, ।

ततः को लाभ इत्यत आह—" येन " इति, । तेषां परमापूर्वसाधकत्वाऽभावादिदमवगम्येत तन्नास्तीत्यन्वयः, कुत इत्यत आह—

मू०—अधिकारवाक्यसंनिधिसमाम्नातानां तदुत्पत्तिवाक्यानामधिकारापूर्वानुवादकताशङ्काकुण्ठितशक्तीनां द्रागित्येवापूर्वावान्तरप्रत्ययाजनकताश्रयणाद्, ।

आग्नेयादीनामेव त्वधिकारापूर्वं प्रत्यधिगतविषयकरणभावानां तदनुपपत्तेस्तत्सिद्ध्यर्थमेवावान्तरव्यापारतयोत्पत्त्यपूर्वाङ्गीकरणात् ।

तस्माद् यथा तत्राग्नेयादीनामुत्पत्त्यपूर्वावान्तरव्यापा-

---

टी०—"अधिकार" इति, । अधिकारवाक्यगतलिङ्ङादिप्रत्ययैः प्रकरणी नियोगः प्रतीयमानः स्वोपसर्जनभूतप्रकरणपठितपदार्थैः प्रतीयते, तथासति प्रयोजनप्रयोजनीभावेनान्विताभिधानमवकल्पते, यदि पुनरुत्पत्तिवाक्यगतलिङ्ङादिप्रत्ययैः प्रथमं स्वतन्त्रं नियोगान्तरमवगम्यते तथासति तेनैव न्यायेन समिदादिवाक्यलिङ्ङादिप्रत्ययैः स्वतन्त्रकार्य्यावगमे प्रधानानां परस्परसङ्गतिभावाभावादन्विताभिधानमेव ग्राहकग्रहणापरपर्यायमपि नावकल्पेता, तः परमापूर्वानुवादशङ्काकुण्ठितशक्तितया लिङ्ङादिप्रत्ययैरुत्पत्त्यपूर्वाणां प्रथमतोऽनवगमादेतेषां न परमापूर्वसाधनतावगम· सम्भवेदिति भावः, ।

कथं तर्हि प्रत्ययजनकत्वमाश्रीयत इति तत्राह—" आग्नेयादीनाम् " इति 'अधिगतविषयकरणभावानाम्' इति–प्रतीत्यनुबन्धितयावगतो विषयभाव·, सिद्ध्यनुबन्धितयावगतः करणभावो येषां ते तथा तेषामिति यावत्, तानि चोत्पत्त्यपूर्वाणि स्वप्रत्ययैः पश्चादभिधीयन्त इति शेषः, ।

सिद्धं दृष्टान्तेन दार्ष्टान्तिकस्य साम्यमुपसंहरति—" तस्माद् " इति, ।

मू०—राणां परमापूर्वसाधनभावस्तथास्मन्मतेप्यपूर्वावा-न्तरव्यापाराया एव क्रियायाः स्वर्गानुकूलतेति।

साध्यस्वर्गविशिष्टोपि शक्त एव क्रियाकर्त्तव्यता-मवबोद्धुम्,।

नच यो यत्कामः स तदुपायमेव कार्यमधिगच्छति नानुपायमित्यप्यैकान्तिकं, ग्रामादिकामानामपि भोज-नादावतत्साधने कार्यधीदर्शनाद्, यदा हि ग्रामादिका-मेष्वनेकेषु द्वारप्रत्यासन्नेषु कश्चिद् भोजयिता विज्ञातेनैव विशेषणेन नियोज्यं विशिनष्ट्यन्येषां निवृत्तये ग्राम-काम भुङ्क्ष्वेति न तत्र भोजनं ग्रामसाधनम्,

अथ न तत्र ग्रामकामनानिबन्धना प्रवृत्तिः किन्तु भोजनकामनानिमित्तेति, सत्यम्—इहापि न स्वर्गकाम-नानिमित्ता प्रवृत्तिः किन्तु नियोगनिमित्तेति।

---

टी०—तथापि प्रस्तुते किमायातमित्यत आह—" साध्य " इति। तथा च न क्रियानिरिक्तकार्यसिद्धिरिति भावः,।

'तदेव शक्नुयाद्बोद्धु कार्यं यत् काम्यसाधनम्' इति यदुक्तं तद्वि-घटयति—" नच " इति,। कस्मादित्यत आह—" ग्राम " इति, तदेव स्पष्टयति—" यदाहि " इति,।

वैषम्यमाशङ्क्य साम्यापादनेन परिहरति—" अथ " इति,

मू०— यदि मन्येत काम्येषु कामनिबन्धना प्रवृत्तिरिति, तदसत्,परस्पराश्रयापातात्, कामनिमित्तप्रवृत्तिविषयत्वात्तदुपायतासिद्धिः, तदुपायत्वे च सिद्धे तन्निबन्धना तत्र प्रवृत्तिरिति, ।

यत्पुनरपूर्वस्य प्राधान्ये गर्भदासस्वामिनिदर्शनं तदपि न शोभते, द्वौ हि तत्र प्रयत्नौ चेतनसमवायिनौ, तत्र स्वामिनः प्रयत्नः स्वार्थमुद्दिश्य गर्भदासोपकाराय प्रवर्तते, गर्भदासोऽपि स्वाभिलषितसिद्धय एव स्वाम्यर्थे प्रवर्त्तते, गर्भदासस्थानीयश्चायं नियोज्यः कामी नि-

---

टी०-भवतु नित्यनैमित्तिकयोर्नियोगेनापि प्रवृत्तिःकाम्ये तु नैवमिति शङ्कते— " यदिमन्येत " इति, । तदेव दर्शयति—" काम-निमित्ता " इति, नियोगस्य कामनिमित्तप्रवृत्तिविषयत्वात्स्वर्गोपायतासिद्धिस्तदुपायत्वेन च नियोगस्य कामनिमित्तप्रवृत्तिविषयत्वमिति परस्पराश्रयः, नचेष्टसाधनत्वपक्षे तुल्योऽयं दोष इति वाच्यं कामनानिमित्तप्रवृत्तिविषयतया भावार्थस्येष्टसाधनत्वानङ्गीकाराद्, लिङ्ङादिप्रत्ययैरेव तस्येष्टसाधनत्वेऽवगते तत्कामस्य तत्र प्रवृत्त्यभ्युपगमाद्, नचैतत्परमतेऽपि समान, लिङ्ङादिप्रत्ययैरपूर्वस्य स्वर्गसाधनत्वप्रतीतेरनभ्युपगमादिति भावः, ।

गर्भदासस्वामिनिदर्शनं विघटयति—" यत्पुनर् " इति, तयोर्विषयं विभजते—" तत्र स्वामिन " इति, ।

ततः किमित्यत आह—" गर्भदासस्थानीय " इति, ।

मू०—योगं कृत्या व्याप्नुयात्, तथा च काम्योद्देशेनास्य कृतिः प्रवृत्ता गर्भदासस्येव स्वार्थोद्देशेन स्वाम्यर्थमिव नियोगं व्याप्नुयान्न पुनः प्राधान्येन, नच स्वामीव चेतनान्तरमत्रास्ति यत्कृतिं, प्रति प्राधान्यं नियोगस्य भवेद्, ।

अतिमन्दं चैतत् स्वार्थमेव स्वर्गमाक्षिपति नियोग इति, नो खलु तादर्थ्यसम्भवः, स्वर्गस्य स्वभावविरोधेन तदनुपपत्तेः, चिकीर्षितार्थेन हि चेतनव्यापारेण तदितरस्य तादर्थ्येन व्याप्यता, तथाच चिकीर्षितस्वर्गार्थः स्वर्गकामिव्यापारश्चिकीर्षागोचरीभावविरहिणं नियोगमेव तादर्थ्येन व्यप्नोति कुतो नियोगार्थता स्वर्गस्य भवेद्,

---

टी०—कृत्या=प्रयत्नेन ।

तथापि किमित्यत आह—" तथाच " इति, ।

काम्योद्देशेन प्रवृत्ता कृतिर्नियोगं व्याप्नुयादित्यन्वयः, तत्र निदर्शनमाह—" गर्भ " इति, । यथा गर्भदासस्य स्वार्थोद्देशेन प्रवृत्ता कृतिः स्वाम्यर्थं सैव प्राप्नोति, तथा स्वर्गमधिकृत्य प्रवृत्ता कृतिः·तदर्थतया नियोगं प्राप्नुयादिति स्वर्गस्यैव प्रधानता न नियोगस्येत्यर्थः, ।

दृष्टान्तश्च दार्ष्टान्तिकाननुकूल इत्याह—" नच " इति, ।

पक्ष एवायमनुपपन्न इत्याह—" अतिमन्दम् " इति, । स्वभावविरोधं दर्शयितुं लोकसिद्धन्यायमाह—" चिकीर्षित " इति, ततः किमित्यत आह—" कुत " इति, । अस्तु तर्हि नियोगस्यैव

मू०—नच नियोग एव चिकीर्षागोचर इति युक्तम्, असुखस्याऽसुखसाधनस्य च तदभावासम्भवाद्, अतः स्वभाववैपरीत्यासभवान्न नियोगार्थता स्वर्गस्य सम्भविनी।

न खलु प्रचण्डभास्करकराभिसन्तप्तशरीरस्योपकर्तुमुपधीयमानो दहनस्तदनुकूलतामाचरतीत्यलं प्रसङ्गेन।

किंचासत्यामप्याशुतरविनाशशीलायाः क्रियायाः फलानुकूलताऽसम्भवेन साध्यस्वर्गविशिष्टनियोज्यान्वययोग्यतायां कथमनवसितसङ्गतिको लिङ्ङादिरपूर्वमेवबोधयेद्, ।

---

टी०—प्राधान्य चिकीर्षागोचरत्वेनेत्यत आह—"नच" इति, । नच नियोगस्यापि स्वर्गसाधनत्वेन चिकीर्षागोचरत्वं तथासति प्राधान्यभङ्गापातात् । नित्यनैमित्तिकनियोगे चिकीर्षाऽभावप्रसङ्गाच्चेति भावः, ।

स्वभावविरोधेन तादर्थ्याभावे निदर्शनमाह-"नखलु" इति,

क्षणिकस्यापि स्वव्यापारद्वारेण स्वर्गसाधनत्वाद् भावार्थस्य नियोज्यान्वययोग्यतास्तीत्युक्तम्, अधुना माभूदन्वययोग्यता तथापि कथमगृहीतसंबन्धस्य लिङ्ङादेर्नियोगाभिधायित्वमित्याह—"किं च" इति, नियोज्यान्वयाभावे फलानुकूलत्वासम्भवो हेतुस्तत्रहेतुर्-आशुतरविनाशशीलाया इति, ।

मू०—नन्ववसितैव सङ्गतिः कार्यमात्रे, सत्यं, न तन्मात्रमपूर्वपदार्थः, तन्मात्रत्वे च तस्य मानान्तरगोचरत्वाद्,अतो मानान्तरापूर्वमपूर्वमभिधीयत इति प्रलापमात्रमापद्येत, न च मानान्तरागोचरे सङ्गत्यधिगतिः, सम्बन्धिग्रहणपूर्वकत्वात्तस्याः, ।

नचान्तरेण प्रमाणं सम्बन्धिपरिच्छेदः, न च शब्दादेवाधिगम्य सम्बन्धिनं सम्बन्धावधारणमिति साम्प्रतम्, इतरेतराश्रयापत्तेः, ।

प्रतीते हि शब्देन सम्बन्धिनि सम्बन्धाधिगतिः, सत्यां च सम्बन्धाधिगतौ शब्देन तस्य प्रतीत्युपपत्तिरिति,

स्वर्गकामपदसमभिव्यवहारानुपपत्त्यैव सम्बन्धिप्र-

---

टी०-अनवसितासङ्गतिकत्वमसिद्धमिति शङ्कते—" ननु " इति, यत्रसङ्गतिस्तदेव किमपूर्वमुत तदतिरिक्तमिति विकल्प्याद्यं दूषयति— " सत्यम् " इति, । तथैव किं न स्यादित्यत आह— " तन्मात्रत्वेच " इति,। द्वितीये दोषमाह—" नच " इति,

अस्तु तर्हि सम्बन्धिग्रहणमिति तत्राह—" नचान्तरेण " इति,। अस्तु तर्हि लिङ्ङादिशब्दादेव नियोगं प्रतिपद्य तत्र सम्बन्धग्रहणमिति तत्राह—" नच " इति, । तदेव स्पष्टयति— " प्रतीते हि " इति,।

प्रकारान्तरेण सम्बन्धग्रहणमाशङ्कते—" स्वर्ग " इति,। स्व-

मू०--तीतिरिति चेत्, प्राप्तस्तर्हि प्रमाणान्तरगोचरीभावः।

मैवमानुपपत्तिकविज्ञानस्याप्रमाणत्वादिति चेत् तत्किमिदानींस्मरणमेव तद्, नो खलु स्मरणग्रहणातिरेकिं विज्ञानमस्ति भवताम्, ।

अद्धा स्मरणमेवैतत्तर्करूपत्वात्, तर्कं हि स्मरणमाद्रियामहे, नच पूर्वानुभूतसंस्कारयोनिताऽभावादस्मृतिता, सापेक्षतामात्रस्य स्मृतिलक्षणत्वाद्, अस्ति चात्रापि भाविन्यपूर्वगोचरे मानेऽपेक्षणमिति,

---

टी०-र्गकामपदेनाभिहितनियोज्यस्य क्षणिकक्रियायां कार्यत्वबोधानुपपत्तेरतिरिक्तं कार्यमवगम्यते तत्र लिङ्ङादेस्सङ्गतिग्रह इति भाव । परिहरति—" प्राप्त " इति, । अर्थापत्तिगोचरभावादिति भावः ।

मानान्तरगोचरत्वपरिहारमाशङ्कते,—" मैवम् " इति, । ग्रहणस्मरणभेदेन द्वैविध्यं वदतः प्रकृतविज्ञानस्य प्रमाणत्वाभावे स्मरणरूपत्वमेव स्यात्, तथाचाऽननुभूते स्मरणाभावात्प्रमाणान्तरगोचरत्वमेव स्यादिति परिहरति—" तत्किमिदानीम् " इति । तथात्वे किं नियामकमित्यत आह— " नोखलु " इति,

स्मरणत्वेऽप्यस्य न प्रमाणान्तरत्वमिति शङ्कते—"अद्धा" इति, स्मरणलक्षणाभावादस्मरणत्वमित्याशङ्क्य परिहरति पूर्ववादी— " नच " इति, । सापेक्षतैव कथमिति तत्राह—" अस्तिच "

मू०—सोयं वृश्चिकभिया पलायमानो विषमाशीविषमुखे पतितो यदुतायमुत्तरान्वेषणकातरतया शालिकामपि नालोचयति, ।

सा खल्वेवं 'प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः, पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते' इति, नच भाविन्यपेक्षापि निरूपणपद्धति मध्यास्ते ।

नच वाच्यमस्तु तर्हि लिङ्गादेः सामर्थ्यातिशयो वै-

---

टी०—इति, । तर्केण स्वानुग्राह्यशब्दप्रमाणस्यैवापेक्षणान्न मानान्तरगोचरत्वमिति भाव, ।

एवं परिहरतोऽपसिद्धान्तः स्यादिति सोपहासमाह सिद्धान्ती—" सोयम् " इति, ।

तामेव दर्शयति—" साखलु " इति, । अनुभूतिलक्षणमाह—"सास्मृतेरन्या" इति, स्मृतित्वानधिकरणमिति यावत् । अन्यथा स्मृतावतिव्याप्ति, स्मृतेरपि स्मृत्यन्तरादन्यत्वात्, ।

स्मृतिलक्षणमाह—" स्मृतिर " इति, । प्रत्यभिज्ञानव्यवच्छेदार्थं मात्रग्रहणं, वेगविषयप्रत्यक्षव्यवच्छेदाय 'विज्ञानसंस्कारे-ति,पूर्वपद स्पष्टार्थम, यदुक्तं'भाविन्यपूर्वगोचरं मानेऽपेक्षणमिति तत्राह—" नच " इति, । कार्यस्य कारणापेक्षा भाविनश्च नियतपूर्वत्वाभावेनाकारणत्वान्न तत्रापेक्षासम्भव इत्यर्थ., ।

स्वभावविशेषादगृहीतसङ्गतिको लिङ्गादिरपूर्वमवगमयिष्यतीत्यत आह—" नचवाच्यम् " इति, । कुतो न वाच्यमित्यत

मू०—दिकस्य येनागृहीतसम्बन्धोपि जनयत्ययं विलक्षण-विषयमवबोधमिति, नोखल्वसति वलद्बाधकोपनिपात औत्सर्गिकं शब्दमात्रवर्त्ति सम्बन्धापेक्षाबाधनं सांप्रतं, ।

वैदिकाद्वाक्यादपूर्वार्थाधिगतेरित्थं कल्प्यते इति चेद्, न, तस्या एवासम्प्रतिपन्नत्वात्, किं बहुना मानान्तर-गोचरतायामपूर्वताहानिस्तद्गोचरताभावे तु न तत्र पद-सङ्गतिः, नचापदार्थस्य प्राधान्येन गुणभावेन वा वा-क्यार्थेन्वयसम्भव इति, ।

यववराहादिपदद्दृष्टान्ताभिधानमप्यसुन्दरमेव, युक्तो

---

टी०—आह—"नोखलु" इति, । उत्सर्गन्यायसिद्धस्य बलवद्बाध-काभावेपि परित्यक्तुमयुक्तत्वान्मैवमित्यर्थः, ।

बाधकमाशङ्कते पूर्ववादी—"वैदिकाद्" इति, । परिहर-ति—"नतस्या एव" इति, । न्यायबाधे सति वैदिकशब्दादपू-र्वाधिगतिः, सत्यां च तस्यां तदपबाध इति परस्पराश्रयइत्यर्थः, ।

मानान्तरगोचरत्वे तदभावे च नाऽपूर्वसिद्धिरिति संक्षिप्याह—"किंबहुना" इति, । सङ्गतिग्रहणाभावे माभूत्पदार्थो वाक्या-र्थस्तु किं न स्यादित्यत आह—"नच" इति, । सर्वलक्षणा-तिरिक्तवाक्यार्थे इति शेषः, विषंभुङ्क्ष्वेत्यादावपदार्थस्यैव वाक्या-र्थत्वात्, ।

यववराहादिदृष्टान्तं विघटयति—"यववराह" इति, । नच

मू०—हि लोकसिद्धे दीर्घशूकादौ यवादिपदानां वाक्यशेषादर्थनिर्णयः, प्रकृते तु स्थले शक्तिगोचरतयाभिमतस्यापूर्वस्य मानान्तरतोनधिगमान्न लिङ्ङादेस्तदर्थतानिर्णयसम्भवः ।

तदधिगमे वा मानान्तरतस्तत्रानुवादक एव वेद इत्यापद्येत, ।

तस्मान्न स्वर्गकामादिसम्बन्धान्मानान्तरागोचरापूर्वाभिधानसिद्धिर्लिङ्ङादीनामिति, ।

---

टी०—यूपाऽऽहवनीयादिशब्दप्रतिवन्दीग्रहः, यूपन्तक्षति' आहवनीये जुहोति' इत्यवगततक्षणक्रियासंस्कार्यत्वहोमाधिकरणतानुपपत्त्यात्र सम्बन्धग्रहोपपत्तेः, ।

अस्तु तर्हि मानान्तरतोऽधिगतिरिति तत्राह—"तदधिगम" इति, । नच तर्हि ब्रह्मणः प्रमाणान्तरसिद्धौ वेदान्तानामनुवादकत्वमसति प्रसिद्धत्वे च सम्बन्धाग्रहणादागमप्रमाणकत्वं ब्रह्मणो न स्यादिति वाच्यम्, आत्मत्वेन प्रसिद्धस्य ब्रह्मणो निर्मृष्टनिखिलप्रपञ्चतया प्रतिपाद्यत्वेन वेदान्तवाक्यानामपि तत्र प्रमाणत्वात्, तथा-चाहुरत्रभवन्तो मण्डनमिश्राः 'सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते, प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते, प्रविलीनप्रपञ्चेन तद्रूपेण नगोचर, मानान्तरस्येति मतमाम्नायैकनिवन्धनम्' इति, नच कार्यत्वेन प्रसिद्धरूपस्य क्रियातिरिक्तरूपता वाक्यप्रतिपाद्येति सांप्रतं, क्रियातिरिक्तकार्यस्यैव लिङ्ङादिप्रत्ययमात्रगोचरत्वाभ्युपगमाद् 'अतो मानान्तरापूर्वमपूर्वमिति गीयत' इति वचनादिति भावः, ।

मू०—तत् सिद्धमेतद्विवादाध्यासिता लिङ्डादयो न मानान्तरापूर्वकार्याभिधायिनः तत्रागृहीतसङ्गतित्वाद् यदुक्तसाधनं तदुक्तसाध्यं यथोभयवाद्यविवादास्पदपदान्तरं तथा चेमे तस्मादुक्तसाध्या इति, ।

न चायमसिद्धो हेतुः, सङ्गतिग्रहणासम्भवस्यानन्तरमेव निपुणतरं निरूपणादिति, ।

यदपि जरतां प्राभाकराणां मतं लोके लिङ्डादीनां प्रवृत्त्यभावविरोधे सम्बन्धग्रहणाद् निरधिष्ठानस्य तस्यासम्भवाद् अपौरुषेये वेदे पुरुषाश्रयाणां प्रेषणाध्येषणा-

---

टी०—उक्तमर्थं प्रयोगारूढंकरोति—" तत्सिद्धम् " इति । विवादाध्यासिता इति=वैदिका विधायकत्वेन सम्मता इति यावत्, अत्रापि चिरन्तनरीत्या परप्रसिद्धिमात्रेण साध्यविशेषप्रसिद्धिरप्यूहनीया, मानान्तरापूर्वकार्यस्य स्वतोऽप्रसिद्धत्वात्, ।

अथ वा लिङ्डादिशब्द एतत्क्रियातिरिक्तकार्याभिधायकत्वानधिकरणमतदन्यलिङ्शब्दान्यत्वाद्घटादिशब्दवदिति ।

भाट्टैकदेशिप्राभाकरमतमुत्थापयति—" यदपि " इति, । प्रवृत्त्यभावविरोधे=प्रवर्त्तनासामान्ये, तथापि नियोगसिद्धिः कथमिति तत्राह—" निरधिष्ठानस्य " इति, । सन्तु प्रैषादय एव तदाश्रया इत्यत आह—" अपौरुषेये " इति, । न केवलमाश्रयाभावेनापौरुषेये वेदे तेषामसम्भवो विरोधादपीत्याह—

मू०—दीनां चासम्भवात् विरोधाच्चापर्यवसानेनान्य एवाश्रयः कल्प्यते सच नियोगः, ।

नन्वाज्ञायाच्ञादिषु लोके लिङ्ङादीनां सम्बन्धग्रहणाद्, 'विधिनिमन्त्रणामन्त्रणाधीष्ट' इत्यादिस्मरणाच्च, आज्ञादय एव लिङ्वाच्या न प्रवृत्यभावविरोधः, अतः कथं लिङ्ङादिप्रतिपादितप्रवृत्त्यभावविरोधपर्यवसानेन वेदे प्रवर्त्तकान्तरपरिकल्पना, ।

उच्यते विशेषेणाज्ञादीनां व्यभिचारात्, प्रवृत्त्यभावविरोधस्य सर्वत्रानुवृत्तत्वाद्, एकस्मिंश्च वाच्ये सम्भवत्यनेकाभिधानशक्तिकल्पनाया अयुक्तत्वात् प्र-

---

टी०—"विरोधाच्च" इति, । अपर्यवसानेन—निर्विशेषसामान्यानुपपत्त्या ।

प्रवर्त्तनासामान्ये लिङ्ङादेः सङ्गतिग्रहणस्य सिद्धत्वादपर्यवसानेन न नियोगसिद्धिरिति शङ्कते—"ननु" इति, । न केवल तत्र सङ्गतिग्रहणात् पाणिनिस्मरणा दपीत्याह—"विधि" इति, । आनन्त्यकालव्यभिचाराभ्यामनेकेषु शब्दशक्तिकल्पनस्यायोगादेकस्मिन्नेव प्रवर्त्तनासामान्ये तदभ्युपगन्तव्यमित्यभिप्रेत्य परिहरति—"उच्यत" इति, । भवत्वनुवृत्तिस्तथापि कथं तत्रैव शक्तिकल्पनमिति तत्राह—"एकस्मिंश्च" इति । नच सूत्रविरोधः, विधिःप्रेरणमितिसूत्रं व्याचक्षाणेन प्रेरणस्य प्रवर्त्तनापर्यायस्याभ्युपगमाद्, अनेकशक्तिकल्पनाभयेन चास्यैव नि-

मू०—वृत्त्यभावविरोधः शब्दार्थः, तदुक्तं 'प्रवर्त्तकत्वं तु शब्दार्थः सर्वत्राव्यभिचारात्' ।

नचास्य शब्दस्तद्व्यापारोप्यधिष्ठानं, तयोरकार्यपरतन्त्रत्वात्, कार्यपरतन्त्रस्य च लोके विरोधाधिष्ठानतयाक्लृप्तत्वाद्, लिङ्ङादेश्च न कार्यपारतन्त्र्यं, तदप्रतीतावपि प्रतीतेः, यस्य हि परापेक्षं स्वरूपं न तत्पराऽप्रतीतौ प्रतीयते यथा दीर्घत्वादि प्रतीयन्ते च लिङ्ङादयः कार्य्याऽप्रतीतावपि तस्मान्न तत्तन्त्रा इति न प्रवृत्त्यभावविरोधभाजः ।

एवं लिङ्ङादिभ्यः प्रतिपन्नः प्रवृत्त्यभावविरोधः

---

टी०—मन्त्रणादिष्वनुवर्त्तमानस्य प्रवर्त्तनहेतुताया वक्तव्यत्वादिति भावः।

शब्दतद्व्यापारावेव प्रवर्त्तनाश्रयौ किं न स्यातामित्यत आह—"नच" इति। तथापि तदाश्रयता किं न स्यादित्यत आह—"कार्ये" इति,। तर्हि पारतन्त्र्यमपि स्यादित्यत आह—"लिङ्ङादेर्" इति,। अस्तु तदप्रतीतावपि प्रतीतिस्तथापि पारतन्त्र्याभावः कथमित्याशङ्क्य तथानियमादित्याह—"यस्यहि" इति,। दीर्घत्वं-ह्रस्वत्वाद्यप्रतीतावितिशेषः। ततः किमित्यत आह—"एवम्" इति,। लौकिकैतादृशप्रवर्त्तकस्य स्वप्रवृत्तावनुपल-

मू०—कश्चित् प्रवर्त्तकः, न चैवं सत्यलौकिकः प्रवर्त्तककल्पनाप्रसङ्गः, लोकेपि रागादौ प्रवृत्त्यभावविरोधस्य प्रवर्त्तकत्वप्रयोजकत्वेन क्लृप्तत्वाद्, रागादेरपि हि प्रवृत्त्यभावविरोधेनैव प्रवर्त्तकत्वान्न स्वरूपेण केवलस्य व्यभिचारात्, सत्स्वपि तेषु विषयस्यान्यथासिद्धौ विरोधाभावे प्रवृत्त्यदर्शनात् ।

स च प्रवृत्त्यभावविरोधितया ज्ञातः प्रवर्त्तको न सत्तया, मृतेपि पितरि पित्राज्ञाया अनुसन्धीयमानाया प्रवर्त्तकत्वदर्शनाद्, यातु सत्यपि क्वचित्प्रवर्त्तकरा-

---

टी०—स्तम्भेनालौकिककल्पनमित्याशङ्क्याह—"नचैवम्" इति, । ननु रागादि· स्वरूपेण प्रवर्त्तको न पुनरुदीरितधर्मत्वेनेत्यत आह—"रागादेर्" इति, । स्वरूपणैव किं न स्यादित्यत आह—"केवलस्य" इति, । व्यभिचारमेव दर्शयति—"सत्सु" इति, । वृष्टौ वृष्टिसाधने च सत्यपि रागे यजमानसमापितकारीर्यामवग्रहविशोषितसस्यानामपि कृषीवलानां प्रवृत्त्यदर्शनादिति भाव, ।

तथापि तस्य सत्तामात्रेण प्रवर्त्तकत्वान्न शब्दप्रतिपाद्यत्वमित्यत आह—"सच" इति, । ननु तथाविधस्यापि क्वचित्प्रवर्त्तकत्वव्यभिचार इत्यत आह—"यातु" इति, । लौकिकप्रवर्त्तनासा-

मू०—गाद्यनुस्मरणेप्यप्रवृत्तिः सा द्वेषालस्यादिप्रतिबन्धकवशादुपपन्नेति नात्र दुर्घटं किंचित्, ।

तस्मान्नियोग एव प्रवर्त्तकः, स च कालत्रयविविक्तः शब्दैकसमधिगम्यः कार्यरूपोर्थविशेष इति ।

तदपि न विचार्यमाणं चतुरचेतसां चेतसि चातुरीं धत्ते, तथाहि—प्रवृत्त्यभावविरोधापरपर्यायं प्रवर्त्तनामात्रं प्रमाणान्तरसिद्धं सङ्गतिग्रहणसमय इति तत्रानुवादका लिङादयः, यस्तु विशेषः स लौकिकविशेषान्तरासम्भवाद्वेदे परिशेषानुमानगोचरः, ।

' प्रसक्तप्रतिषेधे सत्यन्यत्राप्रसङ्गाच्छिष्यमाणे सं-

---

टी०—मान्याश्रयाद्विशेषमाह—"सच" इति, । ननु कालोपि तथेत्यत आह—" कार्यरूप " इति, । लोकेपि कार्यरूपोर्थस्तथेत्यत आह—" शब्दैकसमधिगम्य " इति, ।

प्रवर्त्तनासामान्यस्य सङ्गत्यधिगतिसमये ऽवगतत्वाद् विशेषस्य परिशेषानुमानगोचरत्वान्न शब्दैकगोचरत्वसिद्धिरिति दूषयति—" तदपि " इति, ।

परिशेषलक्षण परं न्यायभाष्यं दर्शयति—" प्रसक्त " इति,।

शब्दः समवायिकारणजन्यो गुणत्वाद्रूपवदित्यत्र सामान्येन समवायिकारणेवगते शब्दाश्रयत्वेन प्रसक्तानां पृथिव्यादीनां दिक्कालात्ममनसां च तदाश्रयत्वप्रतिषेधेन्यत्र गुणादावप्रसङ्गाच्छिष्यमाण न भसिय: प्रत्यय. शब्दोष्टद्रव्यव्यतिरिक्तद्रव्याश्रितोष्टद्रव्यागुणत्वे सति

मू०—प्रत्ययः परिशेष ’ इति च तद्विदः।

तथा च कथं शब्दैकगोचरो नियोगः स्याद्, नच निदानतो निरूपणे परिशेषोऽपि, श्रेयः साधनत्वस्य लौकिकस्य कर्त्तव्यतैकार्थसमवायिनः स्तनपानादिस्वप्रवृत्तिसन्ततावत्रसितप्रवृत्तिहेतुभावस्य सम्भवादलौकिकविशेषकल्पनानुपपत्तेः।

उपपादितं च तादृश्याः श्रेयःसाधनतायाः प्रवृत्तिहेतुत्वं, तथा च न परिशेषोपपत्तिः।

तदुक्तं ‘न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि’ इति, नचान्तरेण परिशेषं साक्षाल्लिङ्गादिरेवामुं प्रतिपा-

---

टी०—गुणत्वाद्रूपवदिति यत्केवलव्यतिरेक्यनुमानं स परिशेष इत्यर्थः। ततः किमित्यत आह—“ तथा च ” इति। अङ्गीकृत्याभिहितः परिशेषोपि नास्तीत्याह—“ न च ” इति। तस्य कथं प्रवृत्तिहेतुत्वमित्यत आह—“ स्तनपानादि ” इति,।

ननु तत्रापि वादिविप्रतिपत्तिसम्भवात्कथं निर्णय इत्यत आह—“ उपपादितम् ” इति।

उक्तेर्थे ब्रह्मसिद्धिकारवचनमुदाहरति—“ तदुक्तम् ” इति। ‘प्रवृत्तिहेतुमात्रं च शब्दार्थः स्यादलोकिक’ इति पूर्वार्द्धः, तेनालौकिको न स कल्पयितुं शक्य इत्यन्वयः। तत्र हेतुमाह—“ तत्सिद्धेर्लौकिकादपि ” इति,। तस्या=प्रवृत्तेः लौकिकादपि श्रेयः साधनत्वात्सिद्धेरित्यर्थः। माभूत् परिशेषः साक्षाल्लिङ्गादिरेवापूर्वं

मू०—दयेत्, स खल्वत्ता नवसितसङ्गतिः, सर्वत्र हि परिच्छिद्य प्रमाणान्तरेण वाच्यवाचकयोः स्वरूपं सङ्गतिरध्यवसीयते,

नच नियोगस्य प्रमाणान्तरपरिच्छेद्यता, शब्दैकगोचरताश्रयणात्, नच लिङ्ङादिभ्यः परिच्छिद्य नियोगं तत्र तेषां सङ्गतिग्रहणं, परस्पराश्रयप्रसङ्गादित्युक्तं,

नच लिङ्ङादेरयं महिमा यदयमगृहीतसङ्गतिरपि जनयत्यलौकिकार्थगोचरमत्रबोधं, सम्बन्धसापेक्षतालक्षणपदधर्मव्युत्क्रमप्रसंगात्, तन्निरपेक्षतालक्षणवाक्यधर्मा-

---

टी०-बोधयिष्यतीत्यत आह—" न च " इति, कुत इत्यत आह—" स खलु " इति, तदेव कथमित्यत आह—"सर्वत्र हि" इति।

सोपि तर्हि प्रमाणान्तरगम्यः स्यादित्यत आह—" नच " इति। तर्हि लिङ्ङादिभिरेव नियोगे प्रतिपन्ने तत्र सङ्गतिरित्यत आह—" नच लिङ्ङादिभ्य " इति। उक्तं हि पूर्ववादे प्रतीते हि सम्बन्धिनि सम्बन्धाधिगतिरित्यत्र।

स्वभावविशेषादगृहीतसङ्गतिर्लिङ्ङादिरेवैनमवगमयिष्यतीत्यत आह—"नचलिङ्ङादेर्" इति। कस्मादित्यत आह–"सम्बन्ध" इति। दूषणान्तरमाह—" तन्निरपेक्षता " इति,।

सम्बन्धग्रहणनिरपेक्षे कथंवाक्यधर्म इत्यत आह—"वाक्यधर्मो-

मू०—पत्तेश्च, वाक्यधर्मोह्ययमनवसितसङ्गतेरपि स्वार्थावसायहेतुता नाम, प्रतिवाक्यं वाक्यार्थानामानन्त्येन वाक्यानां संगतिग्रहणायोगाद्, अतएव समीहितसाधनताविधिपक्षे वेदस्य प्रतिपदं पदार्थेष्वनुवादकस्याप्यलौकिकवाक्यार्थगोचरप्रमितिसाधनता ।

नच नियोगोऽपि वाक्यप्रमेय एव येनायमन्तरेणापि सङ्गतिग्रहणं मीयेत, पदार्थमात्रसंसर्गो हि वाक्यार्थः,

---

टी०—सम्बन्ध(१)ग्रहणनिरपेक्षता कथं वाक्यधर्म इत्यत आह—"वाक्यधर्मो ह्ययम्" इति, । तत्रापि सम्बन्धग्रहणं किं न स्यादित्यत आह—"प्रतिवाक्यम्" इति ।

नन्विष्टसाधनस्य प्रमाणान्तरगोचरत्वे तत्रानुवादकत्वात्, तदगोचरत्वे च सम्बन्धग्रहणायोगाद्भवन्मतेपि वेदस्य प्रामाण्यं न स्यादित्यत आह—"अतएव" इति, । यत एव वाक्यार्थे वाक्यस्य सम्बन्धग्रहणानपेक्षा अतएवेति यावत्, ।

इष्टसाधनमात्रेनुवादकानामपि वैदिकपदानां यागादिपदार्थान्तरसंसृष्टमिष्टसाधनत्वमनवगतं बोधयतां प्रमाणता न व्याहन्यते, नच तत्र सम्बन्धग्रहणापेक्षा, वाक्यस्य वाक्यार्थे तदनपेक्षत्वादितिभावः ।

नियोगोपि तर्हि वाक्यगम्य इत्यत आह—"नच" इति । वाक्यार्थत्वाभावं दर्शयितु वाक्यार्थस्वरूपमाह—"पदार्थमात्र"

---

(१) अचरद्वयविराङ्कितैतत्पूर्वं पङ्क्तिर्द्वेया, ।

मू०—पदार्था एव वा संसृष्टा वाक्यार्थ इति, नच नियोगः पदार्थसंसर्गः, लिङ्ङादि पदमात्रार्थताभ्युपगमाद्, नचात्र मानान्तरागोचरे लिङ्ङादिपदसङ्गतिरपि संज्ञातेति नायं पदार्थोऽपि, नाप्यत एव पदान्तरार्थसंसृष्टतया वाक्यार्थ इति, न मानान्तरगोचरो नापि वेदगोचर इति हा हतोऽयं तपस्वी नियोगात्मा ।

यदि कथं चित्पदधर्मव्युत्क्रमपरिहाराय सङ्गतिरास्थीयेत प्राप्ता मानान्तरगोचरता, तदाहुरत्रभवन्तो मण्डनमिश्राः—'पदं स्वधर्म व्युत्क्रामेदन्यासिद्धार्थतान्यथा' इति ।

---

टी०—इति, । मात्रग्रहणेनान्विताभिधानं व्यावर्त्तयति, अथवा पदार्थविशेषसंसर्गलक्षणेऽभिहिते विशेषसंसर्गस्य विशेषान्तरसंसर्गेननुवृत्तेरव्यापिलक्षणं स्यादतउक्तं 'मात्र'इति ।

संसर्गत्वं प्रथमतो निराकरोति—" नच " इति, । अस्तु तर्हि पदार्थस्तथाच पदार्थान्तरसंसृष्टतया वाक्यार्थरूपता भविष्यतीत्यत आह—" नचात्र " इति, । फलितमाह—" नमानान्तर " इति, ।

तर्हि नियोगे सम्बन्धग्रहणं तथा च न पदधर्मव्युत्क्रम इत्यत आह—" यदि " 'अव्युत्पन्नप्रवृत्तिः स्यात्सम्बन्धग्रहनिह्नवे' इति पूर्वार्द्धः, तेन सम्बन्धज्ञाननिह्नवे पदं स्वधर्ममुत्क्रामेदित्यन्वयः, अन्यथा=सम्बन्धज्ञानस्वीकारे, अन्यासिद्धार्थता=प्रमाणान्तरगोचरता, सम्बन्धिग्रहणपूर्वकत्वात्सम्बन्धग्रहणस्येत्यर्थः, ।

मू०—नच प्रवर्त्तनामात्रे समवसितसङ्गतिरेव लिङ्ङादिरनाकलितविशेषायास्तस्या बोद्धुमशक्यत्वात् तां बोधयन्नेव तत्रापर्यवसितप्रमाणव्यापारः तदाधारमपि विशेषं नियोगमवच्छिन्नत्यपर्यवसानवृत्त्येति साम्प्रतं, विकल्पासहत्वात्,

स हि प्रवर्त्तनामात्रबोधव्यापृतः प्रथमं तदपर्यवसानादनन्तरं नियोगं गोचरयेत् किं वा ऽपर्य्यायमेवान्तर्भावितनियोगां प्रवर्त्तनां, न तावदाद्यः कल्पः, पदबुद्ध्योर्विरम्य व्यापारानुपपत्तेः, अथोत्तरः तत्रापि वक्तव्यं किं प्रवर्त्तनांशवन्नियोगांशेप्यस्ति पदसामर्थ्यं नो वेति, यद्यस्ति नाऽगृहीतं तत्कार्याय पर्याप्तम्, अपरथा पदधर्म-

---

टी०-प्रवर्त्तनाया बोधकोपि लिङ्ङादिशब्दः सविशेषामेव तामवबोधयति निर्विशेषाया बोधयितुमशक्यत्वादित्याशङ्क्य विकल्पासहत्वान्नैवमित्याह—" नच " इति,।

विकल्पमेव दर्शयति—" सहि " इति,। द्वितीयं विकल्पमपि विकल्पयति—" तत्रापि " इति। अगृहीतस्य कार्यानुपयोगित्वात् पदधर्मव्युत्क्रमपरिहाराय चावश्यवक्तव्ये तद्ग्रहणे सामर्थ्यप्रतियोगितया नियोगस्यापि मानान्तरगोचरतापत्तेर्नाद्य इत्याह—" यद्यस्ति " इति,। व्याघातप्रसङ्गेन द्वितीयं दूषयति—

मू०—व्युत्क्रमप्रसङ्गादित्युक्तं, यदि नास्ति व्याहतं तर्हि—तत्रासमर्थं तदपि बोधयतीति, नो चेत् तद्बोधमन्तरेण प्रवर्त्तनाबोधो मैवामूं वबुधत किं नश्छिन्नं नैय्यायिकानाम्, ।

अप्रामाण्यप्रसङ्गो वैदिकस्य पदसन्दर्भस्येति चेत्, तत्किमिदानीं वेदप्रामाण्यकातरतया न्यायाऽपरिशुद्धमर्थमङ्गीकुर्मः, नहि प्रयोजनानुवर्ति प्रमाणं, प्रमाणानुवर्त्त्यैव तत्, तत्र यदि सहस्रेणाप्यनुसरणप्रकारेण विधान्तरेणापि वेदप्रामाण्यमुपपादयितुं न शक्ष्यामः परित्यक्ष्याम एव तद्, यदि शक्ष्यामस्तदा परितोष्यामः, प्रामाण्यं च न परित्यक्ष्यामः,

---

टी०—"यदिनास्ति" इति, । विशेषस्यानवबोधे प्रवर्त्तनाबोध एव न भवेदित्याशङ्क्य सोपि तर्हि माभूदित्याह—" नोचेद् " इति, । नैयायिकानां=प्रामाणिकानामिति यावत्, ।

वेदप्रामाण्यमेव छिन्नमितिशङ्कते—" अप्रामाण्य " इति, । गूढाभिसंधिरुत्तरमाह—" तत्किमिदानीम् " इति, ।

तथैव कस्मान्नभवेदित्यत आह—" नहि " इति, । प्रयोजनवशादप्रामाणिकार्थस्वीकारेतिप्रसङ्गादसौ न स्वीकार्य इतिभावः । कथं तर्हि स्वीकार इत्यत आह—" प्रमाण " इति, । स्वसत्ताग्राहकप्रमाणानुसार्यैव प्रयोजनमिति यावत्,

प्रकृते फलितमाह—" तत्र " इति, ।

मू०—शक्यते च लोकावसितश्रेयःसाधनतामेवार्थान्तरसंसृष्टानवसिताकारेणाकलयतः प्रमाणतोपपादयितुम्, ।

अथापि स्याद्योग्येनान्विताभिधानं, क्रिया च स्वरसभङ्गुरा न कालान्तरभाविस्वर्गादिसाधनयोग्या कथं तदन्विताभिधीयेत, नचापूर्वव्यवधानेन योग्यता, पूर्वमपूर्वस्यैवाकल्पितत्वाद्, अनभिहिते हि चिरभाविफलसाधनभावे किमुपपादयितुं पूर्वमपूर्वकल्पना स्यात्, ।



टी०—स्वाभिसन्धिमुद्घाटयति—" शक्यतेच " इति, । इष्टसाधनता लोकावसिता चेदनुवादकत्वं वेदस्य प्रसज्येतेत्यतआह—" अर्थान्तर " इति, यागादिविशेषिता श्रेय.साधनता न मानान्तराधिगतेति भावः ।

न यागादेरभिमतस्वर्गादिसाधनता वेदेन बोधयितुं शक्यते क्षणिकत्वेनायोग्यत्वादित्यभिप्रेत्य शङ्कते—" अथापि " इति,। क्रियापि योग्या कस्मान्न भवेदित्यत आह—" क्रियाच " इति,। अपूर्वद्वारा सापि फलसाधनयोग्या कस्मान्नभवेदित्यत आह—" नच " इति,। पूर्वं फलसाधनतावगमाद् इति शेषः, तदेव कथमित्यतआह— " अनभिहित " इति,। साधनस्य प्रतीतावपूर्वस्य कल्पनं तदन्तर्भावेनेष्टसाधनत्वप्रतीतिरिति परस्पराश्रय इत्यर्थः, ।

मू०—आग्नेयादयः पुनरापाततः परमापूर्वसाधनभावयोग्यतावैधुर्य्यप्रतिपत्तिशून्याः तेन तत्साधनतया शक्यन्ते निश्चेतुं, पश्चात्तु क्रमभाविनां साहित्यसिद्ध्यर्थं कल्पितेष्वपूर्वेषु व्यवधानमङ्गीकृतं, पूर्वं तु योग्यतावसायादन्वयः, कारणान्तरात्तु व्यवधानमिति।

तदेतत् परामर्शकौशलविरहविजृम्भितं, न्यायसम्पाद-

---

टी०-आग्नेयादिष्वपि समानमेतदित्यत आह—" आग्नेयादय " इति,। दृष्टफले व्यवघातादिकर्मणि नियमाद्दृष्टजनने कर्मणोऽपि योग्यतावधारितैव, तेनाग्नेयादीनामप्यपूर्वजनने योग्यताप्रतीतेः परमापूर्वसाधनत्वमवगम्यते, स्वर्गस्य तु कालान्तरभाविनया कर्मणस्तज्जननयोग्यत्वाभावनिश्चयान्न तत्साधनतावगम्यत इति वैधर्म्यमित्यर्थः,।

साधनताऽवगता चेदलमपूर्वकल्पनयेत्यत आह—" पश्चाद् " इति,। अवगतसाधनत्वसिद्ध्यर्थमेवापूर्वे व्यवधानमङ्गीकृतमित्यर्थः,।

प्रागपूर्वकल्पनात् साधनत्वमेव तर्हि न प्रतीयत इत्यत आह— " पूर्वम् " इति,। अन्वयः—साधनत्वेनेति यावद्,।

तर्हि किमर्थं व्यवधानमित्यत आह—" कारणान्तराद् " इति, साहित्यसिद्ध्यर्थमित्यर्थः।

दूषयति—" तदेतद् " इति,।

साम्यमेव दर्शयति—" न्याय " इति,। अदृष्टजननोपाधावाग्नेयादीनां यदि योग्यता कर्मणः सुखजनने सा तुल्यैव, काला-

मू०—दनोत्तरकालं ह्यन्विताभिधानं, नचाग्नेयाद्यनुष्ठानानन्तरमेव प्रधानापूर्वस्योत्पादयोग्यता नैय्यायिकी, तथाप्यापाततो विरोधस्फूर्त्यभावमात्रेणान्विताभिधाने पक्षान्तरेपि तत्समानमिति सन्तोष्टव्यम्, ।

यत्तु लिङ्ङादीनां प्रवृत्यभावविरोधे प्रवर्तनापरपर्य्याये सङ्गतिग्रहणमिति, तदनाकलितसङ्गतिग्रहणवृत्तान्तस्य भाषितम्, ।

वालो हि स्वप्रवृत्तिसन्तत्यनुगतपवर्तकभावायां कर्तव्यतै

---

टी०—न्तरभावितया सुखविशेषस्वर्गोपाधावयोग्यता सा च परमापूर्वे समानेत्यर्थः ।

प्रधानापूर्वस्याप्युत्पादयोग्यता स्यादित्यत आह—" नच " इति, । व्यवहितत्वादिति भावः, ।

नैय्यायिकत्वाभावेपि आपाततो विरोधस्फूर्त्यभावेन तेषां साधनताभिधानमित्याशङ्क्य तदितरत्रापि समानमित्याह—" तथापि " इति, ।

प्रवर्तनामात्रे लिङ्ङादीनां सङ्गतिरित्युक्तमनूद्य दूषयति—" यत्तु " इति, ।

कस्मादित्यत आह—" वालो हि " इति, ।

श्रेयःसाधनतायाः प्रवृत्तिनिमितत्वे हेतुमाह-" स्वप्रवृत्ति "इति, ।

मू०—कार्यसमवायिन्यां समीहितसाधनतायामेव दृष्टानुसारतः परप्रवृत्तावपि कल्पितकारणभावायां सङ्गतिमधिगन्तुमुत्सहते, कुतस्तु प्रवर्तनामात्रे तदधिगतिः, ।

यत्तु वहुविधत्वात् प्रवृत्तिहेतूनामाज्ञादिविशेषाणां तेषां च परस्परव्यभिचारात्, प्रवृत्यभावविरोधस्य च सर्वत्रानुवृत्तत्वात्तावन्मात्रे च वाच्ये सम्भवत्यनेकाभिधानशक्तिकल्पनाया अयुक्तत्वात्, प्रवृत्यभावविरोधः शब्दार्थ इति, तदप्यनेकप्रवर्तकाभावादेवायुक्तम्, ।

प्रैषादिविशेषो हि समीहितोपायभावानुरोधेनैव प्रवृत्तिगोचरोऽननुविधेयप्रैषादिषु प्रवृत्त्यभावात्, ।

तथा च समीहितसाधनताया एव सर्वत्र प्रवर्तिका-

---

टी०—स्वप्रवृत्तिसन्ततावनुगतः प्रवर्त्तकभावो यस्याः सा तथा, सङ्गतिग्रहणं च भूयोदर्शनेन व्याप्तिसिद्ध्यर्थं, भवतु स्वप्रवृत्तावेवं तथापि शब्दप्रवृत्तौ किमायातमित्यत आह–"दृष्टानुसारत" इति,।

प्रवर्तनासामान्ये लिङ्ङादिसङ्गतिग्रहणसाधकहेतूननूद्य दूषयति—" यत्तु " इति, । तदप्ययुक्तमित्यन्वयः, तत्रहेतुः— " अनेक " इति । कथमनेकप्रवर्त्तकाभावः प्रैषादीनां तद्धेतुत्वादित्यत आह—" प्रैषादि " इति । उक्तप्रयोजकपुरस्कारेणैव तेषां हेतुत्वमन्यथा व्यभिचारादितिभावः ।

ततः किमित्यत आह—" तथा च " इति, ।

मू०—या एकरूपत्वात्कथं प्रवर्त्तकबहुत्वं कथन्तरां च परस्परव्यभिचार्य्यनेकप्रवर्त्तकाभिधानशक्तिकल्पनागरीयस्तापरिहरणायानुवृत्तप्रयोजकान्वेषणा कथन्तमां च प्रवृत्त्यभावविरोधे सङ्गतिस्वीकारः, ।

एतेनैतदपोढं—यदाहुरेके—प्रैषादीनां विशेषाणां व्यभिचारादनेकशक्तिकल्पनाप्रसङ्गात् प्रेरणायाश्च सर्वत्राऽनुवृत्तत्वात् कल्पनाप्रसङ्गात् लाघवात् प्रेरणामात्र एव लिङ्ङादिसङ्गतिरवसीयते, तथा चावसितप्रवर्त्तनाभिधानसामर्थ्यास्ते वेदेपि श्रूयमाणास्तामेव बोधयन्ति, ।

---

टी०—एकस्यैव प्रवर्त्तकत्वादनेकशक्तिकल्पनापि नास्तीत्याह—“ कथन्तराम् ” इति, । अत एतत्परिहाराय प्रवर्त्तनायां सङ्गतिग्रहोपि न स्वीकरणीय इत्याह—“ कथन्तमाम् ” इति ।

जरत्प्रभाकरमतदूषणं भाट्टमतेप्यतिदिशति—“ एतेन ” इति, । प्रवर्त्तनासामान्याश्रयनियोगनिराकरणेन लिङ्ङादिशब्दव्यापार. प्रवर्त्तनाश्रयः प्रवर्त्तक इति पक्षोपि निरस्त इत्यर्थः ।

निराकार्यस्वरूपं दर्शयति—“ यदाहुर् ” इति, । तदाश्रयतया शब्दव्यापारस्य प्रवर्त्तकत्वं दर्शयितु प्रेरणायां लिङ्ङादिसङ्गतिमुपपादयति—“ प्रैषादीनाम् ” इति, । भवतु तथा लोके वेदे कथ तदवबोध इत्यतआह—“ तथाच ” इति, । लोकावगतसामर्थ्यः शब्दो वेदेपि बोधक इति न्यायादित्यर्थः ।

मू०—नचासौ निर्विशेषा बोद्धुं शक्या, निर्विशेषस्य सामान्यस्यासम्भवाद्, अपौरुषेये च वेदे पुरुषाश्रयाणां प्रैषादीनां विशेषाणामसम्भवादन्य एव कश्चित्प्रवर्त्तनाधर्मकः प्रतीयते, ।

नचासौ नियोगः, तस्य कालत्रयविविक्तस्य खपुष्पकल्पस्य प्रेरणाश्रयत्त्वासम्भवात्, नचान्योपि कश्चित्स्वतन्त्र एव, स्वतन्त्रस्य प्रवृत्तिहेतोरलोकानुसारित्वात्, सर्वो हि प्रेषणादिः पराश्रय एव लोके प्रवृत्तिहेतुर्दृश्यते न स्वतन्त्रः, ततो वेदेपि लिङादिभ्यः प्रवृत्तिहेतुः कस्य चिद्धर्म एवावगम्यते, ।

---

टी०-तथापि कथं शब्दव्यापारस्य प्रवर्त्तकत्वमित्यत आह—" नच " इति। भवतु तर्हि प्रैषादिरेव विशेष इति, तत्राह—" अपौरुषेय " इति, ।

नियोग एव किं न स्यादित्यत आह—" नचासौ " इति, । कालान्यत्वे सति कालासंसृष्टस्य गगनकुसुमवदसत्त्वादिति यावत्, अन्यथातिव्यापकत्वप्रसङ्गाद्, ।

तथापि न शब्दव्यापारस्य सिद्धिरन्यस्यैव स्वतन्त्रस्य प्रवर्त्तकत्वादित्यत आह—" नच " इति, । अलोकानुसारित्वमेव दर्शयति—" सर्वोहि " इति, । तथापि शब्दधर्मत्वं कथमित्यत;

मू०—कस्य चायं धर्म इति विशये शब्दस्य सन्निहितत्वाच्छब्दधर्मत्वनिश्चयो, यद्यपि चार्थस्य धात्वर्थार्थभावनादेरानन्तर्यमुपलभ्यते तथापि तस्य विषयत्वेनाश्रयताऽयोग्यत्वान्न तद्धर्मतावगन्तुं शक्या, नहि कश्चित्प्रवर्तको विषयधर्मो लोके दृश्यते सर्वेषां रागादीनां विषयव्यतिरिक्तधर्मिधर्मतयाऽवगमाद्, व्यापारता चास्य लाघवादाश्रयणीया, व्यापारव्यतिरेके हि व्यापारान्तरमस्य कल्प्येत, निर्व्यापारतादृशकारणाऽदर्शनाद्, व्यापारत्वे च व्या-

---

टी०-आह—" कस्य च " इति, ।

ननु प्रकृत्या यागस्य प्रत्ययेनार्थभावनायाः संनिहितत्वादेतद्धर्मता किमिति न भवेदित्यत आह—" यद्यपि " इति, । अर्थस्य=यजतिशब्दप्रतिपाद्यस्य, अर्थभावना=पुरुषप्रवृत्तिरिति, आदिशब्देन तदतिरिक्तः प्रवृत्तिविषयो द्रव्यगुणादिः, विषयत्वेऽपि तद्धर्मता किं न स्यादित्यत आह—" नहि " इति, । 'विषय' इति=शब्दप्रवृत्तिविषयः, प्रवृत्तिविषयो वा, ।

भवतु शब्दनिष्ठत्वं तथापि तस्य व्यापारता कथमित्यत आह—"व्यापारताच"इति।इतरत्र गौरवमाह-"व्यापारान्तरम्"इति ।

चरमव्यापारवन्निर्व्यापारस्यैव कारणत्वं किं न स्यादित्यतआह—" निर्व्यापार " इति, । अव्यापाररूपस्य निर्व्यापारस्य लोककारणत्वादर्शनादितिभावः ।

सव्यापारस्य कारणत्वाद्भवतोपि गौरवं तुल्यमित्यतआह—" व्यापारत्वेच " इति, । नच कर्तृव्यापारस्यैव यागस्यापूर्वव्या-

मू०—पारान्तरनैरपेक्ष्यान्नापरं किं चित्कल्पनीयमिति कल्पनालाघवाद्व्यापारत्वमेव लिङ्ङाद्यभिधेयस्य प्रवृत्तिहेतोर्निश्चीयते, ।

सामान्यद्वारेण चाभिधाशब्दवद्व्यापाराभिधानं तदुत्पादनं च नानुपपन्नं, यथा खल्वभिधाशब्दः सामान्येनाभिधामभिधत्ते विशेषं चोत्पादयति एवं लिङ्ङादयोपि प्रवर्त्तनासामान्यमभिदधति विशेषं चोत्पादयन्तीति किमत्रावद्यम् ।

ननु न प्रवर्त्तयत्यपि शब्दव्यापारे प्रेक्षापूर्वकारिणः प्रवर्त्तन्ते तस्याननुविधेयत्वाद्, नचाकामा अपि सलिलादिनोदनेनेव व्यापारेणामुना प्रवर्त्तन्ते, लिङ्ङाश्रा-

---

टी०—पारवत्वात्कथमस्य व्यापारनैरपेक्ष्यमितिवाच्यम्, अस्यैव प्रवृत्तिं प्रतिचरमव्यापारत्वेन तदतिरिक्तकल्पनाभावादिति विशेषः ।

ननु व्यापारस्य शब्देन प्रतिपादने उत्पाद्यता न स्यात्पटवदित्याशङ्क्याभिधानव्यापारेऽनैकान्तिकत्वान्नैवमितिपरिहरति—"सामान्यद्वारेण" इति ।

दृष्टान्तं प्रपञ्चयति—"यथाखलु" इति । अभिधाशब्दः अभिधानक्रियावाचकः शब्द इति यावत्, सामान्येनाभिधामभिधत्ते सर्वाभिधावाचकतया स्वाभिधामपि प्रतिपादयतीत्यर्थः ।

समीहितसाधनत्वाभावेन शब्दव्यापारस्य न प्रवर्त्तकत्वमितिशङ्कते—"ननु". इति, । अननुविधेयत्वेपि सलिलादिवत्प्रवृत्तिहेतुता किं न स्यादित्यत आह—"नच" इति, ।

मू०—त्रिणां सर्वेषामपि प्रवृत्तिप्रसङ्गादिति ।

नैतत्सारं लौकिकाप्तोपदेशवद्विषयसमवायिसन्निहितसाधनताबोधकत्वेन तस्यानुविधेयत्वाद्, अधिकारिभेदापेक्षया च तद्बोधकत्वान्नातिप्रसङ्गाप्रसङ्गौ, तेन शब्दानन्तर्यात्प्रवृत्तेः ।

उक्तेन च प्रकारेणान्यस्य प्रवृत्तिहेतोरसम्भवात्सिद्धं शब्दभावनायाः प्रवर्त्तकत्वमिति ।

एतस्मिन्नपि हि पक्षे प्रेषणादिपरस्यैव व्यभिचारिप्र-

---

टी०—लिङः शब्दव्यापारस्य प्रवर्त्तकत्वसिद्धये प्रवृत्तिविषयगतसमीहितसाधनताबोधकतयाऽनुविधेयत्वान्नैवमिति परिहरति—" नैतत्सारम् " इति, । अनुविधेयत्वादेव सर्वेषां प्रवृत्तिरप्रवृत्तिर्वा स्यादित्यत आह—" अधिकारिभेद " इति, । अतो न सर्वेषां प्रवृत्त्यप्रवृत्ती स्यातामिति भावः ।

ततः किमित्यत आह—" तेन " इति, ।

पक्षान्तरेऽपि शब्दानन्तर्यात्प्रवर्त्तकत्वं सम्भवतीत्यत आह—" उक्तेन च " इति, ।

'सिद्धं शब्दभावनायाः प्रवर्त्तकत्वमिति–' यदाहुरेके तदपोढमित्यधस्तनेनान्वयः, एतेन इत्यतिदिष्टं हेतुं दर्शयति—" एतस्मिन्नपि " इति, । श्रेयःसाधनत्वस्यैवानुवृत्तस्य प्रवृत्ति-

मू०—वर्त्तकभेदे सिद्धे शक्तिककल्पनगौरवपरिहायानुवृत्त-प्रेरणामात्र एव लिङ्ङादिसङ्गतिराश्रयणीया, नचास्ति प्रवर्त्तकभेदः, समीहितसाधनतैव तु सर्वत्र प्रवर्त्तिके-त्युपपादितं, तथा च कुतः प्रेरणामात्रे सङ्गतिग्रहप्रसङ्गः कुतो वा लौकिकविशेषासम्भवान्निर्विशेषसामान्यास-म्भवाच्च प्रागुक्तपरिपाट्या शब्दव्यापारस्य विशेषता-श्रयणता, ।

नच कोपि व्यापारः शब्दस्य निरूप्यत इत्यधस्ता-दुपपादितम्, ।

अभिधाशब्ददृष्टान्तश्चैवं प्रत्यूढः ।

समीहितसाधनताबोधकत्वेनैव चान्ततः प्रवर्त्य-

---

टी०—हेतुतया ऽनेकशक्तिकल्पनाप्रसङ्गाभावात् प्रेरणामात्रे सङ्गत्यभा-वेन तदाश्रयतया न शब्दव्यापारस्य प्रवर्त्तकत्वमङ्गीकरणीयमित्यर्थः ।

अमूर्त्तत्वादचेतनत्वात्परिस्पन्दप्रयत्नयोरसम्भवादन्यस्य चानि-रूपणाद्व्यापार एव शब्दे न सम्भवतीत्यपि कार्यवादे निरूपितमि-त्याह—" न च कोपि " इति, ।

व्यापाराभावादेवाभिधाशब्ददृष्टान्तो नावतरतीत्याह—" अ-भिधा " इति, ।

प्रवृत्तिविषयस्य समीहितसाधनताबोधकत्वेन शब्दव्यापारस्या-नुविधेयत्वे समीहितसाधनत्वमेव प्रवर्त्तकप्रयोजकमुक्तं स्यादित्याह—" समीहित " इति, ।

मू०—पुरुषानुविधेयतया प्रवर्तकत्वे प्राप्ताप्राप्तविवेकेन समीहितसाधनतैव प्रवृत्तिहेतुरिति प्रकारभेदेन प्रतिपादितं स्यात्, तस्मान्नायमपि समञ्जसपक्षनिक्षेपक्षमः पक्ष इति क्षमन्ते परीक्षकास्तदलमनया स्थूलदर्शिनां कथया निबद्धमानया प्रस्तुतमनुसरामः ।

यः प्रवृत्त्यभावविरोधः सा प्रवर्त्तनेत्ययुक्तं, प्रवृत्तावपि तत्प्रसङ्गात्, सापि हि प्रवृत्यभावविरोधिनी, नचास्याः प्रवर्त्तनाप्रसिद्धिः, ।

न प्रवृत्त्यभावविरोधः प्रवर्तना किन्तु प्रवर्त्तनायाः

---

टी०—प्रवृत्त्यभावेन विरोधः प्रवृत्त्यभावविरोध, किं वा प्रवृत्त्यभावेन विरोधो यस्य स तथेति विकल्प्याद्ये दोषमाह—"यः प्रवृत्त्यभाव" इति, । प्रवृत्तिनिष्ठतया प्रवर्त्तनाप्रसङ्गादित्यर्थः, ।

तदेव कथमित्यतआह—"सापिहि" इति, । येन प्रवृत्त्यभावेन विरोधवती प्रवृत्तिस्तेन तन्निष्ठो विरोधोपि प्रवर्त्तना स्यादित्यर्थः, ।

अस्तु प्रवृत्तावपि प्रवर्त्तना को दोष इत्यत आह—"नच" इति, । प्रवृत्तिहेतुभूतोर्थः प्रवर्त्तना न तत्प्रसिद्धिरिति यावत्, प्रवर्त्तनाश्रयत्वे प्रैषादिवत्प्रवृत्तेरपि प्रवर्त्तकता स्यादित्यर्थः ।

द्वितीयं कल्पमुत्थापयति—"नप्रवृत्युत्पादेन" इति, ।

अत्रापि प्रवृत्तावपि तत्प्रसङ्गादिति दोषतादवस्थ्यं, प्रवृत्तेरपि-

मू०—प्रवृत्त्यभावविरोध इति चेत्, कस्तर्ह्यस्याः प्रवृत्त्यभावेन विरोधः, स खल्वस्याः सत्तायां प्रतीतौ वा स्याद्, न तावत्सत्तायां, प्रवृत्त्यभाव एव तत्सत्ताभ्युपगमात्, सत्यां प्रवृतौ तदयोगात् न खलु प्रवृत एव प्रवर्त्त्यते, नापि ज्ञप्तौ, प्रवृत्त्यभाव एव प्रवृत्तिहेतुज्ञापनाच्छब्देन, ।

प्रवृत्त्युत्पादेन प्रवृत्त्यभावं विरुणद्धीति प्रवर्त्तनायाः

---

टी०—प्रवृत्त्यभावेन विरोधस्य सत्वात्तथापि दूषणान्तरं वक्तुं गूढाभिसन्धिराह—" कस्तर्हि " इति, ।

विरोधं विकल्पयति—" सखलु " इति, । प्रवृत्त्यभाव एव=प्रवृत्त्यभावे सतीति यावत्, एवकारस्य व्यावर्त्यमाह—" सत्याम् " इति, । सत्यां प्रवृत्तौ प्रवृत्तिहेतुभूतव्यापारस्य-वैयर्थ्येना ऽसम्भवादिति भावः ।

तदेव स्फुटयति—" नखलु " इति, । द्वितीयं दूषयति " नापि " इति, । प्रवृत्त्यभावप्रतीतौ सत्यामेव प्रवृत्तिसिद्ध्यर्थं शब्देन प्रवर्त्तनायाः प्रतिपादनादित्यर्थः, ।

न सहानवस्थानविरोधः किन्तु प्रवृत्तिजननेन वध्यघातकभाव इति शङ्कते—" प्रवृत्त्युत्पादेन " इति, ।

भवतु विरोधवती प्रवर्तना तथापि प्रवृत्तितदभावयोरनेकतया तद्विरोधस्यापि तथात्वेनाननुवृत्तत्वादनुवृत्तस्यान्वयव्यतिरेकवत्तयात्र प्रवृत्तिकारणकोटिनिक्षिप्तत्वेनान्तरङ्गत्वाच्चानुवृत्तप्रवर्त्तनामात्रे शब्दशक्तिकल्पनं युक्तं न पुनस्तद्गति प्रवृ-

मू०—प्रवृत्त्यभावविरोध इति चेत्, तथापि परस्परव्यभिचारिप्रवर्त्तकविशेषगोचरशक्तिकल्पनानुपपत्तेः प्रवर्तनात्मनि सामान्ये तत्कल्पनं स्यात् कुतः पुनः प्रवर्तनाधर्मतया बाहिरङ्गे प्रवृत्त्यभावविरोधे तत्कल्पनावकाशः। प्रवृत्त्यभावविरोधोपि प्रवर्त्तकरागादिसमवायिप्रवर्त्तनाप्रयोजकः, सत्स्वपि रागादिषु विषयस्यान्यथासिद्धौ विरोधाभावे प्रवृत्त्यदर्शनाद्, नाऽतो बहिरङ्ग इति चेत्, तथापि विशेषव्यभिचारे सामान्यात्मनि प्रवर्त्तनायामेवास्तु शक्तिर्न तत्प्रयोजके विरोधे, नचान्यथासिद्धे विषये विरोधाभावाद् रागादौ प्रवृत्त्यभावः, किं तु सिद्धवि-

---

टी०—त्यभावविरोध इति परिहरति—"तथापि" इति, । बहिरङ्गत्वमसिद्धमिति शङ्कते—"प्रवृत्त्यभाव" इति, । प्रवर्त्तनायाः प्रयोजकः=प्रवर्त्तनायाः प्रवृत्तिहेतुत्वप्रयोजक इति यावत्, केवलव्यतिरेकप्रदर्शनेन प्रयोजकत्वमेव दर्शयति—"सत्सु" इति, ।

भवतु केवलव्यतिरेकस्तथाप्यननुवृत्तत्वान्न शब्दशक्तिगोचरत्वमिति परिहरति—"तथापि" इति, ·। केवलव्यतिरेकोपि नास्तीत्याह—"नच" इति, । अप्राप्तस्य प्रार्थनमेव रागः स च प्राप्ते विषये नावतरति तेन तत्र रागाभावादेव प्रवृत्त्यभावो न पुनर्विरोधाभावादित्यर्थः, ।

मू०—षये रागस्यैवाभावः, स खलु सत्तया प्रवर्त्तक इत्युक्तम्।

प्रवृत्त्यभावविरोधस्य प्रवर्त्तनाप्रयोजकतायां प्रवृत्तौ व्यभिचारः, नच प्रवर्त्तनैव प्रवृत्त्यभावविरोधः, प्रवृत्तौ प्रवृत्त्यभावविरोधेपि प्रवर्त्तनायामभावादित्युक्तम्,।

ननु प्रवृत्त्युत्पादनेन प्रवृत्त्यभावविरोधः प्रवर्त्तना, तस्मात्प्रवृत्त्यभावविरोधे पदसामर्थ्यमिति प्रवर्त्तनागोचरमेव तदुक्तं, मैवं, प्रवृत्त्युत्पादनाया एव प्रवर्त्तनात्वाद्विरोधविशेषणायोगात्, तस्मात्प्रवर्त्तनाया लिङ्डादिपदगोचरभावेपि न प्रवृत्त्यभावविरोधस्य तद्भावः।

---

टी०—रागस्याभावादप्रवृत्तिरिति किं नियामकमित्यत आह—"स खलु" इति,। असति विरोधिरागादिप्रतिबन्धे सत्तयैव रागः प्रवर्त्तको न पुनर्ज्ञाततयेत्युक्तमित्यर्थः।

विरोधस्य व्यभिचारित्वाच्च न प्रवर्त्तनाप्रयोजकत्वमित्याह—"प्रवृत्त्यभाव" इति,। माभूद्विरोधस्य प्रवर्त्तनां प्रति प्रयोजकत्वं तत्स्वरूपमेव तर्हि स्यादित्यत आह—"नच" इति,। तद्व्यभिचारित्वान्न तत्स्वरूपमिति भावः।

ननु प्रवृत्त्यभावविरोधमात्रं न प्रवर्त्तना किन्तु तद्विशेष इति शङ्कते—"ननु प्रवृत्ति" इति,। प्रवृत्त्युत्पादनस्यैव प्रवर्त्तनारूपत्वात्तस्य चाव्यभिचारात्तेनविरोधस्य विशेषणं न युक्तमिति परिहरति—"मैवम्" इति,। प्रवृत्त्युत्पादनेन प्रवृत्त्यभावविरोध इति प्रवृत्त्युत्पादनस्य विरोधं प्रति विशेषणत्वायोगादित्यर्थः।

उक्तविरोधवानेव लिङ्शब्दवाच्य इति निराकृतमेव पक्षं पुनः शङ्कते दूषणान्तरं वक्तुम्—"प्रवृत्त्यभावविरोधी" इति,।

मू०—प्रवृत्त्यभावविरोधी लिङ्र्थो न विरोध इति चेत्, तर्हि रागस्यैव तदर्थता स्याद्, अद्धा, नान्यथासिद्धतया प्रतिषिद्धत्वात्, ।

यापीयं विषयान्यथाभावविरोधी प्रवर्त्तक इति परिभाषा, तत्रापि विषयान्यथाभावविरोधीति प्रवृत्त्यभावविरोध्येव चेदभिधीयेत प्रागुक्तन्यायः प्रत्युद्ध्रियेत, ।

विषयस्यान्यथाभावमन्तरेण विरुध्यत इति विषया-

---

टी०-निराकरोति—"तर्हि" इति, प्रवृत्त्युत्पादनेन प्रवृत्त्यभावविरोधस्य रागेपि सत्त्वादयमपि तदर्थ. ।

अस्तु तर्हि तथैवेति शङ्कने—"अद्धा" इति, । मनोवेद्यतया साक्षिनिर्भास्यतया वा तस्यान्यत एव सिद्धत्वान्न शब्दार्थतेत्युक्तमिति परिहरति—"नान्यथा" इति ।

विषयकारीर्यादेरन्यत एव सिद्धे सत्यपि रागे प्रवृत्त्यभावविराधाभावेन प्रवर्त्तकत्वाभावादिति, त्वयैव रागप्रवर्त्तकत्वस्य निराकृतत्वादिति वा परिहरति—"नान्यथा" इति, ।

दूषयितुं तदीयपरिभाषामनुवदति—"यापि" इति, । विषयशब्देनोद्देश्यतया प्रवृत्तिरभिधीयते, अन्यथाभावश्च तदभावः, तथा च तद्विरोधी प्रवृत्त्यभावविरोधीति विवक्षित किं वा विषयशब्दवाच्यो धात्वर्थः तस्यान्यथाभावमन्तरेण विरोधीति, आद्ये दूषणमाह—"तत्रापि" इति, । प्रागुक्तमेव दूषणं स्यादित्यर्थः ।

द्वितीयपक्षमुत्थापयति—"विषयस्य" इति, । अन्तरेणे-

मू०—न्यथाभावविरोधीति चेत्, अपूर्वमिदमायुष्मतां व्याकरणकौशलं, कश्चायं विषयः को वा तस्यान्यथाभावः कथं वा तमन्तरेण विरोधः कस्य चासौ ।

धात्वर्थो विषयस्तस्य चानिष्पन्नस्य निष्पत्तिरन्यथाभावः, तन्नान्तरीयकतया च विरोधः, स च रागादेरिति चेत्, को भावः—किं रागः सत्तायां तमन्तरेण विरुध्यते, किं वा ज्ञप्तौ, न तावदाद्यः, कदलीफलभक्षणादिपरिनिष्पत्तेः प्रागेव रागसम्भवाद्, निष्पन्न एव तदयोगाद्, नाप्युत्तरस्तन्निष्पत्तेः प्रागेव रागावगमाद्, ।

अथ विषयनिष्पादकत्वमेव तमन्तरेण विरोधस्त-

---

टी०—त्वर्थस्य पदादप्रतीतेरपदार्थत्वाऽवाक्यार्थत्वादित्थं परिभाषाकणनमयुक्तमिति सोपहासमाह—" अपूर्वमिदम् " इति ।

ननु शाकप्रधानः पार्थिवः शाकपार्थिव इति वन्मध्यमपदलोपिसमासेनापि तस्यार्थस्य प्रतीतेरविरोध इत्याशङ्क्य तस्याप्यनिर्वचनादयुक्तमिति साक्षेपमाह—" कश्चायम् " इति, ।

पृष्टे मत्त्वोत्तरमाह—" धात्वर्थ " इति, । तन्नान्तरीकतया= तदविनाभावेन, धूमस्य धूमध्वजेनाविनाभूततया तमन्तरेण विरोधवदित्यर्थः, ।

तदेतद्विकल्प्य दूषयति—" कोभाव " इति, ।

न सहानवस्थानविरोधः, किन्तु तज्जन्यजनकत्वेन वध्यघातकभाव इति शङ्कते—" अथविषय " इति, । अस्तु को दोष इ·

मू०—र्हि प्रवर्त्तकत्वं विरोध इति स्यात्, तथा च यावतोक्तं विषयान्यथाभावविरोधी राग इति, तावतोक्तं प्रवर्त्तको राग इति, स्यादेवं चेत्, प्रसिद्धयैव भाषयाभिधीयतां किमप्रसिद्धाभिः कणाटलाटभाषाभिर्भाषते भवान् ।

विषयान्यथाभावविरोधी प्रवर्त्तक इति चोक्तौ पौनरुक्त्यापातः ।

यापीयं परिभाषा संविदभिन्नो विषयान्यथाभावविरोधी राग इति, तत्रापि संविदभिन्न इति संविदेवेति चेदर्थः संविद्राग इत्युक्तं स्यात्, नचैवं सम्भवति. ।

---

टी०—त्यत आह—"तथाच" इति, । कर्णाटलाटभाषाभिर् इत्यप्रसिद्धभाषोपलक्षणं प्रस्तुने तयोरभावाद्, ऋजुवर्णनासम्भवे वक्रोक्तिरयुक्तेत्यर्थः ।

दूषणान्तरमाह—"विषय" इति,।अन्यथाभावविरोधीति प्रवृत्तिजनकत्वस्यैवोक्तत्वात्पुन.प्रवर्त्तक इत्युक्तौ पौनरुक्त्यापात इत्यर्थः।

परिभाषान्तरं दूषयितुमनुवदति—" यापि " इति, ।

विषयान्यथाभावस्य पूर्वमेव दूषितत्वादवशिष्टं संविदभिन्नत्वं दूषयितुमुपक्रमते—" तत्रापि " इति, ।

संविदभिन्न इति केवलाभेदो विवक्षितो, भेदसंसृष्टोऽभेदो वेति विकल्प्याद्यं दूषयति—" संविदभिन्न " इति, । अस्तु तथेत्यत आह—" नचैवम् " इति, । जन्यजनकत्वेन भेदादित्यर्थ,ः।

मू०—यदि मतं न संविदभेदो नाम संविन्मात्रता, तत्किमिदानीं कथं चिद् भेदोऽपि, सत्त्यं, मैवम्, एकोपाधौ विरोधात् भेदाभेदयोर्, अपराद्धान्तापाताच्च, तदलमतिचापलेन वाचाम्, ।

यत्पुनर्मृते पितरि पित्राज्ञायाश्चानुसन्धीयमानायाः प्रवर्त्तकत्त्वमिति, तदप्याज्ञादिष्वपि समीहितसाधनताया एव रागावच्छिन्नायाः प्रवृत्ति हेतुताप्रतिपादनेन पराकृतं।

यत्तु कालत्रयविविक्तो नियोग इति, तत्रेदं भवा-

---

टी०—द्वितीयमाशङ्कते—" यदिमतम् " इति, । तन्मात्रत्वाभावे भेदोऽभ्युपगतः स्यादिति गूढाभिसन्धिराह—" तत्किमिदानीम् " इति, । अस्तु तथैवेति शङ्कते पूर्ववादी—" सत्त्यम् " इति, । दूषयति—" मैवम् " इति, । एकस्यैकत्रैकेन रूपेण भेदतदभावयोर्विरोधादित्यर्थः ।

दूषणान्तरमाह—" अपराद्धान्त " इति, । भेदाभेदयोः प्राभाकरेणानङ्गीकारादित्यर्थः ।

प्रवृत्त्यभावविरोधित्वेनानुसन्धीयमानतया आज्ञायाः प्रवर्त्तकत्वमुक्तमनूद्य दूषयति—" यत्पुनर् " इति, ।

शब्दैकगोचरत्वं निराकृत्य कालत्रयविविक्तत्वं निराकर्तुमनुवदति—" यत्तु " इति, । किं कालत्रयेणासंस्पृष्टः उत शब्देन तथा प्रतीयते इति विकल्पार्थः ।

मू०—न्व्याचष्टां किमर्थतः कालविवेकः, किं वा शब्दत इति, यद्याद्यः कल्पः, खरविषाणसाम्यापातः ।

कालातिरेकिणो हि सत्ता कालसम्बन्धव्याप्ता, स-चाकालात्मनो नियोगाद्व्यापको व्यावर्त्तमानः स्वव्याप्यामपि सत्तां व्यावर्त्तयेद् दहन इव धूमम्, उत्तरस्मिंस्तु न घटादिभ्यो विशेषः कश्चित्, ।

अयमत्रार्थसंग्रहः—प्रमाणान्तरप्रसिद्धयोरलौकिक-नियोगार्थताऽयोगाल्लिङ्ङादीनां लोकावसितामेव समी-

---

टी०—असत्त्वापातमेवानुमानेन दर्शयति—"कालातिरेकिणोपि" इति । काले व्यभिचारवारणार्थं कालातिरेकिण इति विशेषणम्, अत्र जडस्येति विशेषणमनुसन्धेयम्, अन्यथा ब्रह्मण्यनैकान्तिकत्वाद्, । "न घटादिभ्ये विशेष" इति, । घटशब्देन यदा घटः प्रतीयते तदा कालत्रयासबन्धित्वमेव प्रतीयतेऽन्यथाघटोभूदस्ति भविष्यतीति प्रयोगपौनरूक्त्यापाताद्, घटशब्देनैव कालत्रयसत्त्वप्रतीतेर्नियमेन चान्यतरकालसंबन्धित्वे तदितरकालसंबन्धप्रतिपादकाभूदस्तीत्यादिशब्दानां विरोधाच्चेत्यर्थः ।

अथ वा घटादयोपि यदा घटादिशब्दैः कृतिसाध्यतयाधिगम्यन्ते तदा कालत्रयासंस्पृष्टतयैव गम्यन्तेऽनद्यतनवर्त्तमानादिव्यतिरिक्तार्थे लिङ्ङादिविधानात्, ततोनियोगस्य घटादविशेष इत्यर्थ. ।

सुखावबोधाय नियोगदूषण संक्षिप्य लिङ्ङादीनां समीहितसाधनताप्रतिपादकत्वमुक्तमनुस्मारयति—"अयमत्र" इति, ।

मू०—हितसाधनतां वैदिकवाक्यसन्दर्भेषु प्रयुक्ताः पदार्थान्तरसंसृष्टालौकिकाकारेणाभिदधतीत्य पेक्षितोपायतैव विध्यर्थः ।

तदभिहितमाचार्यवर्यैर् "अपेक्षितोपायतैव विधिरिष्टो मनीषिभिर्" इति, ।

तदेवं विधिवाक्यानामपि समीहितसाधनार्थतया सिद्धार्थपर्यवसानान्न किञ्चिदपि वैदिकं वचः पराभिमतकार्यपर्यवसायीति सिद्धं, ।

तदेवं प्रयोगमधिरोहति—वेदः सिद्ध एवार्थे प्रमाणं प्रमाणत्वात्प्रत्यक्षवत्, पराभिमतकार्यवैपरीत्यं च

---

टी०-अनुवादकतां परिहरति—"पदार्थान्तर" इति, । आचार्यवर्यैः=मण्डनमिश्रैरिति यावत्, ।

'ननु परमतकार्ये वेदलेशोऽपि मातृत्वं लभत' इति यदुक्तं तत्साधनमुपसंहरति—" तदेवम् " इति, । सिद्धसाधनतापरिहारार्थं सिद्ध एवेति विशेषणं, कार्यसंसृष्टतया सिद्धेपि परेण प्रामाण्यङ्गीकारादू, अनुमानस्य च भविष्यदर्थेपि प्रमाणतयानैकान्तिकत्वमाशङ्क्य सिद्धशब्दार्थनिर्वचनेन परिहरति—"पराभिमत" इति, । आदिशब्देन वर्त्तमाननित्यप्रसिद्धसत्त्वानि गृह्यन्ते, ।

मू०—सिद्धशब्दार्थो न पुनर्निष्पन्नतादिः, एवं च बहुलकालमेघोन्नत्तिदर्शनाद् भविष्यत्प्रवर्षणानुमानेनानैकान्तिकतेति कुचोद्यमेव, तस्माद्विशदमशेषम्।

"इति गलितकलङ्कः सिद्धतत्त्वे प्रसिद्धेः, सविधिकपदराशेर्मानभावः प्रमाणात्, प्रतिहतपरयुक्तिव्रातनीतिप्रपञ्चात्, किमु विगलितभेदे पुंसि वेदान्तवाचः"।

---

"नन्वानन्दादिशब्दानामैकार्थ्यानुपपत्तितः,।
अद्वैतानन्दनिष्ठत्वं वेदान्तानामप्ययुक्तिमद्" ॥

इह खलु विज्ञानमानन्दं ब्रह्मेत्यादिपदसन्दर्भेषु न तावद्विज्ञानानन्दादिपदानामैकार्थ्यं तथासति पर्यायतया

---

टी०—वादार्थमुपसंहरन्नुत्तरवादार्थमुपक्षिपति—" इतिगलित " इति,। प्रमाणमेव विशिनष्टि—" प्रतिहत " इति,। प्रतिहतः प्रयुक्तिव्रातो=न्यायप्रपञ्चो यस्मात्तत्प्रमाणं तथा तस्मादिति यावत्,।

'किमु विगलितभेदे पुंसि' इत्यनन्तरवादार्थकथनं, तदेतदसृष्यन्नाह—" ननु " इति,। अद्वैतानन्दनिष्ठत्वं=सजातीयविजातीयस्वगतनानात्वशून्यानन्दविषयत्वं वेदान्तानां नोपपद्यत इति यावत्, तत्र हेतुर्—" आनन्दादिशब्दानाम् " इति। अभेदवस्तुपरत्वे विज्ञानानन्दशब्दानामेकार्थत्वेन पर्यायतया सहप्रयोगानुपपत्तेरित्यर्थः,।

विज्ञानानन्दशब्दानामेकार्थत्वं भिन्नार्थत्वं विकल्प्याद्यपक्षोत्तरत्वेन पूर्वार्द्धं व्याचष्टे—" इह " इति,। भिन्नार्थत्वे तु संसृष्टा०

मू०—सहप्रयोगो न स्याद्, नो खलु पर्यायाणां सह प्रयोगो युक्तिमान् ।

यथोक्तं—"पर्यायाणां प्रयोगो हि यौगपद्येन नेष्यते, पर्यायेणैव ते यस्माद्वदन्त्यर्थं न संहिताः, पर्यायत्वं ततः सर्वपर्यायाणां प्रतिष्ठितम्" इति, ।

यदपि मतं—विज्ञानानन्दसच्छब्दाः परापरसामान्यवाचित्वात्सामानाधिकरण्याच्च स्वसामान्यविधानमुखे-

---

टी०—णैतया नाऽखण्डार्थत्वसिद्धिरिति द्वितीये दूषणं बहिरेव द्रष्टव्यं,

सहप्रयोगः कस्मान्नभवतीत्यत आह—" नोखलु " इति, । एकेनैव तदर्थप्रतीतिसिद्धेरितरस्य वैय्यर्थ्यादिति भाव. ।

तत्रैव वृद्धसंमतिमाह—" यथोक्तम् " इति, । किमिति नेष्यते इत्याशङ्क्य पर्यायशब्दनिरुक्तिरेव नियामिकेत्याह—" पर्यायेणैव " इति, ।

विज्ञानानन्दादिशब्दानां भिन्नार्थत्वेपि ब्रह्मणो लक्ष्यस्यैकत्वादखण्डार्थत्वं न व्याहतमिति विवरणाचार्यमतमुत्थापयति—"यदपि" इति, । सत्ता=परं सामान्यं, तदपेक्षया विज्ञानत्वमपरम, एतदपेक्षया चानन्दत्वमिति भावः ।

भवतु परापरसामान्यवाचित्वं तथाप्येकव्यक्तिलक्षकत्वं कथमित्यत आह—" सामानाधिकरण्याद् " इति ।

ननु विज्ञानानन्दादिशब्दानां स्वार्थस्य परित्यागे तीरस्य गङ्गारूपताऽभाववद्ब्रह्मणोपि विज्ञानादिरूपता न स्यात्तदपरित्यागे च पृथिवी घट इति वद्विशिष्टार्थावबोधनेन सखण्डार्थता स्यादित्यत आह—" स्वसामान्य " इति, ।

मू०—नैकामानन्दव्यक्तिमपरसामान्यव्यञ्जिकां ब्रह्मत्वेन लक्षयन्तीति ।

तदपि दुराशाविजृम्भितं, नो खलु लक्षणाश्रयणेऽप्यखण्ड एवार्थे विज्ञानादिपदानां वृत्तिः सम्भवति, यो ह्येकेनैव पदेन लक्षितार्थस्तस्यैव पदान्तरेण लक्षणायां "निष्पादितक्रिये कर्मण्यविशेषाभिधायिनः साधनस्य साधनन्यायातिपात" इतिन्यायेन पदान्तराध्ययनमनर्थकमापद्येतेति, तथा च विज्ञानानन्दपदयोरैकार्थ्यानुपपत्त्यावश्याभ्युपेयमेतदानन्दगुणकं ब्रह्म वेदनीयमिति ।

स्यान्मतं—गुणगुणिभावाश्रयणेऽपि नानन्दादीनां ब्रह्मातिरेकिता, तथासति गवाश्ववद् गुणगुणिभावस्यैवा-

---

टी०—सामान्यवाचिनामपि विज्ञानादिशब्दानां तुच्छत्वजडत्वदुःखत्वव्यावृत्तिमात्रप्रयोजनतया संसर्गप्रतिपादनपरत्वाभावान्नोक्तदोष इत्यर्थः ।

दूषयति—"तदपि" इति, । कस्मादित्यतआह—"योहि" इति, । तत्तद्व्यावृत्तिषु तद्विशिष्टे वा तात्पर्ये सखण्डार्थता स्याद्, व्यक्तिमात्रपरत्वे एकेनैव पदेन तत्सिद्धेरितरपदवैयर्थ्यं स्यात्, नच तत्रतात्पर्येऽपि तदभिधानाभावेनाखण्डार्थता, विषं भुङ्क्ष्वेति भोजनप्रतिषेधपरवाक्यस्याप्यखण्डार्थत्वप्रसङ्गादित्यर्थः, ।

गुणगुणिभावेऽपि भेदाभावादखण्डार्थता न व्याहन्यत इति सिद्धान्ती शङ्कते—"स्यान्मतम्" इति, ।

मू०—सम्भवादिति, न, अभेदेपि तदसम्भवसाम्याद् गुणिस्वरूपवत्, तस्मात्कथञ्चिद्भिन्नयोरेव गुणगुणिभावोपपत्तेर्'एकमेवाद्वितीयम्' इत्यात्यान्तिकभेदाभावश्रुतिरनुपपन्नैवेति सिद्धमिति, ।

अत्र समाधिः—" लक्ष्यार्थभेदाभावेपि व्यवच्छेद्यविभेदतः, विज्ञानानन्दपदयोः पर्यायव्यर्थता कुतः" ।

विज्ञानादिपदानां हि न यद्यपि लक्ष्यस्वरूपभेदस-

---

टी०—अभेदेपि धर्मिस्वरूपवदेव तदनुपपत्तिस्तुल्यैति परिहरति—" नाऽभेदेपि " इति, ।

पक्षद्वयानुपपत्तौ कथं भवदभिमतसिद्धिरित्यत आह—" तस्मात्कथंचिद् " इति । भेदस्पृष्टाभेदेन गुणगुणिभावोपपत्तेः पूर्वोक्तदूषणाप्रसङ्गादिति भावः ।

तथास्वीकारेऽद्वितीयश्रुतिविरोध इत्यत आह—" एकमेव " इति, । केवलाभेदे च गुणगुणिभावस्यासम्भवादस्य च श्रुतिसिद्धत्वादत्यन्तभेदाभावश्रुतिर्भेदाभेदविषया स्वीकर्त्तव्येत्यर्थः, ।

सिद्धान्तमुपक्रमते—" लक्ष्यार्थभेद " इति, । लक्ष्यस्य ब्रह्मणो भेदाभावेपि विज्ञानादिपदव्यवच्छेद्यस्य जडत्वादेर्भेदेपि, पर्यायत्ववैयर्थ्ययोरभावादखण्डार्थता न व्याहन्यत इत्यर्थः ।

श्लोकं व्याचष्टे—" विज्ञान " इति, । व्यवच्छेद्याकारभे-

मू०—म्भवस्तथापि प्रतिपदं व्यवच्छेद्याकारभेदादवैय्यर्थ्य-मनेकपदाम्नानस्य प्रकृष्टप्रकाशश्चन्द्र इति वद्, :

यथा खलु कश्चित्केन चिदस्मिन्ज्योतिर्मण्डले कत-मश्चन्द्र इति पृष्टः प्राह प्रकृष्टप्रकाशश्चन्द्र इति, स ख-ल्वयं प्रकर्षमात्रमाचक्षाणो नापेक्षितमर्थमाचक्षीत तस्य प्रकृष्टं तम इति सन्तमसेपि सम्भवेन चन्द्रस्वलक्षण-तानुपपत्तेः, नापि प्रकाशमात्रं तस्य खद्योतादावप्य-चन्द्राकारे सम्भवात्, ।

---

टी०—दाद्=जडत्वाद्याकारभेदादितियावत्, । नच व्यवच्छेदानां तद्वि-शिष्टस्य वा प्रतिपादनेन सखण्डार्थतापातः, विज्ञानादिशब्दानां स्वाभि-धेयविरोधिव्यावृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्य्यवसानेन व्यावृत्तौ त-द्विशिष्टे वा तात्पर्याभावात्, नच व्यावृत्तिपरत्वाभावे कथ तत्सि-द्धिरितिवाच्यं, व्यावृत्तेः पदसामर्थ्यलभ्यतया शब्दार्थत्वाभावाद्—"यश्चार्थादर्थो न स चोदनार्थः" इति न्यायाद्, नचगुण-गुणिभावाभिधानेपि तदितरव्यावृत्तिसिद्धिरिति वाच्यं, ब्रह्मपदा-र्थमात्रस्य बुभुत्सिततत्वेन गुणगुणिभावानुपपत्तेरितिभाव. ।

तत्र दृष्टान्तमाह—" प्रकृष्ट " इति, । तमेव विभजते—" यथा " इति ।

ननु तत्रापि लक्ष्यैकत्वेन प्रकृष्टशब्दमात्रमेवास्तु कृतमितरेणे-त्यत आह—" सखलु " इति । अस्तु तर्हि प्रकाशमात्रमि-त्यत आह—" नापि " इति, । किं तर्हि लक्ष्यस्वरूपप्रतिपत्तये

मू०—तदनेनापेक्षितचन्द्रलक्षणाभिधायिना स एव विशेष आख्यातव्यः यत्रैव प्रकृष्टप्रकाशपदलक्ष्ययोः परस्परं चन्द्रस्वलक्षणाच्चाभेदः,

तथा चाप्रकृष्टखद्योतादिव्यवच्छेदेन प्रकृष्टपदस्याप्रकाशसन्तमसादिव्यवच्छेदेन प्रकाशपदस्य च प्रवर्त्तमानस्य न वैयर्थ्यं, नाप्यखण्डार्थताऽभावः, चन्द्रप्रातिपदिकार्थमात्रप्रतिपादनाय पदप्रयोगात्, ।

प्रतिपित्सितं खल्वसौ प्रतिपादयन्प्रतिपादयिता प्र-

---

टी०—वक्तव्यमित्यतआह—" तदनेन " इति । विशेषं दर्शयति—" यत्रैव " इति, ।

ननु प्रकृष्टप्रकाशपदवाच्ययोर्विशिष्टतया कथमखण्डार्थत्वमित्यत आह—" प्रकृष्टप्रकाशपदलक्ष्ययोर् " इति, । तयोः परस्पराभेदेपि चन्द्रस्वलक्षणाद्भेदेऽखण्डार्थता न स्यादिति विशिनष्टि—" चन्द्रस्वलक्षणाच्च " इति, । तावता कथमुक्तदोषपरिहारेणाखण्डतासिद्धिरित्यत आह—" तथाच " इति, ।

ननु तत्तद्गुणप्रतिपादनेपि तदितरव्यवच्छेदसिद्धेः कथमखण्डार्थतेति, तत्राह—" चन्द्रप्रातिपदिकार्थ " इति, ।

भवतु तन्मात्रप्रतिपादनाय प्रयोगस्तथापि गुणपरत्वं किं न स्यादित्यत आह—" प्रतिपित्सितम् " इति, । विपक्षे दोष-

मू०-ष्टुरनवधेयवचनतामवलम्बेत अपरथा त्वबुभुत्सितावबोधने सत्यनवधेयवचनतया नायं प्रेक्षावानित्युपेक्षणीयतापत्तेः,

प्रतिपित्सितं चानेन चन्द्रस्वलक्षणमात्रमिति तदेव प्रतिपादनीयं तथा चाखण्डार्थतासिद्धिः, ।

तदेवं प्रयोगपदवीमुपारोहति—विज्ञानानन्दादिवाक्यमखण्डार्थपरं लक्षणवाक्यत्वाद् यदित्थं तत्तथा यथा प्रकृष्टप्रकाशश्चन्द्र इति वाक्यं यथा वा पृथुबुध्नोदराकारः कुम्भ इति ।

---

टी०-माह—"अपरथा" इति, । अनाकाङ्क्षितार्थप्रतिपादनादप्राप्तकालनिग्रहापत्तिरित्यर्थः ।

ननु गुणविशिष्टमेव प्रतिपित्सितमिति तत्राह—"प्रतिपित्सितं च" इति, ।

अयमभिसन्धिः—न वयमेतद्वाक्यस्य संसृष्टस्वार्थत्वमेव क्वापि नास्तीति ब्रूमः, नापि चन्द्रोऽखण्डार्थ इति, किन्तु प्रातिपदिकार्थमात्रबुभुत्सायामयं प्रयुक्तः पदसन्दर्भः परिहृत्य संसर्गपरत्वं तन्मात्र एव पर्यवस्यतीति ।

दृष्टान्तं प्रमाध्योक्तेर्थेऽनुमानं रचयति—"तदेवम्" इति, अखण्डार्थपरं=संसर्गागोचरप्रमितिजनकं, संसृष्टार्थपरवाक्येनानैकान्तिकतापरिहाराय ल(१)क्षणाविशेषणं, तन्मात्राभिधाने(२) च गन्धादिषु व्यभिचारः, तेषां लक्षणत्वेपि शब्दरूपत्वाभावेनाऽखण्डार्थपरत्वाभावाद्, ।

---

(१) हेतौ लक्षणमिति विशेषणमित्यर्थः, ।

(२) लक्षणत्वादित्येतन्मात्रोपादाने चेत्यर्थः, ।

मू०—नचायं साध्यविकलो दृष्टान्तः, प्रकृष्टादिपदानामप्यखण्डार्थवृत्तिताया अनन्तरमेवोपपादितत्वाद्, ।

आचार्यवाचस्पतिमिश्राः पुनर्—अण्मतुबिनिसमासविशेषाणां सन्निहितविशेषाभिधायितामङ्गीकुर्वाणा वैश्वदेव्यामिक्षा दण्डी कमण्डलुमानित्यादयोऽप्यखण्डार्थवृत्तितायामुदाहार्या इति मन्यन्ते, ।

---

टी०—साध्यविकलतामाशङ्क्य परिहरति—"नच" इति, ।

नन्वेवमपि साध्यविकलो दृष्टान्तस्तदितरव्यावृत्तेस्तत्तच्छब्दवाच्यत्वस्यैव वा प्रतिपादनाद्, गन्धवती पृथिवीत्यादिलक्षणवाक्यस्यापि सखण्डार्थत्वादिति चेद्, मैवं, व्यावृत्तिवाचकशब्दाभावेन साक्षाद् व्यावृत्तिपरत्वाभावात्, तद्धर्मनिरूपणेन लक्ष्यस्वरूपप्रतिपादनेऽर्थाद् व्यावृत्तिसिद्धौ सामर्थ्यलभ्यतया शब्दार्थत्वाभावाद्, अन्यथा गवानयनवाक्ये तुरगानयनव्यावृत्तेरपि शब्दार्थत्वापाताद्, वृद्धव्यवहारादेव शब्दार्थयोर्वाच्यवाचकसिद्धौ लक्षणवाक्यानपेक्षणात्, लक्षणवाक्येनैव वाच्यवाचकभावाऽवगमे लक्षणवाक्यस्थपदानामपि तदवगमसिद्धौ लक्षणान्तराश्रयणेनानवस्थापातात्, आप्तोपदेशवद्वस्तुस्वरूपमात्रपरेणैव लक्षणवाक्येनार्थादितरव्यावृत्तिरिति स्वीकारस्यैव युक्तत्वादिति भावः ।

न केवलं लक्षणवाक्यानामेवाखण्डार्थत्वमन्यत्रापि · तदस्तीति वाचस्पतिमिश्रमतमाह—" आचार्य्य " इति, । चित्रा गावो यस्येति बहुव्रीहिसमासस्यान्यपदार्थप्राधान्येन देवदत्तमात्रपरत्वाच्चित्रगोपदार्थपरत्वे चान्यपदार्थप्रधानता ऽभावे बहुव्रीहिसमासव्याकोपात्, विश्वेदेवा देवता अस्याः कमण्डलुरस्य दण्डोस्येति विग्रहाद् · अण्-मतुबादिप्रत्ययानामपि बहुव्रीहिसमानार्थत्वेन व्यक्तिमात्रपरत्वादखण्डार्थत्वमित्यर्थः, पाठक्रमव्यत्ययेन वैश्वदेवीत्याद्युदाहरणम्, ।

मू०—कश्चायं तैर्थिक इत्थमाचक्षीत—अपर्यायानेकपदाना-मखण्डार्थवृत्तितानुपपन्नेति, न तावद्वैयाकरणः, तेन स्वयमेव प्रातिपदिकप्रथमाविभक्त्योरेकरसार्थवृत्तिताभ्युपगमाद्, नापि सौगतेनेत्थं पर्यनुयुज्येत, विज्ञानं भिन्नमिति वाक्ये विज्ञानभिन्नशब्दयोरखण्डार्थताभ्युपगमाद्, नो खलु विज्ञानादन्यस्तद्भेदोस्ति येन भिन्नपदस्यार्थातिरेकोवसीयेत, अत एव न गुरुमतानुसारिणोप्येवं पर्यनुयोगावकाशः, समानन्यायत्वात्, ।

———

टी०—अखण्डवाक्यार्थस्य सर्वतन्त्रासिद्धान्ततां दिदर्शयिषुस्तत्तत्परीक्षकसम्मतिं दर्शयितुमाह—"कश्चायम्" इति,। 'तेन स्वयमेव' इति, यद्यपि लिङ्गपरिमाणवचनेषु प्रथमातिरिक्तार्थैव तथापि प्रातिपदिकार्थे साऽनतिरिक्तार्था, नच प्रथमाविभक्तेः प्रातिपदिकसमानार्थत्वे वैयर्थ्यमेव स्यादिति वाच्यं, शब्दसाधुत्वसिद्ध्यर्थमपि तत्प्रयोगोपपत्तेरिति भावः।

तदेव कथमित्यत आह—"नोखलु" इति, । भेदस्य विज्ञानस्वरूपानतिरिक्ततया भिन्नशब्दस्यापि विज्ञानमात्रपरस्याऽभेदव्यवच्छेदेन स्वार्थिकताया वक्तव्यत्वादिति भावः, ।

उक्तं न्यायं स्वरूपभेदवादिमतान्तरेष्वतिदिशति—"अत-एव" इति, । धर्मिव्यतिरिक्तो भेद इति मतेप्युक्तन्यायमतिदिशति—

मू०—कणभक्षाक्षचरणकुमारिलपक्षपातिनोपि स्वरूपभेद-वादिनः प्रागुन्नीतन्यायेन शिक्षणीयाः,

धर्मभेदवादिनस्तु भेदो भिन्न इत्युदाहरणेन, न खलु भेदस्य भेदान्तरमस्ति येन भेदो भिन्न इत्यर्थाति-रेको वर्ण्येत, तस्मात्सर्वतन्त्रराद्धान्तोयमखण्डवाक्यार्थ इति सिद्धम् ।

एवं च विज्ञानानन्दपदयोरैकार्थ्यानुपपत्तावश्याभ्यु-पेयमेवैतदानन्दादिगुणकं ब्रह्म वेदान्तवेदनीयमित्यपास्तम्,।

'एकमेवाऽद्वितीयं नेहनानास्ति किं चन' इति ब्रह्म-णि निखिलभेदप्रतिषेधान्नानन्दादिभिर्गुणगुणिभावो

---

टी०-" धर्म " इति, । उदाहरणेन-शिक्षणीया इति पूर्वेणान्वयः ।

ननु तत्रापि भेदान्तरविशिष्टत्वमेव किं नाभिधीयत इत्यत आह—" नखलु " इति । भेदस्य भेदान्तरस्वीकारेऽनवस्थाना-दू,एतदतिक्रमे च भिन्नशब्दस्यानेकेषु प्रवर्त्तमानस्यैकप्रवृत्तिनिमित्ता-श्रयणे स्वाश्रितभेदस्यावर्तमानतया तत्र भिन्नशब्दस्य भेदनिमित्त-कत्वायोगादात्मनि वृत्तिविरोधेन स्वीकृतोपाधिनिमितकत्वाभावा-दखण्डार्थताया अवश्यवक्तव्यत्वादिति भावः ।

एवमखण्डार्थत्वसम्भवादानन्दादिपदानां गुणपरता न स्वी-करणीयेत्याह—" एवञ्च " इति । निखिलभेदनिराकरणादप्ये-वमित्याह— " एकमेव " इति ।

मू०—ब्रह्मणस्तस्य भेदापेक्षत्वात्, नो खल्वन्तरेण भेदमेकस्मिन्नेव तत्सम्भव इत्युक्तमायुष्मतैव, नच भेदतदभावयोरेकोपाधावुपपत्तिः येन निषेधश्रुतिर्गुणगुणिभावश्चोपपद्येत, भावाभावयोरेकताऽनुपपत्तेः, न हि यत्रैव कुम्भस्तत्रैव तदभावो युक्तिमान्, तस्मादखण्डार्थपर्यवसायीनि विज्ञानानन्दादिपदानीति सिद्धम्, ।

एवं च तत्त्वमसीत्यपि जीवब्रह्मतादात्म्यबोधपरं वाक्यमखण्डार्थनिष्टमेव सोयं देवदत्त इति वाक्यवत् ।

तत्र हि पदत्रयस्यैकस्मिन्नेव देवदत्ते पर्यवसानमवसीयते, तथा च प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै

---

टी०—मास्तु भेदस्तथापि गुणगुणिभावः किं न स्यादित्यत आह—" तस्य " इति, । तदेव स्फुटयति—" नोखलु " इति, । अस्तु तर्हि भेदाऽभेदाभ्यां गुणगुणिभाव इति तत्राह—" नच " इति, । उपपत्तौ को लाभस्तत्राह—" येन " इति, । तदेव स्फुटयति—" नहि " इति । तदङ्गीकारे जगति विरोधोच्छेदः स्यादिति भावः ।

अवान्तरवाक्यस्याखण्डार्थतामभिधाय महावाक्यस्यापि तामाह—" एवञ्च " इति, ।

दृष्टान्तं प्रपञ्चयति—" तत्रहि " इति, । तदेव कथमित्यत आह—" तथा च " इति, ।

मू०—प्रतिपादन्नाह सोयं देवदत्त इति, न च तत्र तद्देशकालयोरेतद्देशकालयोस्तदवच्छिन्नयोर्वा देवदत्तरूपयोरैक्यं प्रत्यभिजानाति, किन्तु सोयमित्यवच्छिन्नरूपद्वयोपलक्षितः प्रत्यभिज्ञागोचरभावमाचरति, प्रत्यभिज्ञातं चार्थं परस्मै विशिष्टाभिधायिपदाभ्यां स्वार्थैकदेशपरित्यागेनैकदेशलक्षणया प्रतिपादयति ।

---

टी०—ननु तत्रापि विशिष्टयोरेकत्वं प्रत्यभिज्ञागोचर इति तत्राह—"नच" इति, । तदेतद्देशकालयोरिति दृष्टान्तकथनं, यथा तदेतद्देशकालयोरेकत्वं न सम्भवति विरोधादेवं तद्विशिष्टयोरपि भेदेन न तत्प्रत्यभिज्ञागोचरत्वमित्यर्थः ।

तर्हि किं प्रत्यभिज्ञागोचर इति तत्राह—"किन्तु" इति ।

भवतु तथापि वाक्यस्य तत्परत्वं कथमिति तत्राह— "प्रत्यभिज्ञातम्" इति, ।

ननु तद्देशकालोपलक्षितस्यैतद्देशकालविशिष्टेनाऽभेदप्रतिपादनात् तत्रापि सखण्डार्थतैवोभयोपलक्षणायां गौरवादिति चेन्मैवं, तत्कालोपलक्षितेनैतत्कालविशिष्टस्याभेदे सति तद्देतत्कालविशिष्टस्य प्रागपि सत्त्वप्रसङ्गाद्,नचैतत्कालविशिष्टत्वधर्मप्रतिपादनेप्यर्थादभेदः सिद्ध्यतीति वाच्यं साक्षादभेदप्रतिपादने सत्यार्थिकस्वीकारस्याऽयुक्तत्वाद्, बुद्धिलाघवेन बुभुत्सिताभेदप्रतिपादनेन गौरवदोषस्यापहस्तितत्वादितिभावः ।

लक्षणायामपि न जहल्लक्षणेत्याह—"स्वार्थैकदेश" इति,।

मू०—तथा च तत्त्वमसिवाक्येपि तत्त्वंपदार्थयोर्विरुद्धांशपरिहाराय जहदजहल्लक्षणया जीवपरमात्मतादात्म्यपर्यवसायो नानुपपन्नः,

तथाच प्रयोगः—तत्त्वमसिवाक्यमखण्डार्थनिष्टमकार्यकारणद्रव्यवर्त्तित्वे सति समानाधिकरणत्वात्सोयं देवदत्त इति वाक्यवदिति, ।

तस्मात्तत्त्वमसीत्यादिवाक्याज्जीवपरात्मनोरैकात्म्यगोचरं ज्ञानं सिद्धं मोक्षनिबन्धनम् ।

ननु भोः क एष मोक्षो नाम, केचिदाहुर्—उत्त-

---

टी०—दार्ष्टान्तिकमाह—" तथा " इति, । पारोक्ष्यसद्वितीयत्वादिविरुद्धांशपरिहारेणाविरुद्धांशलक्षणया एकत्वमभिधीयतं इत्यर्थः ।

नीलमुत्पलमित्यादिगुणगुणिभावसामानाधिकरण्ये व्यभिचारनिवारणार्थं द्रव्यपदं, मृद्घटादिसामानाधिकरण्यव्यवच्छेदार्थं चाकार्यकारणपदम्, अकार्यकारणनिष्टत्वे सति सामानाधिकरण्यादित्यभिधीयमाने गौः शावलेय इत्याकृतिव्यक्तिसामानाधिकरण्ये व्यभिचारस्तन्माभूदिति द्रव्यपदम्, अकार्यकारणनिष्ठत्वस्य द्रव्यविशेषितस्य च शावलेयस्य गोत्वं देवदत्तस्य गौरित्यादिवाक्येषु व्यभिचारस्तत्परिहारार्थं सामानाधिकरण्यादिति ।

तदेवं शोधिततत्त्वंपदार्थयोर्वाक्यादेकत्वज्ञानमुपपन्नमित्युपसंहरन्नुतरवादार्थमुपक्षिपति—" तस्माद् " इति, ।

अविद्यानिवृत्तिलक्षणमोक्षप्रसाधनाय मतान्तराणि निराचिकीर्षुराकाङ्क्षापूर्वं तानि कथयति—" ननु " इति, । माध्यमिकमतमाह—" केचिद् " इति, । उत्तराधरभावेन=उत्कर्षापक-

मू०—राधरभावेन निरन्तरोत्पादक्लेशादिदोषदूषितबोधसन्ततिविच्छेदलक्षणो मोक्ष इति,

तदाहुः 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिन" इति ।

अपरे पुनर्भावनाप्रकर्षपरिलब्धपरिशुद्धचित्तसन्तानम्, अपरे तु बोधादिनिखिलवैशेषिकगुणोच्छेदेन क्षेत्रज्ञस्य स्वरूपावस्थानम्, अन्ये तु प्रलीननिखिलोपाधेः क्षेत्रज्ञस्य सततोर्द्ध्वगतिलक्षणम्, ।

---

टी०—र्षभावेन निरन्तरमुत्पादो येषां बोधानां ते तथा क्लेशा =रागद्वेषमोहा, आदिशब्दाद्विषयाकारवासनाः, ते च ते क्लेशादिदूषिताश्च, तेषां बोधानां सन्तानं तस्योच्छेद इति यावद्, उत्कर्षापकर्षभावेन निरन्तरोत्पादवन्तो ये क्लेशादयस्तद्दूषितबोधसन्तानस्योपरम इति वा । बद्धस्यात्मनो बन्धेन सह नाश एव मोक्ष इत्यर्थ. ।

तायिनो=विस्तारिणो बोधसन्तानस्य निर्बाणं=निवृत्तिः स एव मोक्ष इति यावत् ।

योगाचारमतमाह—" अपर " इति, । क्षणिकदुःखशून्यस्वलक्षणभावनाप्रकर्षेण जनितः परिशुद्ध =विषयाकाराद्युपप्लवशून्यो यश्चित्तसन्तानस्तस्योत्पाद एव मोक्ष इत्यर्थ., ।

नैय्यायिकमतमाह—" अपरे तु " इति, । आदिशब्देन सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारा विशेषगुणा गृह्यन्ते, संख्यादिसामान्यगुणानां मुक्त्यवस्थायामपिभावाद् वैशेषिकग्रहणम, ।

जैनमतमाह—" अन्येतु " इति, । प्रविलीना निखिलाः शरीरेन्द्रियकर्मप्रभृतय उपाधयो यस्य स तथा तस्येति यावत् ।

मू०—अक्षयशरीरादिलाभमपरे, प्रकृतिपुरुषविवेकदर्शनात्तदविवेकाविनिवृत्तौ पुरुषस्य स्वरूपेणावस्थानमेके ।

नित्यनिरतिशयसुखाभिव्यक्तिर्निःशेषदुःखोच्छेदलक्षणमाचार्याः, स पुनरविद्यास्तमय एवेति, ।

तदाह स्म "अविद्यास्तमयो मोक्षः सा संसार उदाहृता" इति ।

न तावदाद्यः पक्षः प्रेक्षावतां चित्तमनुरञ्जयति, तथा सति मोक्षस्य पुरुषार्थभावाभावात्, तथाहि सन्तानोछेदलक्षणो मोक्षः सन्तानिनां पुरुषार्थः,

---

टी०—वैष्णवकापालिकयोर्मतमाह—"अक्षय" इति, । साङ्ख्ययोगमतमाह—" प्रकृति " इति, । शरीरेन्द्रियादिभावेन परिणतायाः प्रकृतेः पुरुषस्य विवेको न ज्ञायते तन्निबन्धनश्चायमहं कर्ता सुखी दुःखीत्यादिव्यवहारः, प्रकृतिविविक्तपुरुषदर्शनेन तदविवेकनिवृत्तौ पुरुषस्य स्वरूपेणावस्थानं मोक्ष इत्यर्थः ।

सिद्धान्तमतमाह—" नित्य " इति, । संप्रसादावस्थायामपि सुखस्य ब्रह्मस्वरूपतया तादृशत्वात् ततो विशिनष्टि—" निःशेष " इति, । तावन्मात्राभिधाने च वैशेषिकमतादविशेषोऽतो नित्येत्युक्तम्, तथापि न्यायभूषणकारमतादविशेषस्तत्राह—" सपुनर् " इति, । तत्र मण्डनमिश्रवचनमुदाहरति—"तदाहुः स्म " इति, । सा=अविद्या, ।

पुरुषार्थत्वाभावभावं दर्शयितुं विकल्पयति—" तथा हि "

मू०-किं वा सन्तानस्य, न तावत्सन्तानिनां, तेषां स्वरसपरिनिर्वाणेन मोक्षफलसम्बन्धाभावाद्, नापि सन्तानस्य, स्वोच्छेदस्यापुरुषार्थत्यात्, को हि नाम सर्वतः प्रेयस आत्मन उच्छेदं कामयते, नच सन्तानिभ्योतिरिक्तः सन्तानो नाम प्रमाणवान् यस्य बन्धमोक्षाववकल्पेत, नच सन्तानिन एव सन्तानः, तेषां प्रत्येकं सन्तानधीगोचरभावाभावात् प्रागुक्तदोषानुषङ्गाच्च ।

नापि सन्तानिनामेव हेतुफलभावः सन्तानः, तस्य दुर्ज्ञानत्वात्, न तावत्प्रत्यक्षं तत्र प्रक्रमते स्वरूपमात्रपरिनिष्ठत्वात्, साक्षात्कृतिर्हि प्रत्यक्षं, तच्च स्वलक्षणमा-

---

टी०-इति, 'स्वरसपरिनिर्वाणेन' इति, हेत्वन्तरानपेक्षतया स्वोत्पत्त्यनन्तरं विनाशेन, सन्तानस्यैवात्मत्वात्तदुच्छेदस्यापुरुषार्थत्वादिति ।

द्वितीयं दूषयति—" नापि " इति, तदेव साधयति—" को हि " इति, सन्तानोपि भेदाभेदविकल्पेन दुर्निरूप इत्याह—" नच " इति, 'प्रागुक्त'इति, स्वरसपरिनिर्वाणेन मोक्षफलसम्बन्धाभावादित्यर्थः ।

अस्तु तर्हि सन्तानिनां कार्यकारणभावः सन्तान इति, तत्राह—" नापि " इति, । किमसौ प्रत्यक्षेण गम्यते किं वानुमानेनेति विकल्प्याद्यं दूषयति—" न तावद् " इति, । वैभाषिकेणेव वाह्यार्थानभ्युपगमेन स्वरूपमात्रनिष्ठत्वादित्यर्थः ।

स्वरूपमात्रनिष्ठत्त्वं दर्शयितुं प्रत्यक्षस्य स्वरूपमाह-"साक्षात्कृतिर्" इति, । सामान्यस्यावस्तुत्वेन स्वलक्षणमात्रगोचरमिति यावत्, ।

मू०—अगोचरं, तथा च संवेदने स्वसंवेदनमेव प्रत्यक्षं, न च तत्पूर्वोत्तराः संविदः समाकलयितुमलमतः कथं तदधीननिरूपणमपि हेतुफलभावं तासामाकलयेत्, तत एव न कस्य चित्तेन प्रतिबन्धोपि यस्मादनुमानतस्तदवसायः, तथापि वैकल्पिकोऽयं सन्तानस्तत्त्वाऽन्यत्वाभ्यामनिर्वाच्यः,तस्यैव च बन्धमोक्षाविति चेत्, तत्किमिदानीं बन्धदशायामिव मोक्षदशायामप्यनिवृत्तिः कल्पनाया येन काल्पनिकमेवाकारं मोक्षभाजमाचष्टे भवान्, अद्धेति चेद्,

---

टी०—ततः किमित्यत आह—" तथाच " इति,। तदेव पूर्वोत्तरज्ञानविषयं किं न स्यादित्यत आह—" नच तद् " इति,।

पूर्वोत्तरज्ञानानां स्वस्वमात्रविषयत्वादित्यर्थः,।

संविदामनाकलनेपि हेतुभावः किमिति न गृह्यत इत्यत आह—" कथम् " इति,। नन्वनुमानेन संगृह्यत इति द्वितीयं दूषयति—" तत एव " इति,। प्रतिबन्धः=अविनाभावः, हेतुफलभावस्याऽप्रत्यक्षतया तेन व्याप्तिग्रहणाभावादनुमानग्राह्यता न सम्भवतीत्यर्थः। यस्मादविनाभावादनुमानतो लिङ्गेन तस्य हेतुफलभावस्यावसायः स प्रतिबन्धो न गृह्यते इति यावद्,।

सन्तानिभ्यो भेदेनाभेदेन च दुर्निरूपस्य विकल्पमात्रविषयस्य सन्तानस्य बन्धमोक्षाविति शङ्कते—" तथापि " इति,। गूढाभिसन्धिरुत्तरमाह— " तत्किम् " इति,। तदनुवृत्तिः केनोक्तेति, तत्राह—"येन" इति,। भवतु तथैवेति शङ्कते—"अद्धा" इति,। कल्पनाया मोक्षदशायामप्यनुवर्त्तमानतया तन्मात्रशरीरस्यापि सन्तानस्य सत्त्वान्न तदुच्छेदो मोक्ष इति।

मू०—हन्त तर्हि सन्तानोच्छेदो मोक्षः, तथासति सन्तानस्य फलिनोऽभावाद् न चान्तरेण फलिनं फलं स्याद्, नचाफलार्था प्रवृत्तिः प्रेक्षावतामित्यसमञ्जसपक्षानिक्षेपक्षम एवायं पक्षः ।

परिशुद्धचित्तसन्तानोत्पादेपि प्राचीनसन्तानोच्छेदान्नास्य कश्चित्पुरुषार्थः, परिशुद्धचित्तसन्तान एव पुरुषार्थ इति चेत्, तथापि यस्य प्रवृत्तिर्मोक्षाय न तस्य कश्चित्पुरुषार्थ इति सुनिरूपितो मोक्षः, मोक्षदशायामपि च सन्तानपरिकल्पनायां क्लेशपरिकल्पनापि दुर्वा-

---

टी०—स्वाभिसन्धिमुद्घाटयति—" हन्ततर्हि " इति, । तदुच्छेद एव किं न स्यादित्यत आह—" तथासति " इति, । मास्तु फलिसत्त्वमिति तत्राह—" नचान्तरेण " इति, । फलमपि मा भूदित्यत आह—" नचाऽफलार्था " इति, ।

योगाचारमते विशुद्धसन्तानोत्पादे प्राचीनसन्तानस्य किमुच्छेदः किं वा नेति विकल्प्याद्ये दोषमाह— " परिशुद्ध " इति, । शुद्धसन्तान एव सम्भविष्यतीति शङ्कते—" परिशुद्ध " इति, । बन्धमोक्षयोर्वैय्यधिकरण्यापाताद्, बन्धविच्छेदपर्यायस्य तस्मिन्नसम्भवाच्चेति परि हरति—" तथापि " इति, । द्वितीये दोषमाह—" मोक्षदशायाम् " इति, । विशुद्धचित्तसन्तानो मोक्ष इत्येतदेव न घटते तत्रापि सन्तानस्य पूर्ववत्कलपनामात्रशरीरतया मोक्षदशायामपि सन्ताननिर्वाहककल्पनाऽनिवृत्तौ क्लेशादिकल्पनाऽनिवृत्तेरिति विकल्पद्वयमुपेक्ष्य वा स्वातन्त्र्येण दूषणमा-

मू०—रा एव, वासनातो हि कल्पना, तत्त्वपरिभावनाव-शाच्च वासनोच्छेदः, सा चेत्संसारवासनां नोच्छिन्द्यान् नतरां रागादिवासनां, तथा च संसारानुबन्ध एवेत्यविचारितरमणीय एवायं मोक्षः ।

तृतीयोपि मोक्षप्रकारो न पुरुषार्थगन्धमनुभवेद्, दुःखोच्छेद एव परमपुरुषार्थ इति चेत् ।

कुतः पुनर्निखिलसुखोच्छेदादपुरुषार्थोपि न भवेत्, तथाच समव्ययफलत्वान्न मोक्षाय प्रेक्षावतां प्रवृत्तिः,

उक्तं हि—'व्यसनानि दुरन्तानि समव्ययफलानि

---

टी०-ह—"मोक्षदशायाम्" इति, । कथमित्यत आह—"वासनातोहि" इति, । वासनातत्सन्ततिपतितपूर्वज्ञानं कल्पना तज्जन्यभ्रमज्ञानमिति यावत्, स्थायिवादिवदतिरिक्तसंस्कारानङ्गीकारात्, । ततः किमित्यत आह—" तत्त्व " इति, । तथापि कथं क्लेशपरिकल्पनेत्यत आह—" साचेद् " इति, । तत्त्वज्ञानस्य भ्रमाविरोधित्वे सन्तानभ्रमोपि न निवर्त्तते अनुवृत्ते रागादिवासनापि न निवर्त्तत इत्यर्थः ।

वैशेषिकमोक्षं दूषयति—" तृतीयोपि " इति, । आत्यन्तिकदुःखनिवृत्तिरस्ति पुरुषार्थ इति शङ्कते— " दुःखोच्छेद " इति, । तथापि सुखस्याभावेन समव्ययफलत्वादपुरुषार्थता दुर्वारेति परि हरति—" कुतः पुनर् " इति, । ननु दुःखाभावात्पुरुषार्थताप्यस्तीति तत्राह—" तथाच " इति, ।

उक्तेर्थे नीतिशास्त्रमुदाहरति—" उक्तं हि " इति, दुर

मू०—च, अशक्यानि च वस्तूनि नारभेत विचक्षण' इति,।

नच दुःखपरिहारमात्रप्रयोजना प्रवृत्तिः क्वचिद् दृष्टचरी, कण्टकादिदुःखपरिहारोपि हि दुःखे सति निरवद्यसुखोपभोगसम्भवात्सुखोपभोगार्थ एवेत्यदृष्टान्तः,

किं च न दुःखाभावोप्यसंवेद्यः पुरुषार्थः, विज्ञा-

---

टी०—तानि=दुःखोत्तराणि, समे व्ययफले च तानि समव्ययफलानि, अशक्यानि=साधकप्रयत्नासाध्यानि,।

ननु संसारसुखस्यापि दुःखशबलतया विषसंपृक्तमधुवदपुरुषार्थतया तत्परिहारमात्रेणापि भवति प्रवृत्तिरित्यत आह—" नच " इति। सुखानुषक्तदुःखपरिहारस्य लोके पुरुषार्थत्वादर्शनादित्यर्थः। क्वचिदेवमपि दृश्यत इत्यत आह—" कण्टकादि " इति,।

नच सुखमपि दुःखपरिहारशेषमिति विपर्ययोपि वक्तुं सुकर इति वाच्यं सुखस्य दुःखाभावजनने तत्प्रतीतौ चानावश्यकत्वात्, सत्यपि दुःखे तदनुभवे चाकस्मादुपनतविपञ्चीस्वरश्रवणादौ सुखोत्पत्तेः, न च सन्तापवतः शीतह्रदे निमग्नार्द्धकायस्य सुखोत्पत्तेर्दुःखाभावोपि न सुखशेषः स्यादिति वाच्यं, सुखस्य दुःखाभावैकव्यङ्ग्यत्वनियमानङ्गीकाराद्, अनुभूयमानो दुःखाभावः सुखमभिव्यनक्त्येवेति परमभ्युपगमाद्, नच कण्टकादिदुःखनिवृत्तौ वैषयिकसुखस्याभावादन्यस्यानिरूपणादयमपि नियमो न सम्भवतीतिवाच्यं, आत्मस्वरूपभूतसुखस्य सद्भावादात्मनः सुखस्वरूपतया परप्रेमास्पदत्वेन प्रागेव साधितत्वादितिभावः।

मुक्तिदशायां विज्ञानाभावेनाननुभूयमानत्वाच्च न दुःखाभावः पुरुषार्थ इत्याह—" किञ्च " इति,।

मू०—नादिविशेषगुणोच्छेदे च न तत्संवेदनमिति न मूर्च्छाद्यवस्थातो मोक्षावस्थायां विशेषमुत्पश्यामः, ।

यथोक्तं 'दुःखाभावोपि नावेद्यः पुरुषार्थतयेष्यते, नहि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीर्' इति ।

यदपि मतम् 'असंवेद्यमानोपि दुःखाभावः सौषुप्तदुःखाभाव इव पुरुषार्थ' इति, तदपि न युक्तं, तत्र संवेदनाभावे प्रमाणाभावाद्, अन्यस्य खल्वभावः संवेदनेन गृह्यते संवेदनस्याभावः केन गृह्येत, यदि संवे-

---

टी०—ननु तत्रापि चरमजन्मनि योगप्रभावादनागतदुःखनिवृत्तेरपरोक्षतयाऽनुभूयमानत्वं, नच यावद्दुःखनिवृत्तिसत्त्वमनुभूयमानत्वं, तस्य च कण्टकादिदु.खनिवृत्तावनुपलम्भेनापुरुषार्थत्वानापादकत्वाद्दिति चेद्, एतस्यामवस्थायां पुरुषस्य कैवल्यं भवतीश्वरस्यानीश्वरस्य वेति योगशास्त्राद् योगस्यानियतत्वादनागतदुःखनिवृत्तिसाक्षात्कारस्यासम्भवेनापुरुषार्थत्वस्य दुरपह्नवत्वादितिभावः ।

अननुभूयमानस्यापि दुःखाभावस्य पुरुषार्थत्वं क्वचिदस्त्येव तथा प्रकृतेपि किं न स्यादित्यत आह—" यदपि " इति, । त्वन्मते ज्ञानाभावस्य तत्र निश्चेतुमशक्यत्वेन दुःखाभावस्याऽसम्वेद्यमानताऽसिद्धेति परिहरति—" तत्र " इति, । सम्वेदनमेव तद्ग्राहकं किं न स्यादित्यत आह—" अन्यस्य खलु " इति, । तर्हि प्रत्यक्षेण गम्यते किं वानुमानेनेति विकल्प्याद्यं दूषयति—" यदि " इति, । द्वितीयं दूषयति

मू०—दनेनैव कथं तदा सर्वसंवेदनाभावः, तथा च सर्वसंवेदनाभावेन न सम्बन्धोपि लिङ्गस्य प्रतिपत्तुं शक्यत इति लिङ्गतोपि न सुषुप्तस्य सर्वज्ञानाभावावगतिः,

किञ्च सुखेनाहमस्वाप्समित्यनुस्मृतेः सुखं तत्संवेदनं च सुषुप्तस्याभ्युपगन्तव्यं, पूर्वदिनेपि तदभ्युपगमे स एव न्यायः।

तथा च सुखानुभवः स्वापेपि पुरुषार्थो न दुःखाभावमात्रमिति नायं दृष्टान्तः।

दुःखस्मृत्यनुपलम्भात्तदनुभवाभावमनुमाय निर्दुःखो-

---

टी०—" तथाच " इति,। ननु न किञ्चिदवेदिषमित्युत्थितस्य परामर्शदर्शनादस्ति ज्ञानाभावस्यावगतिः, नचासौ साक्षिवेद्यस्तदा प्रतियोगिस्मरणाभावेनानुपपत्तेरिति चेद्, मैवम्, अभावविलक्षणाज्ञानस्य प्रतियोगिस्मरणानपेक्षत्वेन सुषुप्तौ साक्षिसिद्धस्य न किञ्चिदवेदिषमित्युत्थितस्य परामर्शे सति तदन्यथानुपपत्त्या तद्विरोधिज्ञानाभावस्येदानीमेव प्रतीयमानत्वादिति भावः।

सुषुप्तौ सुखस्य विद्यमानत्वाच्च न तत्र दुःखाभावमात्रं पुरुषार्थ इत्याह— " किञ्च " इति,। अनुस्मृतिः=परामर्शः, पूर्वदिनानुभूतं सुखं सुषुप्तौ परामृश्यत इत्यत आह—" पूर्वदिन " इति, ततः किमित्यत आह—" तथा च " इति,।

परामर्शान्यथासिद्धिमाशङ्कते—"दुःख" इति, उपेक्षणीयतृणाभूदिष्वनुतेष्वपि स्मृत्यभावेनानैकान्तिकत्वादयुक्तमेतदिति दूषयति–

मू०—हमस्वाप्समित्येनमर्थं सुखेनाहमस्वाप्समित्युपचरतीति चेद्, न, स्मृत्यभावस्यानुभवाभावसिद्धावनैकान्तिकत्वात्सुखानुभवस्मृतौ बाधाभावाच्च ।

तस्मान्न स्वापेष्यसंवेद्यदुःखाभावः पुरुषार्थः किन्तु प्रतिभासमानः परानन्द एवेति न मोक्षस्यापि सुखबोधवैधुर्ये पुरुषार्थतोपपत्तिः, तथा च मूर्च्छावस्थावत् स्वात्मोच्छेदवच्च न तत्र प्रेक्षावतां प्रवृत्तिः,

न खलु स्वरूपसतोप्यत्यंताप्रतिभासोऽभावाद्विशिष्यते,

---

टी०-"स्मृत्यभावस्य" इति, । मुख्येसम्भवत्युपचारकल्पना च न· युक्तेत्याह—"सुखानुभव" इति, न च दु·खेनाहमस्वाप्समिति परामर्शादात्मनो दुःखरूपतापि स्यादिति वाच्यं, तथा सति परप्रेमास्पदत्वविरोधादिति भावः ।

उपसंहरति—"तस्माद्" इति, । तथापि प्रकृते किमायातमित्यत आह—"इति न मोक्षस्यापि" इति, ।

फलितमाह—"तथाच" इति, ।

ननु स्वरूपस्य सत्त्वादात्मोच्छेदनिदर्शनमयुक्तमित्यत आह—"नखलु" इति, नच शास्त्रानुमानाभ्यामात्मनस्तदवस्थाविशिष्टस्य प्रतीयमानत्वात्कथमत्यन्ताप्रतिभास इति वाच्यं, कण्टकादिदुःखाभावदशायामिव निर्दुःखोहमस्मीति मुक्तौ प्रत्यक्षत· प्रतिभासाभावेन परोक्षतया तत्प्रतिभासस्य पुरुषार्थतानुपयुक्तत्वाद्

सू०–ननु तीव्ररोगाद्यभिभूताः स्वात्मोच्छेदार्थमपि प्रवर्त्तन्ते, नच तत्र शरीरोच्छेदार्था प्रवृत्तिरिति वाच्यं, तदतिरिक्तात्मप्रतिपत्तिशून्यानामात्मोच्छेदाभिसन्धिनैव प्रवृत्तेः, सत्यं, प्रवृद्धगदोन्मूलितनिखिलसुखानुषङ्गाद् दुःखमयीमिव मूर्त्तिमुद्वहंतस्तथा प्रवर्त्तन्तां संसारिणः पुनरैहिकामुष्मिकविविधानन्दभोगसम्भवे तत्साधन एव प्रवर्त्तेरन् न पुनर्निखिलसुखोच्छेदरूपे मोक्षे,

यथोक्तम्–"दुःखहानाय नो युक्तं सुखं दुःखात्मकं वरं, नहि कश्चित्पदार्थज्ञो मोहसिद्ध्यै प्रवर्त्तत' इति,

---

टी०–आत्मोच्छेदार्थमपि कश्चित्प्रवृत्तिरस्तीति शङ्कते–"ननु" इति,। आत्मनो नित्यत्वेन देहमात्रोच्छेदार्थतयैव तत्प्रवृत्तिरित्यत आह–"नच" इति,।

सुखलेशाभावेन दुःखमयदेहतया च तत्र तथास्तु ऐहिकामुष्मिकसुखोपभोगसम्भवे सति तत्परिहारेण पाषाणावस्थार्थां न प्रवृत्तिरिति परिहरति–"सत्यम्" इति,। अभियुक्तवाक्यमुदाहरति–"दुःखहानाय" इति, नित्यनिरतिशयसुखानङ्गीकारे दुःखहानाय नो युक्तं=दुःखहानार्था प्रवृत्तिरयुक्तेति यावद्, दुःखहाने सति सुखस्यापि निवृत्तेः। दुःखमिश्रितत्वेन सुखमपि दुःखपक्षनिक्षिप्तमिति तत्राह–"सुखम्" इति,। दुःखासंसृष्टसुखाभावेन दुःखात्मकं सुखमेव वरं=श्रेष्ठमिति यावत्। तत्र हेतुमाह–"नहि कश्चिद्" इति,।

मू०—तस्माद्विज्ञानादिविशेषगुणोच्छेदलक्षणापि मुक्तिर्न युक्तिमतीति सिद्धम् ।

मध्यमपरिमाणनिराकरणादेव च पुरुषस्य सततोर्द्ध्वगतिलक्षणोपि मोक्षः परास्तावकाशः ।

किञ्च—सततोर्द्ध्वगतिर्न मोक्षोपयोगिनी, बहुलायासहेतुत्वात्, प्रत्युतानर्थपक्षनिक्षेपमर्हति ।

अक्षयशरीरादिलाभोप्ययुक्तिमानेव, अस्मदादिशरीरवत् क्षयिष्णुतानुमानस्य कार्य्यताविशेषणाशक्यनिवारणत्वात्, ।

---

टी०—वैशेषिकमोक्षनिराकरणमुपसंहरति—" तस्माद् " इति, ।

जैनमोक्षं निराकरोति—" मध्यमपरिमाण " इति, । मध्यमपरिमाणत्वेऽनित्यत्वप्रसङ्गाद् नित्यत्वस्वीकाराच्च सर्वगतत्वे सिद्धे सततोर्द्ध्वगमनमयुक्तमित्यर्थः ।

पक्ष एवायमनुपपन्न इत्याह—" किञ्च " इति, ।

माहेश्वरादिमोक्षं निराकरोति—" अक्षय " इति, ।

'विवादाध्यासितं शरीरमनित्यं शरीरत्वादस्मदादिशरीरवद्' इत्यत्र मुक्तव्यवस्थातिरिक्तकार्य्यतादेरनुपाधित्वाद्, इत्यनुमानसम्भवाद्, आगमानां च तदीयानाम्—" अतोऽन्यदार्त्तम् " इति प्रत्यक्षश्रुत्या तदनुसारिपुराणवाक्यैश्च बाधितत्वादित्यर्थः ।

मू०—प्रकृतिपुरुषविवेकदर्शनाच्च पुरुषस्वरूपावस्थानलक्षणा मुक्तिर्न पुरुषार्थपक्षमवलम्बते, न खल्वन्तरेण सुखसाक्षात्कारमन्यः पुरुषार्थ इत्यावेदितं, नचानन्दरूपः पुरुषोऽभ्युपगतो येन स एव प्रकाशमानः पुरुषार्थः,

किं च यस्य बन्धस्तस्यैव तदभावो मोक्षो भवेद्, बन्धश्चाज्ञाननिमित्तः यस्मादुक्तं—"धर्मेण गमनमूर्द्धं गमनमधस्ताद्भवत्यधर्मेण, ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः" "वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद् रागाद्, ऐश्वर्यादविघातो विपर्ययात्तद्विपर्यास" इति ।

---

टी०—साङ्ख्यमोक्षमपाकरोति—"प्रकृति" इति, । ननु दुःखनिवृत्तेः कथं पुरुषार्थत्वाभाव इति तत्राह—"न खलु" इति,। वेदान्तिवर्तिकन स्यादित्यत आह—"नच" इति, ।

बन्धमोक्षयोर्वैय्यधिकरण्यादप्ययुक्तमेतदित्याह—"किञ्च" इति, । ततः किमित्यत आह—"बन्धश्च" इति,।

उक्तेर्थे साङ्ख्यसम्मतिमाह—"धर्मेण" इति, । नित्यनैमित्तिकादिजनितेन धर्मेणोर्द्धलोकप्राप्तिरिति यावत्, अधर्मेण च प्रतिषिद्धादिजनितेनाऽधस्ताद्गमनं=नरकप्राप्तिः, ज्ञानेन=सत्त्वपुरुषान्यताज्ञानेनापवर्गो, विपर्ययाद्=अग्रहणाद्बन्धो मोक्षविपरीतः, वैराग्यात्प्रकृतिलयलक्षणो मोक्षः, सात्विकरागस्य मोहतानिवृत्त्यर्थं राजसादिति ग्रहणं, राजसाद्रागात्संसारः=पुनः शरीरयोगः, ऐश्वर्यादणिमादिल-

मू०—तच्चाज्ञानरागादिकं बुद्धेरेवाभिमतं न पुरुषस्येति कथमन्यगतेनाज्ञानादिना पुरुषस्य बन्धमोक्षाद्युपपत्तिः, नहि तस्करापराधात्साधूनां बन्धो न्याय्यः, साधुकृताद्वा सुकृतात्तस्कराणां मोक्ष इति।

स्यादेतद्—उपचारेणैव पुरुषस्य बन्धमोक्षावुच्येते मुख्यतस्तु प्रकृतेरेव बन्धमोक्षौ, यस्मादुक्तं—रूपैः सप्तभिरेव बध्नात्यात्मानमात्मना प्रकृतिः, सैव च पुरुषस्यार्थं विमोचयत्येकरूपेण" इति।

न, निमित्ताभावादुपचारानुपपत्तेः, न च स्वस्वा-

———

टी०—क्षणादविघातः=सर्वस्मिन्नपि विषये ऽप्रतिहतत्वं, विपर्ययाद्=अनैश्वर्यात् तद्विपर्यासः=प्रतिहतत्वमिति यावद्, अत्र च विपर्ययादिष्यते बन्ध इत्यज्ञानस्य बन्धहेतुत्वमुक्तमिति मन्तव्यमिति, यथाह—" तच्च " इति, आदिशब्देनाधर्मावैराग्यानैश्वर्यतद्विपर्ययाणां संग्रहः, तदेव लोकदृष्टान्तेन साधयति—" न हि " इति,।

प्रकृतिनिष्ठावेव बन्धमोक्षौ पुरुषस्य तत्स्वामितयोपचर्येते ततो न वैयधिकरण्यमिति शङ्कते—" स्यादेतद् " इति। तत्र साक्षितया साङ्ख्यसमतवचनमुदाहरति—" रूपैर् " इति, धर्मेण गमनमूर्द्धम्—इत्यत्र प्रतिपादितरूपेषु धर्मवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्याख्यैः सप्तभिः स्वात्मानं स्वयमेव बध्नाति सैव च पुरुषस्य मुक्तत्वव्यवहारसिद्ध्यै ज्ञानाख्येनैकेन रूपेणात्मानमेव विवेचयतीत्यर्थः।

परिहरति—" न निमित्त " इति,। दृश्यस्य द्रष्टृशेषतया स्वस्वामिभावो निमित्तमित्याशङ्क्य पुरुषस्योदासीनतया सोपि न सम्भवतीत्याह—" नच " अनुदासीनस्य स्वामित्वेपि न दृष्टान्त

मू०—मिभावो निमित्तं, सर्वथोदासीनस्य स्वस्वामिभावे दृष्टान्ताऽप्रसिद्धेः, विपर्यये तु राजादिदृष्टान्तः सुलभ एव, स्वत्वमप्युपकारकस्यैव भृत्यादेर्दृष्टं, नच बुद्धिर्भवन्मते पुंसः स्वभावनिर्मलस्य कंचिदुपकारं कर्त्तुं शक्तेति।

नर्त्तकीवदात्मानं दर्शयन्त्येवोपकारिकेति चेद्, नैतदस्ति, नर्त्तकी रङ्गस्य स्वात्मसाक्षात्कारं तत्प्रणाड्या चानन्दविशेषं जनयन्ती भवत्युपकारिका, न च बुद्धिः पुंसः किञ्चिज्जनयति तस्य सर्वथाऽनुपकार्यत्वात्।

---

टी०—इत्यत आह—" विपर्ययेतु " इति,। चेतनस्य स्वामित्वं निराकृत्य दृश्यस्य स्वत्वं निराकरोति—" स्वत्वमपि " इति,। स्वत्त्वाकारपरिणता प्रकृतिरपि पुरुषस्योपकरोतीत्यत आह—" नच " इति,। अपरिणामित्वेनोपजनापायधर्मशून्यतयाऽऽत्मनो बुद्धिजन्योपकाराश्रयत्वं न सम्भवतीत्यर्थः।

उपकारान्तरासम्भवेपि दर्शनमेवोपकार इति शङ्कते—" नर्त्तकी " इति,।

स्वरूपभूतदर्शनस्य नित्यत्वादागन्तुकदर्शनतज्जन्यसुखस्य पुरुषाश्रयत्वानङ्गीकाराद्विषमो दृष्टान्त इति परि हरति—"नैतदस्ति" इति। रङ्गशब्देन स्थानवाचिना स्थानिनः सभासदो लक्ष्यन्ते, दार्ष्टान्तिके वैषम्यमाह—" नच " इति,। अनुपकार्यत्वाद्=अनाधेयातिशयत्वादिति यावत्।

मू०—न च नर्त्तक्यप्यदिदृक्षोः कस्य चिदात्मानं दर्शयितुं शक्नोति, दिदृक्षवश्च सुखाभिलाषिणः पुनः पुनश्चक्षुर्व्यापारयन्तः कथमुदासीनाः, तस्मान्नोदासीनस्य दृश्यदर्शनमपि स्याद्, योग्यतया तद्दर्शने सर्वदा तत्प्रसङ्गादनिर्मोक्षः, योग्यतानपायात्, तदपाये वा न कस्यापि तद्दर्शनं, नच पुरुषविशेषापेक्षया तस्या एव योग्यताया अपायानपायौ, विरोधाद्—

नो खल्वेकस्यापेतं नीलमन्यस्यानपेतं, नच योग्यताभेदे प्रमाणं, तद्भेदेपि कथं पुरुषकृतविशेषाभावे त-

---

टी०—उदासीनत्वाच्च दर्शनमपि न सम्भवतीत्याह—" नच " इति,।

नर्त्तकीदिदृक्षापि तर्हि स्यादित्यत आह—" दिदृक्षवश्च " इति। पुरुषस्योदासीनत्वेपि दृश्यनिष्ठयोग्यतावशादेव तद्दर्शनमित्याशङ्क्य योग्यतापि किं सर्वदाऽस्त्युत नास्तीति विकल्प्याद्ये दोषमाह—" योग्यतया " इति,। द्वितीये दोषमाह—" तदपाय" इति,। मुक्तं प्रति तदपायः संसारिणं प्रति तदनपाय इति विशेषमाशङ्क्याह—" नचपुरुष " इति,। विरोधमेव स्फुटयति— " नखलु " इति,। योग्यताभेदाङ्गीकारादविरोध इत्यत आह— " नचयोग्यता " इति,। संसारिणां दर्शनमितरस्यादर्शनमेव दृश्यगतयोग्यताभेदे प्रमाणमाशङ्क्य पुरुषगतविशेषाभावे योग्यताविशेषापायस्य वक्तुमशक्यत्वादयुक्तमेतदिति परिहरति— " तद्भेदेपि " इति,।

मू०—द्विच्छेदव्यवस्था, योग्यता च कार्यप्रतियोगिनी, नच बुद्धिः पुरुषे स्वभावनिर्मलत्वेनानाधेयातिशये किं चिद्-पूर्वदर्शनमुपजनयतीति कथं तद्योग्यतया दृश्या, ।

नर्त्तकी तु पार्षदानां स्वगोचरसाक्षात्कारं जनयन्ती भवति दृश्योपकारिका चेत्युक्तम्, ।

तदेवं प्रकृतिजनितोपकारानिरूपणान्न तस्याः पुरुषस्य च स्वस्वामिभावोपपत्तिः ।

भिन्नाभिन्नानुपपत्तेश्च, न तावत् स्वस्वामिभावः प्रकृतिपुरुषाभ्यां भिन्नः, स्वयमनभ्युपगमाद्, नहि गुण-पुरुषातिरिक्तं किञ्चित्त्वयाभ्युपगतम्, अथाभिन्नस्तथापि प्रकृतिपुरुषयोरनुच्छेदादनुच्छेद्यः स्वस्वामिभवः, ततो मोक्षानुपपत्तिः, ।

---

टी०—योग्यतायाः कार्यसमधिगम्यत्वात्पुरुषे च दर्शनलक्षणकार्यस्याभावादपि न योग्यतासद्भाव इत्याह—" योग्यता च " इति । तद्योग्यता=दर्शनयोग्यतेति यावत् ।

दृष्टान्तेपि समानमेतदित्यत आह—" नर्तकी तु "इति, ।

उपचारनिमित्ताभावमुक्तमुपसंहरति—" तदेवम् " इति, । प्रकृतिपुरुषाभ्यामन्यत्वेनानन्यत्वेनच सम्बन्धो दुर्निरूप इत्याह— " भिन्नाभिन्न " इति,। भिन्नस्य चाभिन्नस्य चानुपपत्तेरिति यावत्।

संग्रहवाक्यं विभजते—" नतावद् " इति, । अनभ्युपगममेव दर्शयति—" नहि " इति, । द्वितीयमनूद्य दूषयति— " अथ " इति, । ततः किमित्यत आह—" तत " इति, ।

मू०—द्रष्टृदृश्यभावाविवेकावपि समानन्यायौ, किञ्च पुरुषभोगापवर्गार्था चेत्प्रधानप्रवृत्तिः सकृच्छब्दाद्युपलम्भेन चरितार्थत्वात् न पुनस्तदर्थं प्रवर्त्तेत, अनन्तविकारत्वेनादृष्टविकारदर्शनार्थं प्रवृत्तावनिर्मोक्षः, ।

तथा च भोगार्थैव प्रवृत्तिरिति न पुरुषविमोक्षार्था प्रकृतिप्रवृत्तिः स्यात्, ।

ततश्चैतत्प्रमस्तगीतं—"वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृतिरज्ञस्य, पुरुषविमोक्षनिमित्तं प्रवर्त्तते तद्वदव्यक्तम्' इति ।

पुरुषकृतविशेषाभावे चापर्यायमेव निखिलपुरुषोपभोगार्था प्रधानप्रवृत्तिरपवर्गार्था वा कुतो न स्याद्,

---

टी०—उक्तन्यायं सम्बन्धान्तरेप्यतिदिशति—" द्रष्टृदृश्य " इति, । प्रधानप्रवृत्त्यनिरूपणादपि मोक्षोनुपपन्न इत्याह—" किञ्च " इति, । अनुपलब्धशब्दादेरुपलम्भार्थं प्रवृत्तिरित्याशङ्क्याह—" अनन्त " इति, ।

दूषणान्तरमाह—" तथाच " इति । भवत्वेवं को दोष इत्यत आह—" ततश्चैतद् " इति, । अचेतनस्य प्रधानस्य कथं प्रवृत्तिरित्यत उक्तं—" वत्स " इति, । पुरुषविशेषे भोगार्थं प्रवृत्तिरपवर्गार्थं चान्यत्रेति व्यवस्थापि न सिद्ध्यति निर्विशेषत्वात्पुरुषाणामित्याह—" पुरुषकृत " इति, । नाचेतने पर्यनुयोगाव-

मू० —अचेतनत्वादपर्यनुयोग इति चेन्मुक्तानपि कदाचिद्-बध्नीयाद्, यादृच्छिकप्रवृत्तेर्नियामकानुपलम्भात्, ।

तस्मादविचारितरमणीय एवायमपि पन्थाः ।

इदन्तु युक्तं मन्यामहे—नित्यनिरतिशयसुखाभिव्यक्तिर्निःशेषदुःखोच्छेदलक्षणो मोक्षः स चाविद्यास्तमय एवेति, एकमेव खल्वपराधीनप्रकाशानतिशयानन्दरूपमनाद्यविद्यावशेनाद्वितीयमपि सद्वितीयमिव संसारिकधर्मकलुषितमिव च जीवव्यपदेशं ब्रह्मावभासते, तथा चा-

---

टी०—काश इत्याशङ्क्य परिहरति—“ अचेतनत्वाद् ” इति, । कुत इत्यत आह—“ यादृच्छिक ” इति, । नच मायायाः सर्गप्रलयप्रवृत्तावपि समानमेतदिति वाच्यं, । विचारासहत्वेन स्वप्नगन्धर्वनगरादिवदपर्यनुयोज्यत्वादितिभावः ।

साङ्ख्यमतनिराकरणमुपसंहरति—“ तस्माद् ” इति, ।

सिद्धान्तमुपक्रमते— “ इदं तु ” इति, । अविद्याप्रतियोगिकाभावस्य कथं भावरूपसुखाभिव्यक्तिरूपत्वं दुःखप्रतियोगिकाभावत्वं च कथमित्याशङ्कामभिव्यक्तेर्दुःखस्य चाविद्यारूपतया तत्त्वज्ञानाधीनस्तदस्तमय एव तदुभयाविरुद्धरूप इति परि हरति— “ एकमेव ” इति, । नन्वविद्यानिवृत्तावपि संसारस्यानिवृत्तेः कथं मोक्ष इति वा शङ्कां परिहरति—“ एकमेव ” इति, । सर्वगतत्वेन निरवयवत्वेन च परिस्पन्दपरिणामयोरभावादविनाशित्वेन चानित्यगुणाश्रयत्वानुपपत्तेरविद्यैव कर्तृत्वादिलक्षणः संसार इत्यर्थः ।

मू०—नादिरविद्यैव संसारः, निखिलविकल्पातीतपरिशुद्ध-परमात्मविद्योदयाधीनस्तदस्तमय एव मोक्ष इति, ।

तथाह्याह—"अविद्यास्तमयो मोक्षः सा संसार उदाहृता" इति, ।

विद्याविद्ययोर्हि विरोधः सुप्रसिद्धः, शुक्तिशकलादौ चिरनिरूढामपि हि सवासनामविद्यां तत्र तत्त्वविद्योच्छिनत्ति, सर्वस्य चास्य द्वैतावभासस्याविद्यामयत्वमधस्तादापादितम्, अतश्चायमपि तत्त्वविद्याविनिवर्त्तनीय इति युक्तम्, तत्त्वं चाद्वैतात्मरूपमेवेत्यनेकागमपर्यालोचनतो निरणायि, तथा चाऽद्वैतात्मविद्यावशादेवाशेषाविद्यानिवृत्तिर्निश्रेयसमिति चतुरस्रम्, ।

---

टी०—एवं संसारस्याविद्यारूपत्वादविद्यानिवृत्तिरेव तन्निवृत्तिरित्याह—" निखिल " इति, । विकल्पः=भेदस्तदतीतं तत्कारणाविद्याबिधुरतया च परिशुद्धं=विकल्पातीतत्वादेव च परिशुद्धं, कथं विद्यया तन्निवृत्तिरित्यत आह—" विद्याविद्ययोर् " इति, ।

विरोधे वैपरीत्यमेव किं न स्यात्पूर्वभावित्वेनाविद्याया बलवत्त्वादित्यत आह—" शुक्ति " इति, । भवत्वविद्याया विद्यया निवृत्तिस्तथापि प्रपञ्चस्य कथं निवृत्तिरित्यत आह—" सर्वस्य च " [illegible]ति, ।

आत्मतत्त्वमपि परीक्षकाः सद्वितीयमिति वदन्ति ततस्तद्विज्ञानात्प्रपञ्चनिवृत्तिः कथमित्यत आह—" तत्त्वं च " इति, ।

मू०—अपरे पुनराहुः—स्यादेतदेवं यद्यद्वैतं कस्य चित्प्रमाणस्य गोचरः, नचैतदित्थं, न खलु प्रत्यक्षमेव विधिमात्रोपक्षीणव्यापारमपरिस्पृष्टान्योन्यभेदमेकमेव तत्त्वं साक्षात्करोतीति साम्प्रतं, तद्धि विदधदपि रूपं रूपतया रसं च रसतया विदधाति नपुनः सर्वमेकरूपमेव, यथा हि रूपे धारावाहिनी बुद्धिस्तथाभूतैव यदि रसमपि रसयतः स्यात्तदा भवेदेव प्रत्यक्षेण साक्षात्कृतमद्वैतं नत्वेतदेवमिति सर्वप्रतिपत्तृसंविदितम् ।

यदपि कैश्चित्प्रमेयविकल्पेन सामान्यमेव वस्त्विति-स्थापयित्वा सत्ताया महासामान्यरूपत्वात् सन्मात्रमेव

---

टी०-प्रभाकरमतमुत्थापयति—" अपर " इति, । 'कस्यचिद्' इति, न कस्यापीति यावद्, अद्वैतविषयविज्ञानस्य प्रमाकरणजन्यत्वमेव च नास्तीत्यर्थः ।

किं प्रत्यक्षमद्वैते प्रमाणं किं वाऽऽगमः अथवानुमानमिति विकल्प्याद्यं दूषयति—" नखलु " इति, । 'अपरिस्पृष्टान्योन्यभेदम्' इत्यत्र युक्तिर्-'विधिमात्र'इति, कस्मादित्यत आह—" तद्धि " इति, । अद्वैनवादिनस्तु(१) तथैव विदधातीत्याशङ्क्य मैवमनुभवविरोधादिति परिहरति—" यथा हि " इति, ।

ब्रह्मसिद्धिकारमतमुत्थापयति—" यदपि " इति, । सामान्यविशेषौ वस्तुद्वयमुतैकमेव सामान्यविशेषात्मकम, अथवा विशेष एव किं वा सामान्यमेव परमार्थ इति विकल्प्य गौः शाबलेय इति तादात्म्यप्रतिपत्तिविरोधेन वस्तुद्वयस्यायुक्तत्वाद्, एकस्यानेकस्व-

[१] 'मते' इति शेष, ।

मू०—सत्त्वमिति साधितं, तदपि न सत्कल्पं, तथाहि—सत्त्वं न विशेषमात्रं वस्तु, सर्वत्राऽनुवृत्तप्रतिभासवेदनीयस्य सामान्यस्यापह्नोतुमशक्यत्वात्, नापि सामान्यविशेषात्मकम्, एकस्य द्वैरूप्यविरोरोधात्, सामान्यविशेषौ तु परस्परं सम्बद्धे द्वे वस्तुनी प्रत्यक्षमेवावगाहते तथा च कुतः सत्ताऽद्वैतसिद्धिः नचागमादेवाद्वैतसाधनं, तस्य कार्य्यैकविषयतया परिनिष्ठितगोचरप्रमाणभावानुपपत्तेः, ।

अपि च वाक्यात्मा प्रमाणमागम इष्यते, वाक्यं

---

टी०—भावत्वविरोधादेव स्वरूपत्वानुपपत्तेर्, अनुगतप्रत्ययस्य विशेषमात्रेषु चानुपपत्तेरेकमेव सामान्यरूपं वस्तु स्वीकरणीयम्, एकस्मिन्ननेकरूपताप्रतिभासस्य चित्ररूपे तद्ज्ञाने चन्द्रस्वरूपे च परीक्षकैरङ्गीकृतत्वात्कल्पनालाघवादेकमेव परमार्थवस्त्विति स्थापितमित्यर्थः,

तथा चोक्तं ब्रह्मसिद्धिकारैः "एकस्यैवास्तु महिमा यन्नानेव प्रकाशते, लाघवान्नतुभिन्नानां यच्चकास्त्यप्यभिन्नवद्" इति,

दूषयति—"तदपि" इति, । यद्यपि वस्तुनो विशेषमात्ररूपत्वमुभयरूपत्वं च न सम्भवति तथाप्यनुगताननुगतप्रत्ययाभ्यां सामान्यविशेषरूपं वस्तुद्वयमङ्गीकरणीयं सामानाधिकरण्यप्रत्ययस्य च समवायसम्बन्धाविशेषादपि दहनायःपिण्डवदुपपत्तेरिति भावः ।

द्वितीयं पक्षमुत्थाप्य दूषयति—" नच " इति, ।

अद्वैतप्रतिपादनव्याघातादपि कल्पोयमनुपपन्न इत्याह—" अपि च" इति, । ततः किमायातमत आह—"वाक्यं च" इति, ।

मू०—चानेकपदार्थात्मनि स्वार्थे धियमुपजनयत्कथमद्वैतमव भासयेद्, अथ "एष नेतिनेति" इति सकलोपाधिनिषेधादद्वैतसिद्धिः, मैवं, यः खल्वेष इति सद्रूपतया प्रत्यवमृष्टो भावः सोऽसत्त्वभावापादकेन नञर्थेन सह सम्बद्धुमयोग्यः अस्तिनास्तीतिवत्, अन्वयायोग्ययोश्च पदार्थयोरन्वयासम्भवेन न वाक्यार्थीभवनं, नचेत्थं निखिलनिषेधवाक्यनिराकरणप्रसङ्गः, नहि निषेधवाक्येषु कस्य चिदात्यन्तिको निषेधः किन्तु किञ्चित्क्वचिन्निषिध्यते, ब्रह्माद्वैताभिमानी तु भवानाऽऽत्यन्तिकमेव निषेधमभिलषति, तथा च सोयमात्मीय एव बाणो भवन्तं प्र-

---

टी०—भवतु तत्संसर्गरूपवाक्यार्थे, प्रकृतवाक्ये तु वाक्यार्थस्यानेक पदार्थसंसर्गनिषेधरूपत्वाद्व्याघात इति शङ्कते—"अथ" इति,। अयोग्यतया निषेधेतरपदार्थयोः परस्परान्वयो न प्रतीयत इति परिहरति—"मैवम्" इति, माभूद्योग्यता तथापि संसर्गः किमिति न स्यादित्यत आह—"अन्वय" इति, । घटो नास्तीत्यादिसर्वनिषेधखण्डकतया स्वव्याघातकरत्वेन जात्युत्तरमेतदित्यत आह—"नचेत्थम्" इति, । कस्मादित्यत आह—"नहि" इति,। नन्वद्वैतिनोपि तथैव किं न स्यादित्यत आह—"ब्रह्म" इति। तत किमित्यत आह—"तथा च" इति,। लब्धरूपे=प्रमाणेन निश्चितसत्ताके क्वचिदधिकरणे भूतलादौ किंचित्प्रतियोगि तादृगेव=क्वचिल्लब्धसत्ताकमेव निषिध्यते यस्मादतो विधानं=प्रतियोगिवस्तुस्वरूपप्रतीतिमन्तरेण निषेधो न सम्भव-

मू०—हरति "लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते, विधानमन्तरेणाऽतो न निषेधस्य सम्भव" इति, ।

प्रत्यक्षविरोधादेव चाद्वैतबोधक आम्नायो न यथाश्रुतिः युक्त ।

यदपीदमभिधीयते—प्रत्यक्षादिविरोधेऽप्याम्नायस्यैव बलीयस्त्वात् प्रत्यक्षादेर्भ्रान्ततेति, तदतिमन्दं, प्रत्यक्षादिविरोधे पदार्थानामन्वयाऽयोग्यत्वादाम्नायार्थानवबोधाद्, अतः प्रत्यक्षादिविरोधादाम्नाये गौणी लाक्षणिकी वा वृत्तिरास्थेया, ततो नागमादप्यद्वैतसिद्धिः ।



टी०—त्यात्यन्तिकासत्त्वे च प्रतियोगिप्रतीतेरेवाऽसम्भवान्निषेधो न सम्भवतीति त्वदुक्तो दोषस्त्वामेवापहन्यादित्यर्थः ।

मुख्यार्थे ग्रावप्लवनश्रुतिवत्प्रत्यक्षविरोधादपि न तदभ्युपगमो युक्त इत्याह—" प्रत्यक्ष " इति, । यथाश्रुतिं=मुख्यार्थपर इति यावत्, प्रत्यक्षविरोधेपि श्रुतेरेव बलीयस्त्वमुक्तमनूद्य दूषयति—" यदपि " इति, । कस्मादित्यत आह—" प्रत्यक्षादि " इति, । अर्थावबोधे सति श्रुतेर्बलवत्त्वं विरोधे तु स एव नास्तीत्यर्थः । श्रुतेस्तर्हि का गतिरित्यत आह—" अत " इति, । जातिदेशकालभेदाभावेनात्मनामेकत्वश्रुतिरूपचरितार्था, आत्मैवेदं सर्वमिति चात्मनामेकत्वश्रुतिस्तादर्थ्यनिमितोपचाराद् ममात्मा भद्रसेन इतिवत्, लक्षणाया चोपासनाविधिपरत्वमित्यर्थः ।

मू०—अथ यत्प्रकाशते तत्प्रकाशादभिन्नं जडस्य प्रकाशायोगात्, प्रकाशात्मकं च ब्रह्मातो ब्रह्मात्मकं जगदिति सिद्धमद्वैतं, तदयुक्तं, तथा सति हि नानाभूतानामाकाराणां प्रकाशादभेदे प्रकाशस्यापि नानात्वापपत्तेर्नाद्वैतम्, ।

अथ विविधोयमाकारः प्रपंचोऽविद्याध्यासाद्भवतीति, तदपि स्वमतहतं, सदात्मा हि प्रकाशस्तेन सहाभिन्ना-

---

टी०—अनुमानेनाद्वैतमिति तृतीयं पक्षमनुवदति—" अथ " इति, । प्रकाशाद्भेदेऽपि प्रकाशमानत्वसम्भवात् सन्दिग्धव्यतिरेकित्वमित्याशङ्क्य विपक्षे बाधकतर्कमाह—" जडस्य " इति, । संयोगसमवायादिसम्बन्धानिरूपणाद्भेदे जडस्य प्रतिभास एव न स्यादित्यर्थः ।

अस्तु प्रकाशाभेदस्तथापि ब्रह्माभेदः कथमिति तत्राह—" प्रकाश " इति, ।

भेदप्रपञ्चेनाभेदे प्रकाशस्यापि भेदापातान्नैवमिति परिहरति—" तदयुक्तम् " इति, ।

प्रपञ्चस्यालीकतया पारमार्थिकभेदाभावान्नैवमिति शङ्कते—" अथ " इति, ।

अथवा परमार्थसतः प्रपञ्चस्य प्रकाशेनाभेदः किमुतापरमार्थसतोऽभेद इति विकल्प्याद्यं दूषयति—" तदयुक्तम् " इति, ।

द्वितीयमुत्थाप्य दूषयति—" अथ " इति, । सदसतोरेकत्वानुपपत्तेरभेदवाचोयुक्तिः तर्हि न युक्तेति परिहराति—" तदपि "

मू०—स्तावदसदात्मान आकारा इत्ययुक्तम्,

तथा सत्यप्रकाशात्मानस्ते कथमिव प्रकाशेरन्, किं च—अप्रकाशात्मन एव प्रकाशः सम्बन्धीति प्रकाशादेवसिद्धिः, तस्मादेषेपि महायानिकपक्षानुप्रवेशो ब्रह्मवादिनां मोह एव ।

किञ्च आत्यन्तिकमसन्तं प्रपंचं कथमविद्यापि दर्शयितुमलं, न खल्वसत्ख्यातिरविद्या किं त्वग्रहणरूपैव, तस्मान्नाऽविद्यास्तमयो मोक्षः, आत्यन्तिकस्तु देहोच्छेदः निः

---

टी०—इति, । असत्त्वे च प्रपञ्चस्य प्रकाशेन सम्बन्धाभावात्प्रतीतिरेव न स्यादिति दूषणान्तरमाह—" तथासति " इति, । घटमनुभवामीति कर्तृकर्मविषयतयाऽनुभवस्य स्वसम्बिदितत्वादभेदपक्षोनुभवविरुद्ध इत्याह—" किञ्च " इति, । प्रकाशादेव=घटमहंजानामीत्यनुभवादिति यावत् ।

उपसंहरति—" तस्माद् " इति, । ज्ञानज्ञेययोरभेदाङ्गीकारान्महायानिकपक्षानुप्रवेशः, ।

असत प्रतिभासमङ्गीकृत्यैतदुक्तं स एव तु न सम्भवत्यसत्त्वानङ्गीकारादित्याह—" किञ्च " इति, । का तर्हि, सेति तामाह—" किन्तु " इति । ततः किमित्यत आह—" तस्माद् " इति, । कस्तर्हि तदाह—" आत्यन्तिकस्तु " इति, । एतद्भोगसाधनप्रागभावासमानकालीनदेहध्वंसोस्य मोक्ष इतियावत्, तस्य साधनकथनं 'निःशेष' इति, धर्मा-

मू०—शेषधर्माधर्मपरिक्षयनिबन्धनो मोक्ष इति युक्तं, धर्माधर्मवशीकृतोहि जन्तुस्तासुतासुयोनिषु संसरति स तयोरेकान्तोच्छेदे व्यपगताखिलदेहेन्द्रियसम्बन्धः समुत्खातनिखिलसांसारिकदुःखानुबन्धो मुक्त इत्युच्यते, कर्मणश्चाल्पीयसो भवपरम्पराप्रापितस्य भोगादेव परिक्षयः, निःशेष कर्मक्षयस्तु शमदमब्रह्मचर्याद्यङ्गकेनात्मज्ञानेन अपुनरावृत्तये श्रुतेन, ज्ञानविधौ चापरार्थे नियोज्यविशे-

---

टी०—धर्मपरिक्षये कथं देहपरिक्षयस्तस्य ततोन्यत्वादित्याशङ्क्य धर्माधर्मयोः कारणतया तदभावे देहाभावो युक्त इति परिहरति—"धर्म" इति,। भवतु देहोच्छेदस्तथापि संसारसद्भावे कथं मोक्ष इत्याशङ्क्य देहसम्बन्धाभावे सोपि निवृत्त [illegible] एवेत्याह-"व्यपगत" इति,। सति कर्मक्षये तस्य मुक्तिर [illegible] सम्भवः स तु न सम्भवत्यनेकभवपरम्पराप्रापितस्यासङ्ख्येयतया कर्मणो [illegible]तिवयितुमशक्यत्वादित्यत आह—"कर्मणश्च" इति,। अल्पीयसः=प्रारब्धफलस्य, तथाप्यनारब्धफलस्यानिवृत्तौ कथं मोक्ष इत्यत आह—"निःशेष" इति,। शमोन्त करणस्य, दमो वाह्यकरणस्य, शान्तोभिक्षुः दान्तोवर्दीवर्द इति लोकव्यवहारवत् 'स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणं, सङ्कल्पोध्यवसायश्च क्रियानिर्वृत्तिरेव च एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः, विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इत्यभिहितब्रह्मचर्यम, आदिशब्देनोपरमादयो गृह्यन्ते, तस्यतत्साधनत्वे प्रमाणमाह—"अपुनरावृत्तये श्रुतेन" इति,।

नन्वात्मज्ञानस्य कर्मप्रवृत्तिहेतुतया कर्माङ्गत्वादङ्गेषु फलश्रुतेरर्थवादत्वात्कर्मफलेनैव फलवत्त्वमिति तत्राह—"ज्ञानविधौ च"

मू०—षणमपुनरावृत्ती रात्रिसत्त्ववदिति,

तदेतदखिलमप्याकाशरोमन्थनायमानमुत्पश्यामः ।

तथाहि—यत्तावदद्वैतविषयताऽभावे प्रत्यक्षस्याभिहितं- 'विधिमात्रावसितव्यापारमपि प्रत्यक्षं रूपं रूपतया रसं च रसतया परस्परव्यावृत्तस्वभावमेव विधत्ते न पुनरेकाकारमेवाशेषं यथा हि रूपे धारावाहिनी धीस्तथा यदि रसेपि स्यात्तदा प्रत्यक्षादद्वैतम्'इति, तदेतद्विधायकस्यैव प्रत्यक्षस्य व्यवच्छेदकत्वमपाकुर्वद्भिरस्माभिरधस्तादेव निरस्तमिति

———

टी०—इति,।अशनायाद्यतीतज्ञानस्य कर्मप्रवृत्तावनुपयोगित्वात्कर्माङ्गत्वे श्रुत्यादिप्रमाणाभावाच्च 'न स पुनरावर्त्तते' इति वाक्यशेषे श्रूयमाणापुनरावृत्तिरेव नियोज्यविशेषणतया फलं तस्य कर्मक्षयव्यतिरेकेणाऽसम्भवात् ज्ञानमशेषाणि कर्माणि क्षपयतीत्यर्थं, अपरार्थे=अग्निहोत्रादिकर्मानङ्गभूतेऽङ्गफल इति यावत्, ननु तथापि विहितात्मज्ञानस्य विश्वजिन्न्यायेन स्वर्ग एव फलं न कस्मादित्यत आह—"रात्रिसत्तवद्" इति,।

अश्रूयमाणस्वर्गस्य तत्साधनत्वस्य कल्पनायां गौरवात्, "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इति वाक्यशेषे श्रूयमाणे प्रतिष्ठालक्षणफले साधनत्वमात्रकल्पनायां लाघवाद्यथा रात्रिसत्रनियोगस्य प्रतिष्ठाफलं तथात्रापि श्रूयमाणापुनरावृत्तिरेव फलमित्यर्थः,।

प्रत्यक्षस्य व्यावृत्तवस्तुग्राहकत्वेन नाद्वैतसाधकत्वमित्युक्तमनूद्य दूषयति—"यत्तावद्" इति,। "अधस्तादेवानिरस्तम्" इति, स्वरूपभेदनिराकरणप्रस्ताव एवेत्यर्थ,।

मू०—नेह पुनर्विपञ्च्यते, नच वयं वस्तुतः प्रत्यक्षादद्वैतसिद्धिं ब्रूमः, न खल्वन्तरेण द्वैतावमर्शं तदधीननिरूपणमद्वैतमध्यक्षमञ्जसा साक्षात्कर्त्तुमलं, नचास्ति द्वैतावमर्शः प्रत्यक्ष इत्युक्तं, तेन वेदान्तैकवेद्यमेवाद्वैतं वेदविदः प्रतिपन्नाः, चिदात्मतत्त्वं हि स्वसंवेदनमखिलार्थावबोधेष्ववभासमानमपि निर्मृष्टनिखिलद्वैतानुषङ्गं नैव तदन्तरेण वेदान्तमध्यवसीयेत।

यथोक्तं-'सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते, प्रपञ्चस्य

---

टी०—प्रत्यक्षस्याद्वैतसाधनत्वानङ्गीकारादनुक्तोपालम्भोयमित्याह—"नच" इति,। कस्मादित्यतआह—"नखलु" इति,। द्वैतस्याग्रहणे तदधीननिरूपणमद्वैतमध्यक्षेण न ग्रहीतुं शक्यमित्यर्थः। अस्तु तर्हि द्वैतस्य ग्रहणमित्यत आह—"नच" इति। केन तर्हि तत्सिद्धिरिति तत्राह—"तेन" इति,। ननु कथं वेदान्तैकवेद्यतात्मतत्त्वस्य स्वसम्वेदनतया सर्वार्थावबोधेषु स्फुरणाद्, इत्यत आह—"चिदात्मतत्त्वम्" इति,। अयं घटोयं पट इत्यादिप्रत्ययेष्वयमयमित्यधिष्ठानतया घटादिसंस्पृष्टात्मस्फुरणेपि तदसंस्पृष्टमागमव्यतिरेकेणनावभासत इत्यागमैकवेद्यमित्यर्थः।

उक्तेर्थे वृद्धसंमतिमाह—"यथोक्तम्" इति,। ब्रह्मणः प्रसिद्धत्वेऽनुवादकत्वादप्रसिद्धत्वे सम्बन्धाग्रहणादनुपपन्नमागमप्रतिपाद्यत्वमित्याक्षेपस्य कार्यलिङ्गेन कारणस्य तत्सामान्यस्य वा प्रसिद्धतया स्थूलादिपदार्थे संसृज्यमानस्यानधिगताभिमतविशेषरूपेणावगन्तुं शक्यतया सम्भवत्यागमैकगम्यत्वमिति ब्रह्मसिद्धिकारेणैकः परिहारोभिहितः संप्रति परिहारान्तरमाह—"सर्व" इति,। सन्घटः सन्पट इत्यादि प्रत्ययेष्वधिष्ठानतया

मू०—प्रविलयः शब्देन प्रतिपाद्यते, प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः, मानान्तरस्येति मतमाम्नायैकनिबन्धनम्' इति,

तस्माद्वेदान्तैकवेदनीयमद्वैतात्मतत्वमितियुक्तं, वेदान्तानां च परिनिष्ठितगोचरः प्रमाणभावः प्रत्यपादि ।

यदपि चेदमगादि—'वाक्यात्मा प्रमाणमागम इष्यते वाक्यं चानेकपदार्थात्मनि स्वार्थे धियमुपजनयत्कथमद्वैतमवभासयेद्'इति, तदप्यखण्डात्मतत्त्वस्य वाक्यार्थतामुपपादयद्भिरस्माभिरधस्तादेव निरस्तम् ।

यदपि नेतीति निखिलोपाधिनिषेधादद्वैतसिद्धिमाशङ्क्याभिहितं 'यः खल्वेष इति सद्रूपतया प्रत्यवमृष्टो भावः सोऽसत्त्वभावापादकेन नञर्थेन सह सम्बद्धुमयोग्योऽस्तिनास्तीतिवद्'इति,

---

टी०—ब्रह्मणि प्रतीयमाने नेतिनेतीतिप्रपञ्चस्य प्रविलय एव शब्देन प्रतिपाद्यते, प्रविलयस्यैव प्रतिपाद्यतया न ब्रह्मणः प्रतिपाद्यता स्यादित्यत आह—"प्रविलीन" इति, । इति शब्दो हेतौ यस्मात्प्रविलीनप्रपञ्चेन रूपेण तन्मानान्तरस्य गोचरो न भवति तस्मादाम्नायैकनिबन्धनमेव तत्संमतमित्यर्थः ।

परिनिष्ठितेवस्तुनिवेदान्तानां प्रामाण्यमनुपपन्नमित्युक्तमनूद्य दूषयति—"वेदान्तानाञ्च" इति, ।

संस्पृष्टपदार्थबोधकतया वाक्यस्य नाद्वैतबोधकत्वमित्युक्तमनूद्यदूषयति—"यदपिच" इति, ।

एष इति सद्रूपतया परामृष्टस्यासद्रूपापादकेन नञा सम्बन्धानु-

मू०—तदतिमन्दं रजतमित्यप्यनिषेधप्रसङ्गात्, स खलु तदुपाधावेव प्रसक्तरजतप्रतिषेधः, तदुपाधिप्रसक्तिश्च रजतादेरधस्तादेवाभिहिता, यदि तत्रालीकाकारतया तदुपाधावपि प्रसक्तनिषेधो न तर्ह्यत्राप्यालीकाकारता दण्डवारिता, नचैवंसति लब्धरूप इत्यादिस्वोक्तिविरोधः, तत्र हि सिद्धनिषेधोभिधीयते न पुनः प्रमितिनिषेध एवेति, नच प्रमितिरेव सिद्धिरपितु प्रतीतिः सा चानाद्यविद्यावासनातो भवति प्रपञ्चविषया, ततो भवति प्राप्तिः, भवति चात्यन्तिकनिषेधो रजतवत्, नच भवति स्वोक्तिविरोध इति विशदमशेषम् ।

---

टी०—रपत्तेरखिलोपाधिनिषेधेनाद्वैतासिद्धिरित्युक्तमनूद्य दूषयति—"यदपिनेति" इति, । प्रसङ्गमेवदर्शयति—"सखलु" इति, । ननु न रजतस्य तत्रप्रत्यासत्तिरपितु विवेकाग्रहणादेव तथा व्यवहार इत्यत आह—"तदुपाधिप्रसक्तिश्च" इति, । रजतस्याविद्यमानत्वादेकोपाधावेव प्रसक्तप्रतिषेधो न पुन. प्रपञ्चस्येत्यत आह—"यदि" इति, । यदुक्तं 'सोथमात्मीयवाणो भवन्तंप्रहरतीति' तत्राह—"नचैवम्" इति, । ननु सिद्धिरेव प्रमितिस्तत्कथं न प्रमितनिषेध इत्यत आह—"नचप्रमितिरेव" इति, । असत्त्वे प्रपञ्चस्य प्रतीतिरपि कथमित्यत आह—"साच" इति, । अद्वैतागमस्य न मुख्यार्थत्वं प्रत्यक्षादिविरोधादिति यदुक्तं

*September.* **1907.**

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 117.

# न्यायमकरन्दः ।

श्रीमदानन्दबोधभट्टारकाचार्य्यसङ्ग्रहीतः ।

आचार्य्यचित्सुखमुनिविरचितव्याख्योपेतः ।

प्रमाणमाला—न्यायदीपावली च ।

श्रीमदानन्दबोधभट्टारकाचार्यनिर्मिते ।

## NYAYAMAKARANDA,

*A Treatise on Vedanta Philosphy,*

BY ŜREE ÂNANDA BODHA BHAṬṬÂRAKÂCHÂRYÂ

WITH A COMMENTARY BY CHITSUKH MUNI,

PRAMÂNAMÂLÂ *and* NYÂYADÎPÂVALÎ

EDITED BY N. S. N. SWÂMI BÂLARÂM UDASEEN MÂNDÂLIKA.

FASCICULUS IV.


*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT:

BENARES:

AGENTS—OTTO HARRASSOWITZ, LEIPZIG:

PAṆḌITA JYESHṬHÂRÂMA MUKUNDJÎ BOMBAY.

*Printed by Harî Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तबकः—११७

मू०—प्रत्यक्षविरोधोऽप्यद्वैतागमस्य नास्ति प्रमाणस्यानवच्छेदकत्वादित्यावेदितम् ।

किञ्च विरोधेऽप्याम्नायस्यैव बलवत्ता कुतो न स्याद् उत्तरत्वात् नेदं रजतमितिवत्, प्रत्यक्षादिविरोधे तदर्थानामन्वयायोग्यत्वादाम्नायार्थानवबोधादिति चेत्, तर्हि नायं सर्पो रज्जुरेषा नेदं सलिलमपितु मरुमरीचिमात्रमित्याद्याप्तवचनमप्रमाणं स्यात्, प्राचीनसर्पादिसाक्षात्कारविरोधेनाऽनन्वयात्पदार्थानाम् ।

अथ साक्षात्कृतस्यापि सर्पादेरलीकाकारतया निषेधान्वययोग्यता, समानमेतदत्रापि ।

प्रतिपादितं हि प्रपञ्चस्याप्यलीकत्वं, पराक्रान्तं चात्र सूरिभिरित्युपरम्यते ।

---

टी०—तत्राह—" प्रत्यक्ष " इति, ।

विरोधमङ्गीकृत्यापि दूषयति—" किञ्च " इति, । विरोधे पदार्थानामन्वयायोग्यत्वादन्वयप्रतीतिरेव न सम्भवतीति कुतो बाधकतेति शङ्कते—" प्रत्यक्षादि " इति, । प्रतिबन्दीन्यायेन परिहरति—" तर्हि " इति, ।

वैषम्यमाशङ्क्य तुल्यतापादनेन परिहरति—" अथ " इति, । प्रकृतस्याऽलीकत्वमेवासिद्धमिति तत्राह—"प्रतिपादितम्" इति, । न केवलमस्मदादिभिरेव किन्तु भाष्यकारप्रभृतिभिरपि साधितमित्याह—" पराक्रान्तम् " इति, ।

मू०—तस्मादद्वैतागमानां न गौणी लाक्षणिकी वा वृत्तिरपि तु मुख्यैवेति युक्तैवागमादद्वैतसिद्धिः ।

यत्पुनर्जडस्य प्रकाशायोगाच्चिदात्मतत्त्वाभेदमाशङ्क्य भेदप्रपञ्चस्य परिहृतं तथासति नानाभूतानामाकाराणां प्रकाशादभेदे प्रकाशस्यापि नानात्वापत्तेर्नाद्वैतम्'इति, तदेतदनाकलितपराभिप्रायाणां गलगर्जितं, नहि वयं भेदप्रपञ्चस्य तत्त्वतश्चिदात्माऽभेदं वर्णयामः किन्तु न भिन्नो नाप्यभिन्नो नापि भिन्नाभिन्नः किंतर्ह्यनाद्यविद्याविलसित इति, ।

यदपि प्रपञ्चस्याविद्याध्यासात्प्रतिभासमाशङ्क्याभिहितं—'स्वमतहतमेतत् सदात्मा हि प्रकाशः तेन सहाविद्यारोपिताऽसदाकाराणामभेदानुपपत्तात्प्रकाशात्मानस्ते कथमिव प्रकाशेरन्निति, तदप्यनुचितं चिदात्मन एवैकस्य

---

टी०–मुख्यार्थे प्रत्यक्षादिविरोधाभावाद्गौणलाक्षणिकवृत्त्याश्रयणं न युक्तमित्युपसंहरति—" तस्माद् " इति, ।

प्रकाशाभेदसाधनानुमानस्य दूषणमनूद्य दूषयति—" यत्पुनर् " इति, ।

असन्. प्रपञ्चस्य प्रकाशाभेदाऽभावेन तत्प्रतीतिरेव न स्यादिति यदुक्तं तद्विघटयति—" यदपि " इति, । परमार्थतस्तदभेदाभावेपि तद्विवर्त्ततया शुक्तौ रजतवत्प्रपञ्चप्रतिभासो घटत इत्यर्थः ।

मू०—तथा विवर्त्तमानस्याविचारितरमणीयैराकारैरवभासो-
पपत्तेः, ।

यदपि 'अप्रकाशात्मन एव प्रकाशः सम्बन्धीति प्रकाशादेव सिद्धिर्' इति, सत्यं तथैव तत् को वाऽन्यथाह स एव तु सम्बन्धो मायामय इति ब्रूमः, न खलु सम्बन्धो नाम सम्बन्धिभ्यामतिरिक्तस्तन्मात्रो वा निपुणनिरूपणपदवीमारोहति

अतिरेके तस्य सम्बन्धिभ्यां सम्बन्धान्तरकल्पनेऽनवस्थानाद्, असति तु सम्बन्धान्तरे तत्सम्बद्ध इति तदधीननिरूपणतानुपपत्तेः, अनतिरेके च वस्तुनी एव केवलं न सम्बन्धो नाम कश्चित्तयोरित्यापातात् ।

---

टी०—अनात्मसम्बन्धित्वेन प्रकाशस्य प्रकाशनादभेदो न युक्त इति यदुक्तं तद्विघटयति—" यदपि " इति, । परमार्थ एव कस्मान्न भवेदित्याशङ्क्य सम्बन्धिव्यतिरेकेणाव्यतिरेकेण वा दुर्निरूपत्वान्मैवमिति परिहरति—" नखलु " इति, । भेदपक्षं प्रथमतो दूषयति—" अतिरेक " इति, । प्रथमसम्बन्धस्य सम्बन्धान्तरानपेक्षाऽतो नानवस्थेत्यत आह—" असति तु " इति, । सम्बन्धमन्तरेणैव च सम्बन्धव्यवहारजनकत्वे सम्बन्धिनोरेव तथात्वापत्तौ सम्बन्धापह्नवप्रसङ्गादिति भावः ।

अभेदपक्षं दूषयति—" अनतिरेक " इति, । अस्तु वा लोके सम्बन्धिव्यतिरिक्तः सम्बन्धः तथापि सम्बित्सम्वेद्ययोरसौ न

मू०-संयोगादिविकल्पानुपपत्तेश्च, नहि तावज्जडाजडयोः संयोगरूपः सम्बन्धः सम्विदोऽजडाया अद्रव्यत्वात् संयोगस्य च द्रव्यमात्रानुविधायित्वात्, नापि युतसिद्धयोः सम्वित्सम्वेद्ययोः समवायः, तादात्म्यमपि द्रवकठिनवद्विरुद्धरूपयोः कथं स्याद्, ।

विषयविषयिभावमपि नान्यं तत्त्वतः सम्बन्धं जानीमः, तादृशसम्बन्धान्तरभावे वा कथं ध्वस्तानागतयोस्तत्सम्भवः, न खल्वस्ति सम्भवो नास्ति सम्बधी सम्बन्धश्चा-

---

टी०-सम्भवतीत्याह—" संयोगादि " इति, ।

सङ्ग्रहवाक्यं विभजते—" नहि " इति, । ज्ञानस्य द्रव्यत्वाभावे घटादेरस्तु तदित्यत आह—" संयोगस्य " इति, । अस्तु तर्हि समवाय इत्यत आह—" नापि " इति, । सम्वित्सम्वेद्ययोः परस्परपरिहारेण पृथगाश्रयाश्रयितया युतसिद्धत्वान्न समवायसम्भवस्तस्यायुतसिद्धनिष्ठत्वादिति भावः ।

अस्तु तर्हि तादात्म्यमित्यत आह—" तादात्म्यम् " इति, अस्तु तर्हि विषयविषयिभावसम्बन्ध इत्याशङ्क्य सम्विदि विषयित्वस्य सम्वेद्ये विषयत्वस्य चायत्तत्वेनाद्विष्ठतया सम्बन्धरूपतैव तस्य न सम्भवतीति परिहरति—" विषय " इति, । अद्विष्ठस्यापि सम्बन्धव्यवहारजनकत्वेन सम्बन्धरूपत्वमुपचारादित्याशङ्क्य तथाप्यसौ न सार्वत्रिक इति परिहरति—" तादृश " इति, । कानुपपत्तिरित्यत आह—" नखलु " इति, । मा भूत्सम्बन्धस्तथापि

मू० –स्तीति, नचान्तरेण सम्बन्धमस्ति सम्वित्सम्वेद्ययो-र्निरूप्यनिरूपकभाव इति चतुरस्रम् ।

तथा च सत्ययं सौधसितिमानमपि परिणततालफल कालिम्ना निरूपयेत्, तस्माच्चिदात्मन एवैकस्यानाद्यविद्यावशादविचारितरमणीयोयमतदाकारावभास इति चतुरस्रम् ।

तथा सत्येषोपि महायानिकपक्षानुप्रवेशो ब्रह्मवादिनां मोह एवेति व्यामूढभाषितं, नहि वयं नीलाद्याकारां चितिमभ्युपगच्छामो येन महायानिकपक्षानुप्रवेशः किंत्वनाद्यविद्याक्रीडितमलीकनिर्भासमाकारप्रपंचमाचक्ष्महे ।

यदप्यत्यंतमसन्तं प्रपंचं कथमविद्यापि दर्शयितुमलं न खल्वसत्ख्यातिरविद्येत्यभ्यधायि, तदप्यनाकलितपरवचनस्य भाषितं, न खल्वत्यंतमसंतंप्रपंचमविद्या दर्शयतीति

---

टी०–ज्ञातो घटो घटस्य ज्ञानमिति निरूप्यनिरूपकभावसम्बन्धः किं न स्यादित्यत आह—" नच " इति, । सम्बन्धाभावे दोषमाह—" तथाच " इति, । प्रपञ्चप्रतिभासस्य तर्हि का गतिरित्यत आह—" तस्माद् " इति, । तस्मादुक्तोपालम्भो निरवकाश इत्याह— " तथासति " इति, । कस्मादित्यत आह—"नहि" इति, । तर्हि कथमभ्युपगम इति तत्राह—" किन्तु " इति, ।

प्रपञ्चस्यात्यन्तासत्त्वानङ्गीकारादसत्ख्यातिप्रसङ्गोपलम्भोपि नावतरतीत्याह— " यदपि " इति, । अयथार्थज्ञानसाधनाभ्याग्रहः

मू०—ब्रूमो येनायमुपालंभः किंत्वनिर्वाच्यमाकारप्रपञ्चमवभासयत्यविद्येत्यसकृदभिहितम्, अग्रहणरूपैवाविद्येत्यप्यधस्तादेव निरस्तावकाशं, तस्माददि्वतीयात्मतत्त्वाविद्यानिबन्धनत्वात्संसारस्य तत्स्वरूपसाक्षात्कारनिबन्धना तन्निवृत्तिरेवमोक्ष इति समञ्जसम्, ।

नचानिवृत्तविद्यस्यात्यांतिकदेहोच्छेदसंभवः, निःशेषधर्माधर्मपरिक्षयनिबंधनो देहोच्छेद इनि चेन्मैवं, अन्तरेणाद्वितीयात्मविद्यामशेषधर्मपरिक्षयानुपपत्तेः, न खल्वनंतभवपरंपराप्रापितस्यानियतकालविपाकस्य च कर्माशयस्याऽशेषतो भोगक्षयसंभवः ।

---

टी०—णरूपैवाविद्येत्यपि निरस्तमित्याह—"अग्रहण" इति, । अविद्यानिवृत्तिरेव मोक्ष इत्युपसंहरति—" तस्माद् " इति, । ननु कथमविद्यानिवृत्तिरेवेति नियम्यते आत्यन्तिकदेहोच्छेदस्यापि मोक्षत्वादित्यत आह—" नच " इति, । प्रकारान्तरेण तदुच्छेदसम्भवमाशङ्क्यते— " निःशेष " इति, । दूषयनि—"मैवम्" इति, । ननु भोगेनापि तत्क्षय इत्यत आह— " नखलु " इति, । अनन्तस्यापि कलशोद्भवेनेव.जलधेरपर्यायमेव भोगः किं न स्यादित्यत आह—" अनियत " इति, । अनियतविपाकत्वेपीयत्तया परिच्छेदे कर्माशयस्य क्रमेण भोगः सम्भवतीत्यत उक्तम्—" अनन्तम् " इति, ।

मू०—तद्भोगकालेपि च कर्मान्तरप्रसरो दुर्निवारः, नच नैवायं काम्यनिषिद्धे कुरुते मुमुक्षुरित्यपि साम्प्रतं, प्रामादिकपापसन्ततेः सुनिपुणानामप्यपरिहार्यत्वात्, तत्फलभोगेनैव तस्यापि प्रक्षये तद्भोगकालेपि कर्मान्तरप्रसर इत्यनवस्था ।

स्यादेतद्,-निःशेषकर्माशयक्षयस्तु शमदमब्रह्मचर्याद्यङ्केनात्मज्ञानेनापुनरावृत्तये विहितेन, ज्ञानविधौ चापरार्थे नियोज्यविशेषणमपुनरावृत्ती रात्रिसत्रवदिति, तदप्यलीकं, त्रिविधस्याप्यात्मविज्ञानस्य विधिगोचरतायाः सुनि पुणतरं निराकरणात्, विद्यायाश्चाविद्यानिवृत्तावन्वय

---

टी०-भोगकालेपि विहितप्रतिषिद्धाचरणादशेषकर्मक्षयो न सम्भवतीत्याह—" तद्भोग " इति, । एतच्चाधिकारिशरीरप्राप्ताविति मन्तव्यं, अनधिकारितिर्यगादिशरीरप्राप्तौ कर्मान्तरप्रसराभावाद्, मुमुक्षूणां काम्यनिषिद्धात्मककर्माकरणात्कथं कर्मान्तरसम्भव इत्यत आह—" नच " इति, । प्रामादिकस्याप्युपभोगेनैव क्षयः किं न स्यादित्यत आह—" तत्फल " इति, ।

विहितज्ञानादेवाशेषकर्मक्षयोपपत्तेरयमदोष इति पूर्वमेवाभिहितमिति शङ्कते—" स्यादेतद् " इति, । सिद्धार्थप्रामाण्यवादे विज्ञानविधिनिराकरणान्नैवमिति परिहरति—" तदपि " इति, । ज्ञानस्यापुनरावृत्तिहेतुत्वमनन्यलभ्यमिति तदर्थो विधिरित्याशङ्क्य परिहरति—" विद्यायाश्च " इति, ।

मू०—व्यतिरेकासिद्धसाधनभावाया अन्तरेणापि विधिमपुनरावृत्तिशेषतावगमात्, अखिलसंसारमूलाविद्याया हि विद्याविनिवर्त्तिताया ध्वस्तायाः पुनरुद्भवाभावात् ।

आगन्तुकस्य चाविद्यान्तरस्य हेत्वभावादेवाऽनुपपत्तावर्थसिद्धामनावृत्तिमर्थवादभावेनानुवदत्यपुनरावृत्तिश्रुतिर्-"नचपुनरावर्त्तत" इति न पुनर्नियोज्यविशेषणतयैनां समर्पयति, तस्मादखिलसंसारमूलाविद्यायास्तत्त्वसाक्षात्कारतो निःशेषविनिवृत्तिर्मुक्तिरिति सकलमपि पुष्कलम् ।

---

टी०—अविद्यानिवृत्तावपि पुनरविद्यान्तरात्संसारः स्याद् निवृत्ताविद्यस्य पुनरपि रजतभ्रमवदतो नाविद्यानिवृत्तावपुनरावृत्तिरित्याशङ्क्य किमनागन्तुकाविद्यातः संसार उतागन्तुकाविद्यात इति विकल्प्याद्य दोषमाह—" अखिल " इति, । अविद्यान्तराणां सद्भावे रजतभ्रमस्य पुनरुद्भवोपपत्तेरिह तु संसारमूलाविद्याया एकत्वेन तस्या निवृत्तायाः पुनरुद्भवाभावादपुनरावृत्तिर्घटत इत्यर्थः ।

द्वितीये तु दोषमाह—" आगन्तुकस्य " इति । हेत्वभावात्=संसारमूलकारणाभावादिति यावत्, अपुनरावृत्तिश्रुतेस्तर्हि वैयर्थ्यमित्याशङ्क्य प्ररोचनासिद्धयेर्थसिद्धामपुनरावृत्तिमनुवदति श्रुतिरित्याह—" अर्थसिद्ध " इति, । नियोज्यविशेषणत्वमेवप्रतिष्ठाफलवत्किं न स्यादित्यत आह—" नपुनर् " इति, । अन्यत एव सिद्धत्वादिति भाव, । प्रकृतमुपसंहरति—" तस्माद् " इति, । निःशेषाविद्यानिवृत्तिरिति विदेहकैवल्यकथनम्, अविद्यानिवृत्तिकथनमुत्तरवादप्रस्तावार्थः ।

अविद्यानिवृत्तिर्मुक्तिरनुपपन्ना तदाधारस्यानिरूपणादित्याक्षिपति—

मू०—अथापि स्यात्—"कस्याविद्या यदुच्छित्तिर्मुक्तिरिष्टा परात्मनः, विद्यास्वभावतोऽयुक्ता साऽतो जीवो न भिद्यते'।

न तावत्परस्य ब्रह्मणो विशुद्धचित्प्रकाशस्येयमविद्या युक्ता प्रकाशाप्रकाशयोः परस्परप्रत्यनीकत्वाद् अधिकरणाधेयभावानुपपत्तेः।

स्यान्मतं जीवानामियमविद्याभ्युपेयत इति, तदप्ययुक्तं, विकल्पासहत्वात्, स खलु परमात्मनः किं व्यतिरिच्यते, नो वा, यद्याद्यः पक्षस्तर्ह्यद्वैतपक्षक्षतिर् अनेनजीवेनात्मना'इति जीवपरमात्मनोस्तादात्म्यश्रुतिव्याकोपश्च, पराचीनपक्षे तु प्राचीनदोषानुषङ्गो दुर्निवारः।

---

टी०-"कस्य" इति,। किं तद्विचारेणेत्यत आह—"यदुच्छित्तिर्" इति,। किं ब्रह्मण, किं वा जीवानामितिविकल्प्याद्ये दोषमाह—"परात्मन" इति,। परस्य विद्यास्वभावत्वेन तद्विरोधिनी तस्य सा न युक्तेति भावः,।

द्वितीये दोषमाह—"अत" इति,। अतः परमात्मनो जीवो न भिद्यत अतः तस्मिन्नपि सा न युक्ता विद्यास्वभावत्वाद्, भेदे पुनरपसिद्धान्त। परात्मन इति भागं व्याचष्टे—"नतावद्" इति,।

अतो जीवो न भिद्यत इतिभागं व्याचिख्यासुराशङ्कामुत्थापयति—"स्यान्मतम्" इति। न केवलमपसिद्धान्तः श्रुतिविरोधश्चेत्याह—"अनेन" इति,। अभेदपक्षे दोषमाह—"पराचीन" इति,। विद्यास्वभावत्वादेव न सा युक्तेति प्राचीनो दोषः,।

मू०—स्यादेतत्—तात्त्विको जीवात्मनः परस्मादभेद एव भेदः पुनरनाद्यविद्याधीनः तथा च न श्रुतिविरोधः, नाप्यविद्याया आश्रयाभावः, तस्या जीवाश्रयत्वादिति, ।

तदेतन्न मनीषिणः श्रद्दधते परस्पराश्रयापाताद् अविद्याधीनो जीवविभागो जीवाश्रया चाविद्येति, ।

योऽप्याह नाविद्यायां परस्पराश्रयदोषो नहि मायायां काचिदनुपपत्तिरिति, तस्य मुक्तानामपि सा स्यादनुपपत्त्यभावाद्, ब्रह्मणश्च सा किं न स्यादनुपपत्त्यभावादेव, ।

यद्युच्येत न सा मुक्तानां भवति, नापि परिकल्प्या कल्पकाभावात् मुक्तताव्याघाताच्च, तथा ब्रह्मणोऽपि वि-

---

टी०—पक्षद्वयदोषपरिहारमाशङ्कते—" स्यादेतद् " इति, । तथापि कथमुक्तदोषपरिहार इत्यत आह—" तथाच " इति, ।

विरोधित्वेन ब्रह्मनिष्ठत्वानुपपत्तेर्जीवाश्रितैवाविद्या जीवभेदमापादयतीति वाच्य तथाच परस्पराश्रयदोष इति परिहरति—" तदेतद् " इति, ।

अनुपपत्तेरलङ्कारत्वादयमदोष इतिशङ्कते—" योऽप्याह " इति, । अतिप्रसङ्गेन दूषयति—" तस्य " इति, । दूषणान्तरमाह—" ब्रह्मणश्च " इति, ।

अनुपपन्नत्वे प्रतिभासानुसारित्वादविद्या जीव एवेति शङ्कते—" यद्युच्येत " इति, । अभानेऽपि परिकल्प्यतामित्यत आह—" नापि " इति, । न केवलं कल्पकाभावादपितु विरोधादपीत्याह—" मुक्तता " इति, । अस्तु तर्हि ब्रह्मणीत्यत आह—"तथा"

मू०—द्यात्मत्वाद्, जीवाश्रया तु न कल्प्या प्रतीतिसिद्धत्वाद्, अतो यथासौ प्रतिभासते तथाभ्युपगम्यते नोपपत्तिः काचिदन्विष्यते ब्रह्मणि तु न सा प्रतिभाति नाप्युपपद्यत इति विशेष इति, ।

तदप्यलीकं अविद्याकल्पितस्याविद्येत्यप्रतिभासात्, प्रतीत्यनुसारित्वे तु पारमार्थिक एवायं जीवविभागः

---

टी०—इति, । न भाति न परिकल्प्यत इत्यर्थस्तेनेनान्वयः, विद्यास्वभावत्वादित्युपलक्षणं कल्पकाभावादित्यपि द्रष्टव्यं, तर्हि जीवे समानमेतदित्यत आह—" जीव " इति, । प्रतीतिसिद्धत्वाद्=अहमज्ञ इत्यनुभवसिद्धत्वादिति यावत्, भवतु प्रतीतिस्तथापि किमित्यत आह—" अत " इति, । तथापि परस्पराश्रयस्य कः परिहार इत्यत आह—" नोपपत्तिर् " इति, । अनुपपत्तेरलङ्कारत्वादिति भावः, उक्तवैषम्यमाह—" ब्रह्मणि " इति, ।

परिकल्पितस्याविद्येत्यप्रतिभासादहमज्ञ इत्येवानुभवादयुक्तमेतदिति परिहरति—" तदपि " इति, । नचाहमितिविशिष्टरूपस्य कल्पितत्वेन तन्निष्ठतयैवाविद्याप्रतिभास इति वाच्यं सुषुप्तादावहमित्यप्रतिभासेऽप्यविद्यास्वीकारेण विशिष्टरूपाश्रयत्वानुपपत्तेः, अन्यथा सुषुप्तानामपि मुक्तिप्रसङ्गादिति भावः ।

प्रतिभासैकशरणत्वे च स्वतः प्रामाण्याद्ब्रह्मणि जीवविभागस्याऽविद्याश्रयत्वस्य च पारमार्थिकत्वमेव स्वीकरणीयं, नाविद्यानिबन्धनत्वमित्याह—" प्रतीत्यनुसारित्वेतु " इति, । प्रतिभासमात्रादेव तदङ्गीकरणे चाविद्याया जीवाश्रयत्वेयुक्तिप्रमाणयोरुपन्यासो

मू०—पारमार्थिकं चाविद्याश्रयत्वमित्यभ्युपगन्तव्यं, नोपपत्तिर्मृग्यत इतिब्रुवाणस्य यौक्तिकत्वव्याघातः, ।

यदपिमतं बीजाङ्कुरवदनादिरविद्याजीवविभागस्ततो नान्योन्याश्रयत्वमिति, तदप्यसांप्रतं दृष्टान्तवैषम्याद्, व्यक्तिभेदेन हि बीजाङ्कुरयोरन्योन्यं कार्य्यकारणभावे न विरोधः जीवस्तु सर्वासु भवकोटिष्वेक एव मानुषपशुपक्षियोनिषु प्रत्यग्रजातस्य शिशोराहारविशेषाभिलाषेण प्रवृत्त्युपलम्भाद्, जन्मान्तरकृतस्य तत्तदाहारविशेषाभ्यासस्यानुमानपरम्परया तस्याभिन्नस्यैव नानाशरीरयोगप्र-

---

टी०—न स्यादित्याह—" नोपपत्तिर् " इति, ।

ब्रह्मसिद्धिकारमतमुत्थापयति—" यदपि " इति, । अनेकव्यक्तिस्वीकारेण तत्रेतरेतराश्रयपरिहार. प्रकृते तु नैवमविद्याया जीवस्य चैकत्वादिति दूषयति—" तदपि " इति, । जीवेऽपि तथैवेत्यत्राह—" जीवस्तु " इति, । एकत्वे प्रमाणमाह—" प्रत्यग्र " इति, । भवतु प्रवृत्त्युपलम्भस्तथापि कथमेकत्वमित्यत आह—" जन्मान्तर " इति, ।

इदमत्राकूतम्—अस्ति. तावत्प्रत्यग्रजातस्य शिशोराहारविशेषाभिलाषेणप्रवृत्तिस्तस्याश्च व्यवहारविशेषविषयहितसाधनतानुमानपुरःसरत्वादनुमानस्य च व्याप्तिग्रहणाधीनतया संप्रति च तदभावेन पूर्वजन्मन्येव तद्ग्रहणस्यावश्यंवक्तव्यात्पूर्वजन्मन्यपि प्रत्यग्रजातस्य शिशोराहारविशेषप्रतिपत्तिस्तथैवेष्टसाधनतानुमानपुरःसरैवेत्येवं नानाशरीरयोगप्रतीतेरनेकभवकोटिष्वेकत्वमेवात्मनोऽभ्युपगन्तव्यम्, ।

मू०--तीनेर् अन्यथा त्वकृताभ्यागमकृतविप्रणाशापातात्।

तथा चाविद्याकृतो जीवभेदो जीवाश्रया चाविद्येत्यशक्यः परस्पराश्रयपरिहारः, ब्रह्मवज्जीवस्याप्यनादित्वे न ब्रह्मप्रतिबिम्बता, प्रतिबिम्बस्य बिम्बसिद्ध्युत्तरकालतानियमाद्, अनादित्वे चाविद्याधीनस्तद्विभाग इति दुर्निरूपं, तस्मादनादिनिधनं ब्रह्मतत्त्वमेवाविद्याश्रय इति वाच्यं तत्र चोक्तानुपपत्तिः।

कथं च सर्वज्ञस्य ब्रह्मणोऽविद्याश्रयत्वम् अविद्यावा-

---

टी०-आत्मनोनादित्वाभावे दोषमाह—"अन्यथा" इति,। अनादित्वाभावे जन्तूनां सुखदुःखवैचित्र्यस्य पूर्वकृतधर्माधर्मनिबन्धनत्वाभावेनाकस्मादेव तद्गतीतिवक्तव्यत्वादकृताभ्यागम, धर्माधर्मनिबन्धनत्वाभावादेव सुखदुखयोरसंप्रतितनकर्मणोपि सुखदुखाजननेनैव प्रणाशात् कृतविप्रणाशः स्यात्—सादित्वे वा विनाशस्यावश्यंभावित्वादनुष्ठितकर्मणः कालान्तरभाविसुखदुखाजननेनैव विनाशात्कृतविप्रणाश इत्यर्थ,।

भवतु जीवस्यैकत्वं तथापि किमित्यत आह—"तथाच" इति,। न केवलमनादित्वे परस्पराश्रयः किन्तु प्रतिबिम्बत्वमपि जीवस्य न स्यादित्याह—"ब्रह्मवद्" इति,। अनादित्वनाजन्यत्वाद्विद्यानिबन्धनत्वमपि जीवस्य न स्यादित्याह—"अनादित्वेच" इति,। जीवस्याविद्याश्रयत्वाभावाद्ब्रह्मण एव तदभ्युपगन्तव्य तथा च विरोधेनाविद्याश्रयत्वं न स्यादिति प्रागुक्तदोष. प्रसज्येतेत्याह—"तस्माद्" इति,।

मम माता वन्ध्येतिवत्स्ववचनविरोधादप्यविद्याश्रयत्वं ब्रह्मणो न सम्भवतीत्याह—"कथञ्च" इति,।

मू०—न्सर्वज्ञ इति विप्रतिषेधाद्, ब्रह्मैव च स्वाविद्यया संसरति विद्यया च विमुच्यते इति ब्रुवाणस्य न बन्ध-मुक्तिव्यवस्थोपपत्तिः, नापि गुरुशिष्यव्यवस्था—यदिह्युत्पन्ना विद्या कस्तदा शिष्यः सर्वभेदप्रविलयाद्, यदि नोत्पन्ना कस्तदागुरुर् आत्मान्तराभावाद्, नचान्तरेण गुरुं विद्योत्पत्तिर् 'आचार्यवान्पुरुषोवेद'इतिश्रुतेर्, अस्त्येव मायाविरचितो गुरुशिष्यभाव इति चेन्मैवम् उत्पन्नविद्यस्य गुरोर्मायायोगात् शिष्यसङ्कल्पनुपपत्तेर्, न च शिष्यात्माविद्याकल्पितो गुरुरिति वाच्यं, तस्य कल्पितस्य जडत्वे विद्यावत्तानुपपत्तौ गुरुत्वानुपपत्तेः, ।

---

टी०—इष्टसिद्धिकारमतमुत्थाप्य दूषयति—" ब्रह्मैव " इति, । न केवलमेतावद्व्यवस्थान्तरमपि न स्यादित्याह—" नापि " इति, । तदनुपपत्तिं दिदर्शयिषुः प्रागितो विद्योत्पत्तिरस्त्युत नास्तीति विकल्पाद्यं दूषयति—" यदिह्युत्पन्ना " इति, । एकस्य तदनुत्पादेऽप्यात्मान्तरस्य विद्या स्यादित्यत आह— " आत्मान्तर " इति, । मा भूद् गुरुस्तथापि विद्या किं न स्यादित्यत आह—" नच " इति, । आचार्यवत एव विद्यावत्त्वप्रतिपादनादित्यर्थः, ।

आत्मैकत्वेपि मायया गुर्वादिव्यवस्था भविष्यतीतिशङ्कते—" अस्त्येव " इति, । किं गुरोर्माया अथवा शिष्यस्येति विकल्प्याद्यं दूषयति—"मैवम्" इति, । द्वितीयं दूषयति—" नच " इति, । कल्पितस्य जडत्वेन शुक्तिरजतवद्विद्याश्रयत्वमनुपपन्नमित्यर्थः, ।

मू०—स्वप्नवत्तदुपपत्तिरिति चेद् यथा हि कश्चन विद्यावत्तया स्वप्ने गुरुश्च कल्पितःस्वात्मानं प्रत्युपदिशेज्जानीयाच्च स्वयं तदुपदेशात्तद्वदिहापीति चेत्, तत्किमिदानीं त्वदविद्याविरचितस्त्वद्गुरुर्, अद्धेतिचेद्, हन्त मदविद्याविरचितस्त्वं किं न स्याः, यथा तुभ्यं त्वद्गुरुरुपदिष्टवाँस्तथा त्वमपि मह्यमुपदिशसि तथा च शिष्यान्तरेभ्यः तत्र यदि त्वदुपदेष्टा त्वदविद्याविनिर्मितस्तन्मदुपदेष्टापि त्वं मदविद्याविनिर्मितो युक्तो गुरुत्वाविशेषाच्छिष्यत्वाविशेषाच्च, सत्यं त्वदविद्याविनिर्मित एवाहमपीति चेत्, कथं तर्हि त्वदविद्याविनिर्मितस्त्वद्गुरुर्

---

टी०-जडस्यापि विद्या सम्भवतीति शङ्कते—" स्वप्नवद् " इति,। संग्रहवाक्यं विभजते—" यथाहि " इति,। गूढाभिसन्धिरुत्तरमाह— " तत्किमिदानीम् " इति,। पृष्टं मत्वाह सिद्धान्ती— " अद्धा " इति,। स्वाभिप्रायमुद्घाटयति—" हन्त " इति,। तवोपदेशाभावे मम कथं गुरुत्वमित्यत आह—" यथा " इति,। एकस्यानेकाविद्याकल्पितत्वमापादयितुं शिष्यान्तरेभ्य इत्युक्तं, तावता कथं शिष्याविद्याकल्पितत्वमित्याशङ्क्य गुरुत्वे शिष्याविद्याकल्पितत्वानुमानादित्याह—" यदि " इति,। अस्तु को दोष इति सिद्धान्ती शङ्कते—" सत्यम् " इति,। तर्हि तव कल्पितस्याविद्याश्रयत्वाभावेन त्वदविद्याकल्पितत्वं त्वद्गुरोर्न स्यादिति गुरुत्वहेतुस्तत्रैवानैकान्तिक इति दूषयति—" कथंतर्हि " इति,।

मू०—अविद्यानिर्मितस्याविद्याश्रयत्वानङ्गीकरणात्, इति।

अथाहं मद्गुरुश्च सर्वेपि त्वदविद्याविनिर्मितास्त्वं पुनः परमात्मेतिचेत्, तत् किमिदानीं मच्छिष्याय मयाप्येवमेवोपदेष्टव्यम्, अद्धेति चेत्कथं तर्हि त्वदविद्याविनिर्मितोहं परमात्मा सन्ति च मच्छिष्यास्तेभ्यश्च मयोपदेष्टव्यं-मच्छिष्योपि चेदुपदिशेदन्यस्मै सोऽपि यावदुपदेशमेव परमात्मेति सुनिरूपितः परमात्मा, ।

यदपि मतं स्वात्मानमेव कल्पितभेदं गुरुः शास्तीति तदप्यसङ्गतं, गुरुर्हि स्वात्मनो मुक्तिं निश्चिन्वन्

टी०—कानुपपत्तिरित्यत आह—" अविद्याविनिर्मितस्य " इति,

अनैकान्तिकत्वं परिहरन्नाशङ्कते—" अथाहम् " इति,। त्वदविद्यानिर्मितत्वस्य तत्रापि भावेन नानैकान्तिकतेत्यर्थः, गूढाभिसन्धिरुत्तरमाह—" तत्किमिदानीम् " इति,। अभिप्रायमबुद्ध्वाह–" अद्धा " इति, । तर्हि शिष्याविद्याकल्पितस्य मम परमात्मत्वमनुपपन्नमिति स्वाभिप्रायमुद्घाटयति—" कथंतर्हि " इति,। शिष्याभावेन तव तदविद्याकल्पितत्वं नास्तीत्यत आह— " सन्तिच " इति,। त्वच्छिष्य एव परमात्मा स्यादित्यत आह– "मच्छिष्योऽपि " इति,। तच्छिष्यपरम्पराया एव सत्त्वादनिरूपित एव परमात्मा स्यादित्यर्थ ,।

शिष्यपरम्परानभ्युपगमात्परमात्मनो नानिरूपितत्वमिति मतान्तरमुत्थापयति— " यदपि " इति, । भवतु कल्पितभेदत्वं तथापि तत्त्वनिष्ठतयोपदेशक्रियैव न सम्भवेदिति परिहरति— " तदपि " इति, । परमार्थभेदाभावे प्राति-

मू०—शिष्याणां च स्वात्मनः परमार्थतो भेदाभावं कस्मात्तेभ्य उपदिशेत् कस्माच्चोपदिशन्नपि मम मुक्त्यैव भवन्तोऽपि मुक्ता न यत्नान्तरमाचरणीयमिति नोपदिशेद्, ।

आस्तां तावदपरः कथाप्रपञ्चः किमनादौ प्रपञ्चपरम्परायामासीत्कस्य चिन्मुक्तिर्नवेति निरूपणीयं यद्याद्यः कल्पः कथमधुना नः संसारदर्शनम—आत्मान्तरासम्भवाद्, यद्युत्तरः कथं तर्हि भविष्यतीत्यप्याशा, नच प्राग्विद्याऽभावादमुक्तिर्विद्योदये तु भविष्यतीति वाच्यं विद्याया अप्यनादिभवपरंपरायामनुत्पन्नाया उपर्यप्युत्पादे विश्वासकारणाभावात्प्रत्युत नोत्पत्स्यत इत्यत्र निश्चयः गुरुसंप्रदायाभावात्, तस्मादेकः परमात्मा स्वाविद्यया बध्यते स्वविद्यया च मुच्यत इत्ययमपि पक्षो दुर्युक्तिकः, तथा-

---

टी०—भामिकभेदसत्त्वादुपदेश इत्याशङ्क्य तर्हि इत्थमुपदिशेदित्याह—" कस्माच्च " इति, । प्रकारान्तरेणैकजीववादे मुक्तिसंसारयोरनुपपत्तिं विकल्पपूर्वकमाह—" आस्तां तावद् " इति, । कथमनुपपत्तिरित्यत आह—" आत्मान्तर " इति, । सम्प्रति विद्यासद्भावाद्भविष्यति मुक्तिरित्याशङ्क्य विद्याया अपि प्रागनुदये संप्रति तदुत्पत्तिनियामकाभावान्नैवमिति परिहरति—" नच " इति, । विद्यानुत्पादनिश्चयादप्येवमित्याह—" प्रत्युत " इति, । एकजीववादनिराकरणमुपसंहरति—" तस्माद् " इति, । तथापि स्वमतसिद्धिः कथमित्यत आह—" तथाच " इति, । सिद्धान्त-

मू०—चाविद्यावादानुपपत्तौ परिशेषतः परमार्थिक एवायं प्रपञ्चः पुरुषभेदश्चेति रमणीयमिति, ।

तत्राभिधीयते— यत्तावदुक्तं न परस्य ब्रह्मणो विशुद्धचित्प्रकाशस्येयमविद्या युक्ता प्रकाशाप्रकाशयोः परस्परप्रत्यनीकत्वादधिकरणाधेयभावानुपपत्तेरिति, तत्र प्रकाशाप्रकाशयोः प्रत्यनीकत्वादिति कोऽर्थः यदि प्रकाशतदभावयोः परस्परविरोधादिति, किमायातं प्रकृते नहि वयं प्रकाशाभावमविद्यामाचक्ष्महे येन सा प्रकाशात्मनि ब्रह्मणि न भवेदिति, उक्तंहि 'न भावो नाप्यभावः किंत्वनिर्वाच्यैवाविद्या' इत्यधस्तात्, अथाप्रकाशं जडं विवक्षितं कथं तर्हि तस्य प्रकाशप्रत्यनीकता सर्वस्यापि जडस्य प्रकाशसंबन्धादेव प्रतिभानाद्, यथोक्तं "त

---

टी०-मुपक्रमते—" तत्राभिधीयत " इति, । परमात्मनोऽविद्याश्रयत्वानुपपत्तिं प्रथमतो दूषयितुमनुवदति—" यत्तावद् " इति, । किमप्रकाशशब्देन प्रकाशाभावः किं वा जडमुतप्रकाशविरोधीति विकल्प्याद्यं दूषयति—" यदि " इति, । कथमभ्युपगमइति तत्राह—" उक्तं हि " इति, । द्वितीयमनूद्य दूषयति—"अथ" इति, । प्रत्यनीकतैव किं न स्यादित्यत आह—" सर्वस्य " इति, । विरोधे चैतन्यासम्बन्धेन जडस्य प्रतिभासो न स्यादिति भावः ।

उक्तेऽर्थे श्रुतिविरोधमुदाहरति—" यथोक्तम् " इति, ।

मू०—मेव भान्तमनुभाति सर्वम्' इति, नाप्रकाशस्य प्रकाशसंबंधो विरुद्धः किंतु प्रकाशाश्रयत्वमिति चेद्, नैतत्सारम्, उदाहरणाभावात्-किंखलु प्रकाशात्मत्वाच्चित्प्रकाशाश्रयं न भवतीति मां प्रत्युदाह्रियते सर्वस्यापि जडप्रपञ्चस्य चिदात्माधिष्ठानताभ्युपगमाद्, ।

अथाप्रकाशशब्देन प्रकाशविरुद्धतैवाभिहिता प्रकाशविरुद्धा चाविद्येति, तदप्यसारम्, अविद्यायाश्चित्प्रकाशविरोधासिद्धेः, यो हि चिदाश्रयामेवाविद्या ब्रूते कथं तमेव प्रति चित्प्रकाशविरोधस्तस्याः सिद्धवदभिधीयेत-प्रकाशविरोधाभावे तस्यास्तदनिवर्त्त्यत्वादानिवृत्तिः प्रसङ्ग इति चेद्, मैवं, प्रकाशान्तरनिवर्त्त्यतोपपत्तेः, यद् हि श्रुत-

---

टी०-जडस्य चैतन्यसम्बन्धेपि तदाश्रयत्वमनुपपन्नमिति शङ्कते—"नाप्रकाशस्य" इति, । दृष्टान्ताभावान्नैवमिति परि हरति—"नैतद्" इति, । तदेव स्फुटयति—"किं खलु" इति, ।

तृतीयं पक्षमनुवदति—"अथाप्रकाश" इति, । विरोधासिद्धेर्नैवमिति परिहरति—"तदपि" इति, । तन्निवर्त्यत्वे तद्विरोधित्वमिति शङ्कते—"प्रकाश" इति । तन्निवर्त्यत्वमसिद्धं प्रकारान्तरनिवर्त्यत्वादिति परिहरति—"मैवम्" इति, । प्रकारान्तरं दर्शयति—"यद् हि" इति, । श्रुतनयेनेत्यादिवि-

मू०—मयेन ज्ञानेन तत्त्वमभिज्ञाय युक्तिमयेन च व्यवस्थाप्य चिन्तामयीमेव मनीषामवलंबमानस्य तत्प्रकर्षपर्यंतजातांतःकरणपरिणतिभेदरूपं प्रकाशान्तरमुत्पत्स्यते न तस्याविद्याविनिवर्तकत्वे दोषः कश्चिद् ।

यथाच प्रकाशताऽविशेषेपि न चित्प्रकाशनिवर्त्यन्तमःपटलं किं तर्हि जडप्रकाशप्रदीपपरास्यम् एवं चित्प्रकाशानिवर्त्याप्यविद्या जडप्रकाशान्तः करणपरिणतिभेद ब्रह्मसाक्षात्कारविनिवर्त्तनीयेति सांप्रतं, चिदात्मप्रकाश एव वा जडप्रकाशबुद्धिभेदानुरक्तस्तन्निवर्त्तकः, केवल

---

टी०—शेषणैः साक्षात्कारहेतुतया श्रवणमननिदिध्यासनानि क्रमेणदर्शयति तस्याश्चिन्तामनीषायाः प्रकर्षस्य पर्यन्तः परिसमाप्तिस्तत्र जातो योयमन्तःकरणपरिणामभेदस्तस्याविद्यानिवर्तकत्वं न कश्चिद्दोष इत्यन्वयः, ।

नन्वप्रकाशत्वात्प्रकाशानिवर्त्यत्वे चित्प्रकाशानिवर्त्यतापि किं न स्यान्न चेज्जडप्रकाशानिवर्त्यतापि न स्यादित्यशङ्क्यान्धकारस्य सवितृप्रकाशनिवर्त्यत्वं चित्प्रकाशनिवर्त्यतापि स्यादिति वत् प्रसङ्गाभास इति परिहरति—" यथाच " इति, । दार्ष्टान्तिकमाह—" एवम् " इति, चित्प्रकाशानिवर्त्यत्वेपि न दोष इति परिहारान्तर माह-" चिदात्मा " इति, तर्हि सर्वदा तत्सत्त्वेनाविद्यानिवृत्तौ नित्यमुक्तैव स्यादित्याशङ्क्य सहकारिसव्यपेक्षस्य निवर्त्तकत्वान्नैवमिति परिहरति—" जडप्रकाश " इति, " बुद्धिभेद " इति, घटादिविषयवृत्तिव्यावृत्त्यर्थम, ननु केवलस्य

मू०—स्यासामर्थ्येऽपि सहकार्यन्तरसध्रीचीनस्य तदुपपत्तेः, दृश्यते हि दर्पणसहकृतार्कप्रभाया दग्धृत्वं, नचाविद्यात्मनस्तस्यान्तःकरणपरिणतिभेदस्याविद्यानिवर्तकत्वानुपपत्तिः, सजातीयस्वपरविरोधिनां भावानां बहुलमुपलम्भाद्, यथा खलु कतकरजः प्रक्षिप्तं पाथसि रजोन्तराविले रजोऽन्तराणि संहरत्स्वयमपि संह्रियमाण-



टी०-सामर्थ्ये बुद्धिभेदवैयर्थ्यमसामर्थ्ये सुतरामित्यत आह-"केवलस्य" इति, वेत्रबीजस्य स्वरूपेणासमर्थस्य दावदहनसापेक्षतया कदलीकाण्डजननवद् बुद्धिभेदसहितस्य चित्प्रकाशस्य तन्निवर्त्तकत्वमविरुद्धमित्यर्थ.। अविद्यारूपस्य कथमविद्यानिवर्त्तकत्वमित्यत आह—"नच" इति, यथा नैयायिकादिमतेऽन्त्यशब्दस्योपान्त्यं प्रति तद्ध्वंससहकृतस्य च स्वात्मानं प्रति निवर्त्तकत्वं विजातीयस्य चोत्तरसंयोगस्य कर्मनिवर्त्तकत्वं कारणविभागस्य च कार्यद्रव्यनिवर्त्तकत्वं तथात्रापीत्यर्थः ।

प्रस्तुतोपयोगितया सजातीयेन स्वेन च विरोधे निदर्शनमाह—"यथा" इति, । निदर्शने यद्यपि रजसो जलाद्वियोग एव न पुनरुपसंहारो रजःपटलस्याधोदेशे विद्यमानत्वात्तथापि रजसो जलाद्वियोगवदज्ञानस्य चिदात्मना वियोगे सत्याश्रयान्तरे सत्त्वाभावेन निवृत्तिरेवेत्यभिप्रेत्याभिहितमिति मन्तव्यम्, ।

मू०—मनाविलं पाथः कुरुते तद्, एतेन निखिलाविद्यानिर्वर्त्तकान्तःकरणपरिणतेः कुतो निवृत्तिर्, अनिवृत्तौ वा निर्मोक्षः निखिलाविद्यातत्कार्यनिवृत्तिरूपत्वान्मोक्षस्य, निवर्त्तकान्तराभ्युपगमे चानवस्थापात इत्यपि परास्तं, तस्याः स्वपरविरोधितोपपादनात्, स्वाश्रयनिवृत्त्या च तन्निवृत्त्युपपत्तेः; यथा खलु वेण्वाश्रयोऽग्निर्वेणुं विनाशयन् स्वयमप्याश्रयाभावाद्विनश्यति, एवमियमैकात्म्यविद्याप्यशेषप्रमात्रादिभेदनिवर्तका निराश्रया सती शाम्यतीति साम्प्रतम्, ।

तदुन्नीतया नीत्या नाविद्यायाश्चित्प्रकाशाश्रयताविरोधः, नापि तदाश्रयत्वे तस्या अनिवृत्तिः, नच तन्निवर्तकस्य निवर्त्तकान्तरं चिन्तनीयमित्यशेषमतिसुन्दरम्,

---

टी०—भावानां स्वपरविरोधित्वनिरूपणेन शङ्कान्तरमपि परास्तमित्याह—" एतेन " इति, । माभून्निवृत्तिरित्यत्राह—" अनिवृत्ताविद्यस्य " इति, । तदेव कथमित्यत आह—" निखिल " इति, । उपादाननिवृत्तावुपादेयनिवृत्तिरयत्नसिद्धेति परिहारान्तरमाह—" स्वाश्रये " इति, । यद्यपि वेणुर्न वन्हेरुपादानं तथाप्याश्रयनिवृत्त्याश्रितस्य निवृत्तिरस्त्येवेति भावः, दार्ष्टान्तिकमाह—" एवम् " इति, । परमप्रकृतमवान्तरप्रकृतं च भूयोपसंहरति—" तदुन्नीतया " इति, ।

मू०—यदपि जीवानामविद्याश्रयत्वानुपपत्तिरिति प्रपञ्चितं तदिष्टमेव चेष्टितमस्माकमायुष्मतेति परितोषमेव भजामहे, वयं हि ब्रह्मतत्त्वमेवैकमविद्याधिकरणमभ्युपगच्छामः, प्रतिषिद्धश्च पक्षेऽस्मिन्प्रागुक्तो दोषः, ।

यत्पुनः 'सर्वज्ञस्य ब्रह्मणः कथमविद्याश्रयत्वम् अविद्यावान्सर्वज्ञ इति विप्रतिषेधाद्'इति, तत्राविद्यावत्तयैव सर्वज्ञत्वमिति ब्रूमः, सर्वं हि यो जानाति स सर्वज्ञः, तिस्रश्चात्र विधाः सम्भवन्ति—प्रमाणतो वा सर्वं जानीयाद्,भ्रान्त्या वा—स्वभावसिद्धया वा प्रज्ञया, न तावत्प्रामाणिको भेद इत्युक्तं, नच भ्रान्तिरनविद्यस्येत्यपि, स्व-

टी०—जीवानामविद्याश्रयत्वदूषणं मदिष्टमेव भवतीत्याह—" यदपि " इति, । अविद्याया जीवानामनाश्रयत्वे तर्हि किमधिकरणमित्यत आह—" वयंहि " इति, । ननु तत्रोक्तो दोष इति, तत्राह—" प्रतिषिद्धश्च " इति, ।

स्ववचनविरोधं परिहरति—" यत्पुनर् " इति, । अविद्यावत्त्वेन सर्वज्ञत्वं दिदर्शयिषुः सर्वज्ञस्य स्वरूपमाह—" सर्वंहि " इति, । तथापि कथमविद्यावत्त्वमित्याशङ्क्य सर्वज्ञप्रकारभेदमाह—" तिस्रश्च " इति, । भ्रान्त्येति सम्भावनामात्रेण, प्रथमं दूषयति—" नतावद् " इति, । प्रपञ्चस्याप्रामाणिकत्वेन प्रमाणेन तद्विषयज्ञानमनुपपन्नमित्यर्थः, द्वितीयं दूषयति—" नच " इति, । इ-

मू०—रूपप्रज्ञयापि नान्तरेणाविद्यामशेषार्थसङ्गतिरसङ्गत्वाद्, 'असऽङ्गोह्ययं पुरुष' इति च श्रुतिः, नचान्तरेणाविद्यामस्ति संवन्ध इत्युपपादितम्, अतः सर्वज्ञताप्यविद्यावत्तामाक्षिपत्येव परमात्मनो न प्रतिक्षिपति, एवं चाविद्यावान्सर्वज्ञ इत्यसिद्ध एव विप्रतिषेधः, ।

यदपि ब्रह्मैव च स्वाविद्ययासंसरति विद्यया च विमुच्यत इति ब्रुवाणस्य न बन्धमुक्तिव्यवस्थोपपत्तिरिति, तदसत, तस्यैव कथंचित् तदुपपत्तेः, यावदविद्यं हि

---

टी०—त्युक्तमिति पूर्वेणान्वयः, अनिर्वचनीयख्यातौ भ्रान्तिरविद्याङ्गमयतीतिसाधितमित्यर्थः, तृतीये पुनरविद्यावत्त्वं सिद्धमित्याह "स्वरूप" इति, कुत इत्यत आह—"असङ्गत्वाद्" इति, । तदेव कथमित्यत आह—" असङ्गोहि " इति, । अन्तरेणाविद्यामस्ति लोके गुणगुण्यादिसम्बध इत्यत आह—" नच " इति, । सम्बन्धिभ्यामभेदेन दुर्निरूपतया सम्बन्धस्याविद्यामयत्वमभिहितम्—अनन्तरातीतवादे चिज्जडयोः सम्बन्धनिराकरणप्रस्ताव इत्यर्थः, फलितमाह—" अत " इति । अतो न स्ववचनविरोध इत्यत आह—" एवञ्च" इति, ।

एकजीववादेऽभिहितदोषमनुवदति— " यदपि " इति, । किमतात्त्विकी न सम्भवत्याहोस्वित्पारमार्थिकीति-विकल्प्याद्ये दोषमाह—" तदसद् " इति, । प्रतिभासमानशरीरेत्यर्थः । उपपत्तिमेव स्पष्टयति—" यावद् " इति, । द्वितीये दोषमाह—

मू०—सर्वा अपि व्यवस्थाः स्वप्नवदुपपद्यंते, विनिवृत्ताविद्ये तु ब्रह्मणि नेष्टैव काचिदपि व्यवस्था, नापि युक्ता, न खल्वंतरेणाविद्यां बंधमुक्त्यादिव्यवस्था प्रमाणतो निरूपयितुं शक्या परस्पराश्रयादित्युक्तम्, अतो यावदविद्यमविद्यावादिनस्तदुपपत्तिः, ।

अपरेषां तु न सा स्वरूपतोपि सिध्येद्, गुरुशिष्यव्यवस्थापि समानयोगक्षेमैव, ।

---

टी०—"विनिवृत्त" इति, । अथवा प्राक्तनस्वज्ञानादनुपपत्तिरुतोत्तरकालम्, इति विकल्प्याद्ये दोषमाह—" तदसद् " इति, । द्वितीये दोषमाह—" विनिवृत्त " इति, । तदुक्तं संप्रदायविद्भिराचार्यवर्य्यैर्—'न निरोधो नचोत्पत्तिर्नच वन्धो नच साधक', नमुमुक्षुर्नवै मोक्ष इत्येषा परमार्थता' इति, युक्तिरपि तत्र नास्ति इत्याह—" नापि " इति, । अयुक्तत्वमेव दर्शयति—" नखलु " इति, । सिद्धे भेदे व्यवस्थासिद्धिः सिद्धा व्यवस्था तत्साधिकेति प्रथमवादे परस्पराश्रयोभिहित इत्यर्थः, तेन मायावादिन एव व्यवस्थासिद्धिरित्युपसंहरति—" अत " इति, । पक्षान्तरे तदनुपपत्तिमाह—" अपरेषांतु " इति, । स्वरूपत =वस्तुनः, अपि शब्दादपारमार्थिका च न सिद्ध्येद् व्यवस्थानुपपत्तेर्दूषितत्वाद्, बन्धस्य च तात्त्विकत्वे ज्ञाननिवर्त्यत्वासम्भवादतात्त्विकव्यवस्थायाश्चानङ्गीकृतत्वादित्यर्थः, । वन्धमोक्षयोरुक्तं न्यायमन्यत्राप्यतिदिशति—" गुरुशिष्य " इति, । उत्पन्नविद्यस्य शिष्यभावः स्वीकृत ए-

मू०—यत्तु 'यद्युत्पन्ना विद्या कस्तदा शिष्य' इति, न कश्चिदिति ब्रूमः, कथं तर्ह्यसावुपदिशेत्, न कथं चिदित्येवात्राप्युत्तरं, यावदविद्यमेव हि गुरुशिष्यादिव्यवस्थाभिमतोपपन्ना च, ।

यत्तु यदि नोत्पन्ना विद्या कस्तदा गुरुरात्मान्तराभावाद्, नचान्तरेण गुरुं विद्योत्पत्तिर्, 'आचार्यवान्पुरुषोवेद' इति श्रुतेरिति, तत्राप्ययं समाधिरवधार्यताम्—अन्तरेणाप्यात्मभेदं पारमार्थिकमस्त्येव मायाविनिर्मितो गुरुशिष्यभाव इति, ।

यत्पुनरुत्पन्नविद्यस्य गुरोर्मायाऽयोगाच्छिष्यसंगत्यनुपपत्तिरिति, तदप्यसद्, गुरोरपि शिष्याविद्याविनिर्मितत्वाद् ।

---

टी०—वेति दूषयति—"नकश्चिद्" इति, । शिष्याभावे कथमुपदेशक्रियेति शङ्कते—"कथंतर्हि" इति, । शिष्याभावादुपदेशोऽपि नास्तीति परिहरति—"नकथञ्चिद्" इति, । तत्किमिदानीं व्यवस्था स्वीकृतैव स्वीकृतैवाविद्यादशायामित्याह—"यावद्" इति, । गुरोरभावेन विद्यानुपपत्तिमुक्तामनूद्य दूषयति—"यत्तु" इति, । मायामयत्वेऽभिहितामनुपपत्तिमनूद्य दूषयति—"यत्पुनर्" इति, । गुरोरविद्याभावेऽपि तस्य शिष्याविद्याकल्पितत्वे दोषाभावादित्यर्थः, ।

मू०—यदपि 'तस्य कल्पितस्य जडत्वेन विद्यावत्तानुपपत्तौ गुरुत्वानुपपत्तिरिति, तदपि मन्दं, स्वप्नवद्विद्यावत्तयैव तत्परिकल्पनोपपत्तेः ।

यदपीदं 'तत्किमिदानीं त्वदविद्याविरचितस्त्वद्गुरु-रिति, तत्र बाढमित्येवं ब्रूमः ।

यत्तु 'मदविद्याविनिर्मितस्त्वं किं न स्याः' इति, तत्र त्वदविद्यायास्तत्र च मद्गुरुवन्मदविद्याविजृंभितत्वादिति ब्रूमः, यथा खल्वहं मदुपदेष्टारं मदविद्ययैव पश्यामि तथा मदुपदेश्यानपि भवदादीन्, अप्रामाणिकत्वादखिलभेद-दर्शनस्याविद्यामूलताया अवश्याश्रयणीयत्वात् ।

---

टी०—कल्पितस्य विद्यावत्त्वमनुपपन्नमित्युक्तमनूद्य दूषयति—"यदपि" इति, । परमार्थतो विद्यावत्ताभावेपि कल्पनया तत्सम्भवाद् गुरुत्वमुपपन्नमित्यर्थः, ।

शिष्याविद्याकल्पितत्वं गुरोरनुपपन्नं शिष्यस्यापि शिष्या-न्तरं प्रति गुरुत्वेन कल्पितत्वादित्युक्तमनूद्य दूषयति—"यत्तुमदविद्या" इति, । अकल्पितस्यैकस्याविद्ययैव सकलगु-रुशिष्यपरम्परायाः कल्पितत्वे न किञ्चिदनुपपन्नमित्यर्थः, तदेवो-दाहरणेन स्पष्टयति—"यथा" इति, । कुत इत्यत आह—"अप्रामाणिकत्वाद्" इति, ।

मू०—नन्वहमपीत्थं शक्नोम्येव वक्तुं मद्गुरुं त्वां मदीयां-श्चशिष्यसंघान्मदविद्ययैव पश्यामि प्रामाणिकत्वाभावादेव भेददर्शनस्येति मच्छिष्योपि मां प्रत्येवमेव ब्रूयात्तत्र कुतो विनिर्णय इति,

अवधार्य्यतामिदमवहितमनसा पितृमता मदविद्याविजृम्भित इति केनचित्परिच्छेदेन क्रोडीकृतं चैतन्यमभिधीयते किं वा निर्मृष्टनिखिलभेदं, न तावत्प्रथमः पक्षः परिच्छेदक्रोडी कृतस्य परिछेदकल्पितत्वादविद्याश्रयत्वानुपपत्तेः,यद्युत्तरः पक्षः सिद्धं मे समीहितं, अहमपि खल्वेतदेव ब्रवीमि निर्मृष्टनिखिलभेदमेकमेव ब्रह्मानाद्यविद्याविनिर्मिततत्तत्परिच्छेदान् पश्यन्संसरतीति,

---

टी०-प्रतिवादिनाप्येवं वक्तुं सुकरं तथाचाविनिरूपितः परमात्मा स्यादिति शङ्कते—" नन्वहम् " इति,।

दूषयितुमुपक्रमते—" अवधार्यताम् " इति, । पितृमता-इत्युपहासवचनं लक्षणया शिक्षितत्वाभावद्योतनाय, परिशेषेणाकल्पितस्याविद्याश्रयत्वं दर्शयितुं विकल्पयति—" मदविद्या " इति, । केनचित्-इति-शरीरेन्द्रियादिविशेषणेनेति यावत्, विशेषणतत्सम्बन्धयोः कल्पितत्वेन विशिष्टस्यापि कल्पितत्वादविद्याश्रयत्वमनुपपन्नमित्यर्थः, उत्तरपक्षोऽऽङ्गीक्रियत इत्याह—"यद्युत्तर" इति । समीहितसिद्धिमेवस्पष्टयति—" अहमपि " इति,। ननुशरीरेन्द्रियादिविशिष्टमस्तुमच्छब्दवाच्यं तद्गताविद्याकल्पि-

मू०—तादृशमेव चाकारमभिप्रेत्य मच्छब्दोऽपि मया प्रयुक्तो न पुनः परिच्छिन्नाकारम् ।

न चेत्परिच्छिन्नानामविद्या विद्या वा कथं तर्ह्यावयोः परिच्छिन्नयोरन्येषां च वादिप्रतिवादिनां मदविद्याविजृम्भितस्त्वं मदविद्याविजृम्भितस्त्वमिति मुहुर्मुहुः कोलाहल इति चेत्, आवामिति, अन्ये इति च, वादिप्रतिवादिनाविति च, परस्परकोलाहल इति च, विनाप्यविद्यां तत्तत्परिच्छेदेषु स्वप्न इव परस्मिन्नयमात्मन्यविद्याधीन एकस्मिन्नेव प्रतिभासः स्वप्नदृशीव चिदात्मनीति संतोष्टव्यम्, एवं च सति सत्यं त्वदविद्याविनिर्मित एवाहमपीति चेदित्याशङ्क्यं कथं तर्हि त्वदविद्याविनिर्मितस्त्वद्गुरुरविद्याकल्पितस्याविद्याश्रयत्वानङ्गीकारादिति चोपालम्भः, तथा

---

टी०—तत्त्वे कथं शुद्धचैतन्यनिष्ठाविद्याकल्पितत्वमित्यत आह—"तादृशमेव" इति । अहं ब्रह्मास्मीतिवत्परिशोधितत्वम्पदार्थविषयोऽयं मच्छब्द इत्यर्थः ।

कथकव्यवहारान्यथानुपपत्त्या परिच्छिन्नस्याविद्याश्रयत्वमिति शङ्कते—" न च " इति । परिच्छिन्नेष्वविद्यामन्तरेण व्यवहारस्य स्वप्नवदुपपत्तेर्नैवमिति परिहरति—" आवाम् " इति । अविद्याया विशुद्धचैतन्यगतत्वप्रतिपादनात् पूर्वपक्षेऽभिहितशङ्कोपालम्भपरम्पराऽऽस्थाने सम्भ्रम इत्याह—" एवञ्च " इति ।

मू०—चाहं मद्गुरुश्च सर्वेऽपि त्वदविद्याविनिर्मितास्त्वं पुनः परमात्मेति चेदिति शङ्कान्तरं, तत्किमिदानीं मच्छिष्याय मयाप्येवमेवोपदेष्टव्यमित्युपालम्भान्तरम्, अद्धेति चेत्कथं तर्हि तदविद्याविनिर्मितोऽहं परमात्मा, सन्ति च मच्छिष्यास्तेभ्यश्च मयोपदेष्टव्यं मच्छिष्योऽपि चेदुपदिशेदन्यस्मै सोऽपि यावदुपदेशमेव परमात्मेति सुनिरूपितः परमात्मेति साशङ्कमुपलम्भान्तरं निखिलमप्येतदाकाशविभ्रान्तमित्युपहसन्ति पण्डिताः ।

परिच्छिन्नाविद्यानिबन्धने हि परिच्छेदान्तरपरिकल्पिते प्रसज्येतासौ शङ्कोत्तरपरम्परा विधूताखिलपरिच्छेदस्य तु चिदात्मनो मायाविनिर्मितः परिच्छेदप्रपञ्च इत्युक्ते कुतोऽस्याः प्रसङ्गः ।

एवञ्च यदपि मतं स्वात्मानमेव परिकल्पितभेदं गुरुः शास्तीत्यनुभाष्य तदप्यसंगतं गुरुर्हि स्वात्मनो मुक्तिं निश्चिन्वंच्छिष्याणां स्वात्मनः परमार्थतो भेदाभा-

---

टी०—उपहासमात्रेण कथं तन्निराकरणमित्यत आह—"परिच्छिन्न" इति । कथ तर्हि तदभ्युपगम इति, तत्राह—" विधूत " इति ।

स्वात्मानमेव कल्पितभेदं गुरुः शास्तीति पक्षे तत्रोपदेशाभावे तत्सत्त्वेऽपि तत्प्रकारभेदमुक्तमनूद्य दूषयति—" एवञ्च " इति ।

उत्पन्नविद्यस्योपदेशानङ्गीकारादनुक्तोपालम्भोऽयमित्यर्थः, । कथं

मू०—यं कस्मात्तेभ्य उपदिशेत्कस्माच्चोपदिशन्नपि मन्मुक्त्यैव भवतोऽपि मुक्तौ न यत्नान्तरमाचरणीयमिति नोपदिशतीत्यपि यदिदं दूषणमभ्यधायि तदप्यस्थाने भ्रान्तं, न हि वयं परमार्थत उत्पन्नविद्यो मुक्तश्च गुरुः स्वात्मनः कल्पितभेदं शिष्यं शास्तीति ब्रूमो येनायं पर्यनुयोगः, किन्तु विधूताखिलभेदमेकमेव चैतन्यमनाद्यविद्याविनिर्मितगुरुशिष्यविभागं काल्पनिकगुरुपरिच्छेदजनितविद्याविनिवर्त्त्यनिःशेषाविद्यं मुच्यत इति, न च कल्पितं गुरुं प्रति कश्चन पर्यनुयोगो युक्तः, कस्मादयमित्थं कुरुते कस्माच्च नेति माहेन्द्रजालनिर्मितगुरुविशेषवत्तस्यावस्तुत्वेनाखिलपर्यनुयोगायोग्यत्वात् ।

यश्चायं पर्यनुयोगः किमनादौ प्रपञ्चपरम्परायामासीत् कस्यचिन्मुक्तिर्नो वेति निरूपणीयं, यद्याद्यः कल्पः कथमधुना नः संसारदर्शनमात्मान्तरासम्भवात् ।

---

टी०—तर्हि तदभ्युपगम इति तत्राह—" किन्तु " इति । काल्पनिको यो गुरुलक्षणः परिच्छेदस्तज्जनिता या विद्या तया विनिवर्त्त्यनिःशेषाऽविद्या यस्मिन्ब्रह्मणि तत्तथोक्तं तथापि कल्पितो गुरुर्मन्मुक्त्यैव भवन्तोऽपि मुक्ता इति कस्मान्नोपदिशेदित्यत आह—" नच " इति । कुतो न युक्त इत्यत आह—" महेन्द्र " इति ।

प्रागितो मुक्तिसत्त्वे संसाराभावोऽसत्त्वे च विद्याऽनुपपत्तौ तदभाव इत्युक्तमनूद्योत्तरपक्षाङ्गीकारेण परिहरति—" यश्च " इति ।

मू०—यद्युत्तरः कथं तर्हि भविष्यतीत्यप्याशेति, तत्रोत्तरपक्षमेवाङ्गीकुर्मो न प्राच्यं, तेन नाद्यतनसंसारोपलम्भानुपपत्तिः, परेषामेव तु तदनुपपत्तिः, तथा ह्येकैकस्मिन्कल्प एकैकमुक्तावप्यतीतकल्पानन्त्यादनन्तानामप्यात्मनां क्रमेणातीतकल्पेष्वेव मुक्त्युपपत्तेः साम्प्रतं संसारोपलम्भो न स्यात्, न च वाच्यमात्मानो यावन्तो न सन्ति तावन्तः कल्पा अतीता इति, । तथा सत्यतीतकल्पानामियत्तावधारणासम्भवेन संसारसादिताप्रसङ्गात्सकलजीवानां, तथा च प्राचीनभवोपार्जितपुण्यापुण्यशून्यानामप्याकस्मिकसंसारसम्भवे मुक्तानामपि पुनस्तत्सम्भवादपुनरावृत्तिश्रुतिः पीड्यते तस्मादेकैकमाषाऽपचये निखिलमाषराश्यऽपचयवदेकैकपुरुषमुक्तावतीतानन्तकल्पेष्वखिलपुरुषमुक्तेरद्यतनः संसारो न कस्यचित् स्यात् ।

---

टी०—संसारोपलम्भाभावं परमते च दर्शयति—" परेषाम् " इति, । कुत इत्यत आह—" तथा हि " इति, ।

आत्माऽसमानकल्पानामतीतत्वाद्प्रसङ्गोऽयमित्यत आह—"न च" इति, अत्र हेतुमाह—" तथा सति " इति, सादित्वे दोषमाह—"तथा च" इति, उदाहरणमुपदर्शयन्फलितमाह—"तस्मात्" इति

मू०—अथापि स्यान्नापरिमितानामन्तन्यूनातिरेकाः सम्भवन्ति जीवाश्चापरिमितास्तस्मान्न दोषः कश्चित्, यथोक्तम् ।

अत एव च विद्वत्सु मुच्यमानेषु सन्ततम् ।
ब्रह्माण्डलोकजीवानामनन्तत्वादशून्यता ॥ इति ।
अन्तन्यूनातिरिक्तत्वे युज्यते परिमाणवत् ।
वस्तुन्यपरिमेये तु नूनं तेषामसम्भवः ॥ इति,

तदप्यलीकं पुरुषाणामपरिमेयतायाः साधकाभावाद्बाधकसद्भावाच्च, तथा हि न तावदज्ञातसंख्यत्वमपरिमे-

---

टी०—आत्मनामपरिमितत्वेनोक्तदूषणानवकाश इति शङ्कते—" अथापि " इति, अन्तः-परिसमाप्तिः, संख्याऽपचयप्रचयाभ्यां, न्यूनातिरेकौ प्रसिद्धौ । भवतु तथापि जीवानां किमायातमित्यत आह—" जीवाश्च " इति, ।

उक्तेऽर्थे वार्त्तिकमुदाहरति—" यथोक्तम् " इति, अत एव परिमितत्वं नेति यावत् कुतस्तर्हि शून्यतेत्यत आह—" अत "इति, अन्तश्च न्यूनत्वं चातिरिक्तत्वं चेति द्वन्द्वैकवद्भावे नपुंसकत्वं, पुरुषाणां तथात्वे शून्यता युज्येत परिमाणवत्परितो मानं यस्य वस्तुनस्तथा परिमितवस्तुवदित्यर्थः । अथवा परिमाणवत्परिमाणयुक्तं वस्तु अन्तन्यूनातिरेकपक्षेषु तत्सम्भवतीत्यर्थः, प्रस्तुतेपि तथा किं न स्यादित्यत आह—" वस्तुनि " इति, तेषाम्—अन्तन्यूनातिरिक्तानामिति यावत्, ।

अपरिमितत्वमसिद्ध्या दूषयति—" तदपि " इति, साधकाभावं दर्शयितुमुपक्रमते—" तथा हि " इति, नन्वज्ञातसंख्यत्वमेव तत्साधकमित्याशङ्क्य तत्किं पुरुषविशेषस्योत सर्वेषामिति विकल्प्याद्यं दर्शयति—" न तावत् " इति, द्वितीयं दूषयति—

मू०—यत्त्वसाधकं कस्यचिदज्ञातसंख्यत्वं चेत्साधनं माषादिराशिभिरनैकान्तः, सर्वेषामज्ञातसंख्यत्वं तु सन्दिग्धं, बाधकं च नाना परिमिता आत्मानो भिन्नत्वादेकप्राङ्गणपरिनिष्ठितमाषवदिति, न चातीतकल्पैर्व्यभिचारः, तेषां तद्भेदस्य तदानन्त्यस्य च सर्वस्याप्यप्रामाणिकत्वेनाविचारितरमणीयत्वात्, वास्तवपरिमेयतानिराकरणसाधनस्य व्यभिचारताऽनुपपत्तेः, ।

यत्पुनरुत्तरस्मिन्कल्पे दूषणम् अतीतानन्तकल्पेषु न चेत्कस्य चिन्मुक्तिर्विद्या चोदपादि कथंतर्हि भवि-

---

टी०—"सर्वेषाम्" इति, सन्दिग्धमित्यसर्वज्ञेन ज्ञातुमशक्यत्वादसिद्धतैवेति भावः। इदानीं बाधकमाह—" बाधकं च " इति, अतीतकल्पानां भिन्नत्वेऽपि परिमितत्वाभावादनैकान्तिकतेत्याशङ्क्य परिहरति—" न च " इति, पारमार्थिकापरिमितत्वाभावस्य साधनात्कल्पानां च प्रपञ्चान्तर्गत्वेनालीकतयाऽपारमार्थिकाऽपरिमितत्वाभावान्न सव्यभिचारता तथापि ब्रह्मणि व्यभिचारस्तस्यापि प्रपञ्चभिन्नत्वादिति न वाच्यं सति धर्मिण्यबाधितभेदवत्त्वस्य विवक्षितत्वात्सति ब्रह्मणि यत्र त्वस्येति श्रुत्यैव भेदस्य बाधितत्वेन हेतोस्तत्राप्रवृत्तेरिति भावः ।

इतः प्राङ् मुक्तिविद्ययोरभावे तयोः संप्रति का सम्भावनेति चोद्यमनूद्य दूषयति—" यत्पुनः " इति ब्रह्मविदाप्नोति परमित्यादिश्रुत्या ज्ञानमोक्षयोरविद्याभावनियतकालतयाऽभिधानात् संप्रति च संसारदर्शनेन प्रागभावेऽपि शास्त्रप्रामाण्यादेव तयोर्भविष्यत्कालसम्बन्धनियमः अन्यथा श्रुतेरप्रामाण्यप्रसङ्गादिति भावः ।

मू०—ष्यतीत्यप्याशेति तत्र मोक्षशास्त्रप्रामाण्यादेवेति परितोष्टव्यं, यत्तु गुरुसंप्रदायाभावान्नोत्पत्स्यत एव विद्येति, तदप्यसत्, काल्पनिकगुरुसंप्रदायद्वारत एव तदुपपत्तेः यथा च कल्पितोऽपि गुरुस्तथोपपादितमेवाधस्तात्, एवं चैकस्यैव बन्धमोक्षयोर्नान्योऽतोऽस्ति द्रष्टेत्यादिकाः श्रुतय उपपन्नार्थाः, व्यवस्थाश्रुतयस्तु गवां सत्रासनश्रुतिवत्कथं-

———

टी०—गुरुसंप्रदायाभावेन विद्याभावनिश्चयमनूद्य दूषयति—"यत्तु-गुर्वि" इति, कल्पितस्य गुरोर्विद्यावत्त्वमनुपपन्नमित्यत आह—"यथाच" इति, विद्यावत्त्वेन कल्पितत्वस्याभिहितत्त्वाद्विरोध इत्यर्थः ।

युक्तिभिरनुग्राह्यां श्रुतिमाह—"एवं च" इति, न चान्तर्यामिब्राह्मणे नियन्तुरेवातः शब्देन परामर्शान्नियन्त्रन्तरप्रतिषेधार्थमेव तद्वचनमिति सांप्रतं श्रुतितः परीक्षकसंगत्या वा नियन्त्रन्तरस्याप्रसङ्गेनाप्रसक्तप्रतिषेधप्रसङ्गात्, अन्योऽतोऽस्ति नियन्तेतिविशेषस्याश्रवणाच्चेति भावः ।

'तद्योयो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां, इन्द्रो देवानामभिप्रवव्राज विरोचनोऽसुराणां, तथा 'तत्पश्यन्नृषिर्वामदेवः प्रतिपेदे, तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः,इत्यादिश्रुतिभिरात्मभेदबन्धमोक्षव्यवस्थाप्रतिपादनादभिहितवचनस्य संकोच इत्याशङ्क्य परिहरति—" व्यवस्थाश्रुतय " इति, यथा गवामयनेन यन्तीतिविहितसत्रयागस्य गावो वै सत्रमासत इति वाक्यशेषे श्रूयमाणं गवां सत्रासनमर्थवादतयैवावतिष्ठते गवां कर्मानधिकारादेवमहं ब्रह्मास्मीति ज्ञानादात्मभावप्रतिपादकवाक्यस्य सन्निधौ श्रूयमाणानि भेदप्रतिपादकवाक्यानि मुमुक्षुप्ररोचनार्थतयैव व्यव-

मू०—चिदर्थवादभावेनान्यपरा व्याख्येयाः, तदेवं ब्रह्मैव स्वाविद्यया संसरति, विद्यया च विमुच्यते इति ब्रह्माश्रयैवाविद्या न पुनर्जीवाश्रयेत्यनाविलमशेषम् ।

"अविद्यास्तमयो मोक्ष इति तावत्समर्थितम्, ।
तेन मोक्षाभ्युपायत्वं विद्याया न तु कर्मणाम्" ॥

यतश्चाविद्यास्तमयो मोक्षस्तेन कर्मणा मोक्ष इत्यपि परास्तं, विद्यैव ह्यविद्याव्यावृत्तिहेतुः, न खलु शुक्तिशकलादिषु समुत्पन्नस्तत्त्वसाक्षात्कारो न निवर्त्तयत्यविद्यां निवर्त्तयन्वा सहकारि-

---

टी०—तिष्ठन्ते अन्यथैकमेवाद्वितीयामिति सकलभेदनिषेधकाद्वितीयश्रुतिविरोधादिति भावः ।

वादार्थमुपसंहरति—" तदेवम् " इति, वृत्तकथनपूर्वकमुत्तरवादं प्रस्तौति—" अविद्या " इति, येन कारणेनाविद्याव्यावृत्तिरेव मोक्षः तेन विद्याया एव तत्साधनत्वं न कर्मणां, लोके तत्त्वज्ञानस्याप्यविद्यानिवर्तने कर्मानपेक्षत्वादिति भावः ।

श्लोकस्योत्तरार्द्धं व्याचष्टे—" यतश्च " इति, कथमित्यत आह—" विद्यैव हि " इति तदेव कथमित्याशङ्क्य लोके तथा दृष्टत्वादित्याह—" न खलु " इति, केवलं धर्म्मव्युदासाय—"साक्षात्" इति, साक्षात्कार एव निकटोपसर्पणादिहेतोर्निवर्त्तकत्वमित्यत आह—" निवर्तयन्वा " इति, निकटोपसर्पणादेः साक्षात्कारजनकतयाऽन्यथासिद्धत्वादिति भावः ।

मू०—किञ्चिदपेक्षते । न चान्तरेण तत्त्वसाक्षात्कारं जातु कर्मणा तन्निवृत्तिः । एवं लोकानुसारतो ब्रह्मसाक्षात्कार एव तदविद्याव्यावृत्तिहेतुरिति सांप्रतम् ।

अपि च श्रुतिस्मृतिभ्यां कर्मणां मोक्षकारणत्वाभावः । तथा हि—

तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय । न कर्मणा न प्रजया धनेन । एतावदरे खल्वमृतत्वम् । इति श्रुतयः ।

स्मृतयश्च—

"यज्ञेन देवानाप्नोति वैराजं तपसा पुनः ।
संन्यासाद्ब्रह्मणः स्थानं वैराग्यात्प्रकृतौ लयः" ॥

---

टी०–मास्तु तर्हि साक्षात्कारस्य तन्निवर्त्तकत्वमित्यत आह—"न चान्तरेण" इति, निकटोपसर्पणादिभावेऽप्यनुत्पन्नसाक्षात्कारस्य भ्रमानुवृत्तेस्तत्त्वसाक्षात्कारस्य तन्निवर्त्तकत्वादेव श्रुतिस्मृतिष्वङ्गीकरणीयमित्यर्थः । भवतु लोके, तथापि ब्रह्मसाक्षात्कारस्य किमायातमित्याशङ्क्य साक्षात्कारत्वहेतुना शुक्तिकादिसाक्षात्कारवदन्यनिरपेक्षतयाऽविद्यानिवर्तकत्वानुमानादिति परिहरति—" एवम् " इति ।

न केवलमनुमानादेव, श्रुतिस्मृतिषु कर्मणो मोक्षसाधनत्वनिराकरणादपीत्याह—"अपि च" इति, एवकारनिवर्त्यमाह—"नान्य" इति, मैत्रेयीब्राह्मणे विज्ञानात्मस्वरूपज्ञानमभिधाय एतावदमृतत्वसाधनमित्यभिधानात् कर्मणां मोक्षसाधनत्वाभाव इत्यर्थः । स्मृतीराह—" स्मृतयश्च " इति, तपसा कृच्छ्रचान्द्रायणादिना, वैराजं पदं हिरण्यगर्भपदमिति यावत् । संन्यासात्संन्यासाश्रमग्रहणात्, ब्रह्मणः स्थानं सत्यलोकप्राप्तिः, वैराग्यादिहामुत्रफलभोगविरागात्प्रकृतौ लयः प्रकृत्यभिमानिनी (मानि)देवताप्राप्तिः । एवं कर्मणामितरफलसाधनत्वमभि-

मू०—"ज्ञानादेव च कैवल्यं प्राप्यते येन मुच्यते ।
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ॥

इति कर्मणां मोक्षसाधनतां व्यावर्त्तयन्ति ।

स्यादेतत्, केवलकर्मणां मोक्षसाधनताव्यावृत्तिपराण्युदाहृतानि वाक्यानि । ज्ञानसमुच्चितानान्तूपपद्यत एव कर्मणां मोक्षसाधनभावः, तथा च स्पष्टमीशावास्ये ज्ञानसहितस्य कर्मणो मोक्षकारणभावोऽवगम्यते, तत्र हि

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥

इत्येकैकनिन्दां प्रक्रम्य—

विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥

---

टी०—धाय मोक्षस्य ज्ञानैकसाधनतामाह—"ज्ञानादेव" इति, विद्याया मोक्षसाधनत्वं कर्मणां तदभावं दर्शयति—"कर्मणा" इति ।

प्रतिषेधवचनानि केवलकर्मविषयाणीति शङ्कते—"स्यादेतत" इति, तथाऽपि भवत. को लाभ इत्यत आह—"ज्ञानसमुच्चितानाम्" इति, ज्ञानसमुच्चितानां साधनत्वे किं प्रमाणमित्यत आह—"तथा च" इति, तदेव दर्शयति—"तत्र" इति, अविद्यामविद्याकार्यं कर्मोपासते अनुतिष्ठन्तीति । वाक्यस्य तात्पर्यमाह—"एकैकेति" पूर्वार्द्धेन कर्मणा ज्ञानस्य चोत्तरार्द्धेन निन्देत्यर्थः । ननु तत्त्वज्ञा-

मू०—इति विद्याकर्मणोरुभयोरपि कार्यभेदेनापवर्गोपयोगः प्रतीयते ।

अयं भावः, संसारनिवृत्तिर्ब्रह्मप्राप्तिश्च मोक्षः, तत्र मृत्युपदवेदनीयकर्मक्षयद्वारेण संसारनिवृत्तौ विद्येतरत्वेनाविद्यामूलत्वेन वा ऽविद्याशब्दवाच्यानां कर्मणामुपयोगः, ब्रह्म त्वात्मतया नित्यप्राप्तमप्यविद्यामात्रतिरोहितं कण्ठगतचामीकरवत् न तत्राविद्यानिवृत्तेरधिकं कर्मकार्यमस्तीत्यविद्यानिवृत्तौ विद्याया उपयोगः । तदिदमुक्तं 'विद्ययाऽमृतमश्नुत' इति ।

---

टी०—न कर्मणामभिन्नमेव कार्यं निर्दिष्टमिति तत्राह—"कार्यभेदेन" इति ।

ननु विद्ययाऽमृतमश्नुत इति ज्ञानस्यैवापवर्गोपयोगप्रतीतेर्न कर्मणामत्रोपयोग इत्याशङ्काभिप्रायमाह—" अयं भाव " इति, अंशभेदेनोभयोरप्युपयोगं दर्शयितुमंशद्वयघटितमोक्षस्वरूपमाह—" संसार " इति, नन्वऽविद्यया मृत्युतरणमेव प्रतीयते न कर्मणा संसारनिवृत्तिरिति तत्राह—" तत्र " इति, मृत्युमाध्वनत्वान्मृत्युपदवेदनीयं कर्म तद्द्वारेणेति यावत्, तथाऽप्यविद्याशब्देन कथं कर्माभिधीयत इत्यत आह—" विद्येतरत्वेन " इति, ब्रह्मप्राप्तावपि कर्मणामेवोपयोगः किं न स्यादित्यत आह—" ब्रह्म तु " इति, नित्यप्राप्तत्वे सर्वेषामेव मुक्तिरित्यत आह—" अविद्या " इति, मात्रपदेन कर्मकार्यं व्यावर्त्तयति, तथाऽपि कर्मणामनुपयोगः कथमिति तत्राह—"न तत्र" इति, कर्मकार्यमुत्पत्त्यादि चतुर्विधम् । उक्तेऽर्थे श्रुतिमवतारयति—" तदिदम् " इति ।

देवताविज्ञानस्य कर्मणां समुच्चयप्रतिपादकमिदं वचनमिति सा-

मू०—यत्तु परेषां व्याख्यानं देवताज्ञानमिह विद्याशब्देन विवक्षितम्, तस्य कर्मणा समुच्चयोऽनेन कथ्यत इति, तत्प्रक्रमाननुगुणत्वादयुक्तम्, ईशावास्ये परमात्मन एव प्रक्रान्तत्वात्। तथा—सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग् ज्ञानेन ब्रह्मचर्येण नित्यमिति तेनैति ब्रह्मवित्पुण्यकृदिति च स्पष्टः समुच्चयप्रतिभासः।

तथाच भगवता 'तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च' इत्यादि स्पष्टम्। अभिहितं च श्रीपराशरेण—

'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने। इति,

दक्षेणापि—

यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम्।
एवं तपश्च विद्या च संयुक्तं भेषजं महत्॥ इति,

मनुनाऽप्युक्तं—

---

टी०—व्यकारीयं वचनमनूद्य दूषयति पूर्ववादी—"यत्तु" इति, अननुगुणत्वमेव दर्शयति—"ईशावास्य" इति, समुच्चयप्रतिपादकानि वाक्यान्तराण्युदाहरति—"तथा" इति, सत्यतपोब्रह्मचर्याणां ज्ञानेन समुच्चयः प्रतीयत इत्यर्थः। एष पन्था ब्रह्मणा सह जनक इत्युपक्रम्य तेनैति ब्रह्मवित्पुण्यकृदिति ब्रह्मवित्पुण्यकृतोः समुच्चयः प्रतीयत इत्याह—"तेन" इति, भगवद्गीतामुदाहरति—"तथा च" इति, क्षत्रस्य युद्धकर्मणो मामनुस्मरेत्यभिहितज्ञानेन समुच्चयः प्रतीयत इत्यर्थः। एवं समुच्चयस्य वचनेन प्रतिपादितत्वात्कर्मप्रतिषेधवचनानि केवलकर्मविषयाणीत्युपसंहरति—"तस्मात्" इति।

मू०—तपो विद्या च विप्रस्य निःश्रेयसकरं परम् । इति । तस्माद्वाचनिकसमुच्चयानुसारेण कर्मप्रतिषेधवचनानां केवलकर्मविषयतेति साम्प्रतम् ।

कस्मात्पुनः समुच्चयवचनानां पारम्पर्यसमुच्चयार्थत्वं लाङ्गलभोजनयोरिव तृप्तौ न गृह्यते, मोक्षस्य ज्ञानं साधनं, कर्माणि तु पापापाकरणद्वारेण ज्ञानसाधनानीति ।

यदपि किञ्चित्केवलकर्मणा मोक्षकारणतावचनं, तदेतदपि लाङ्गलेन वयं जीवाम इतिवत्पारम्पर्येणान्वयं लक्षयतीति ।

निषेधस्य प्राप्तिसापेक्षतया दुर्बलत्वादिति चेत्, मैवम्,

---

टी०—उक्तवचनानां पारम्पर्यसमुच्चयतयाऽप्युपपत्तौ न तुल्यवत्त्वसमुच्चय इत्यभिप्रेत्य पूर्ववादिमत दूषयति सिद्धान्ती—"कस्मात्" इति, लाङ्गलं सस्यनिष्पत्तिद्वारा भोजनसाधनं, भोजनं पुनः साक्षात्तृप्तिसाधनमित्यर्थः । प्रकृते समुच्चयप्रकारमाह—"मोक्षस्य" इति,

कथं तर्हि कर्मणैव संसिद्धिमित्यादि केवलस्य कर्मणो मोक्षसाधनत्ववचनमिति तत्राह—"यदपि" इति, परम्परया समुच्चयप्रतिपादकवचनविरोधादन्धन्तमो न कर्मणेत्यादिकेवलकर्मनिषेधवचनविरोधाच्च तदपि पारम्पर्येण मोक्षान्वयं लक्षयतीति भावः ।

प्राप्तिपूर्वकत्वात्प्रतिषेधस्य प्रत्यक्षाद्यविषयतया च केवलकर्मणः शास्त्रेणैव मोक्षसाधनत्वप्राप्तेरुपजीव्यविरोधात्तन्निषेधो दुर्बल इति केवलकर्मवादी शङ्कते—"निषेधस्य" इति, प्रतिबन्दीग्रहणेन परिहरति सिद्धान्ती—"मैवम्" इति, अतिरात्रे षोडशिनं गृह्णा-

मू०—षोडशिग्रहणप्रतिषेधस्याप्यतुल्यबलत्वेन विकल्पानुपपत्तिप्रसङ्गात् ।

स्यान्मतं, मोक्षसाधनत्वेन प्राप्तस्य साधनसाधनत्वग्रहणे प्राप्तान्वयबाधो भवन्मते, निषेधस्य त्वस्मन्मते केवलकर्मविषयत्वे सङ्कोचमात्रं नान्वयबाधः, तस्मात्तदेव युक्तमिति ।

सत्यमेवम्, तथाऽप्यन्वयबाध एवात्र युक्तः, शास्त्रेणैव तथा व्यवस्थाया दर्शितत्वात् । तथाहि—विविदिषन्ति यज्ञेनेति वेदने यज्ञादीनां विनियोगः श्रूयते । स्मृतौ च—

---

टी०—तीति शास्त्रेणैव षोडशिग्रहणस्य प्राप्तेर्नातिरात्रे षोडशिनमिति निषेधस्य तत्सापेक्षत्वेन दुर्बलतया षोडशिग्रहणाग्रहणयोर्विकल्पो न स्यादित्यर्थः ।

अभिहितवचनैः कर्मणां ज्ञानेन सह मोक्षसाधनत्वप्रतीतेः परम्पराकल्पनायां श्रुतान्वयबाधप्रसङ्गात्कल्पनमयुक्तमिति समुच्चयवादी शङ्कते—" स्यान्मतम् " इति, ननु ज्ञानसमुच्चितानां कर्मणां मोक्षसाधनताङ्गीकाराद्भवन्मतेऽपि न कर्मणेत्यादिनिषेधो निर्विषयः स्यादित्याशङ्क्याह समुच्चयवादी—" निषेधस्य तु " इति । अभिहितवचनं समुच्चितानां कर्मणां मोक्षसाधनत्वं न प्रतिषेधति किन्तु केवलानाम्, तेन केवलकर्मविषयनिषेधस्य सङ्कोचमात्रमस्मन्मते न श्रुतापवर्गान्वयबाध इत्यर्थः ।

पारम्पर्यवचनबलादन्वयबाध एव स्वीकरणीय इति परिहरति सिद्धान्ती—" सत्यम् " इति, यज्ञेनेत्यादि तृतीययेष्यमाणज्ञानं प्रति यज्ञादीनां करणभावावगमात्र साक्षादपवर्गसाधनत्वमित्यर्थः । पारम्पर्ये स्मृतिरपि प्रमाणमित्याह—" स्मृतौ च " इति, आ-

मू०— धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ।
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
इति साधनभाव एव कर्मणामवसितः ।

केवलकर्मणां चाभ्युच्चयोऽयं मोक्षकारणताऽभावे, न हि साक्षात्साधनं कर्म साधनसाधनभावे विनियोक्तुमुचितम्, 'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' इति न्यायात् । तस्माद्यथाशास्त्रमेव व्यवस्था युक्तेति सिद्धम् ।

अत्राह—सत्यं व्यवधानेन संबन्धः कर्मणामपवर्गे, किन्तु व्यवधानं कर्मणापकारः, न तदुत्पत्तिः, दूरत एव तत्साधनत्वसंबन्धः । कुत एतत्, केवलविद्यानिन्दाऽनुपपत्तेरिति

---

टी०—त्मशुद्धये लिप्यते न स पापेनेति सत्त्वशुद्धिद्वारेण कर्मणां ज्ञानसाधनत्वमवसीयत इत्यर्थः, न केवलकर्मनिषेध एव केवलकर्मणां मोक्षसाधनत्वाभावे मात्रं किन्तु साधनसाधनत्वप्रतिपादकवचनमपीत्याह—"केवल" इति, कथमित्यत आह—"न हि" इति, व्यवधानेन कर्मणामुपकारकत्वेऽपि ज्ञानलक्षणकरणोपकारकत्वमेव नतु करणनिर्वर्त्तकत्वमिति समुच्चयवादिमतमुत्थापयति— "अत्राह" इति ।

माभूत्करणनिर्वर्त्तकत्वं ज्ञानसाधनान्तःकरणशुद्ध्यादिहेतुत्वमेव किं न स्यात् तथाच संस्कारत्वपक्षानुप्रवेश इत्यत आह—"दूरत एव" इति, आकाङ्क्षापूर्वकं हेतुमाह—"कुत" इति, निन्दामेव

मू०—ब्रूमः, ततो भूय इवेत्यादिना हि केवलविद्यानिन्दावसीयते, तत एव न विरोधपरिहारार्थानि परम्परावचनानि किन्तु सर्वथापेक्षितत्वप्रतिपादनपराणि षड्यागवत्साक्षात्साधनत्वानभ्युपगमेन च तमेव विदित्वा नान्यः पन्था इत्यादीनि वचनान्युपपन्नानि । अभ्युपगमेऽपि न कर्माणि मोक्षसाधनानि विद्यासहितानि तु साधनानीत्युक्ते गोबलीवर्दन्यायेन सामान्यवचनस्यानियतवृत्तेरदोषः, नच कर्मसाध्यत्वे मोक्षस्यानित्यतादोषः तद्यथेहेत्यादिश्रुतेर्न्या-

---

टी०—दर्शयति—"तत" इति, ननु कर्मणां क्वचिन्मोक्षसाधनत्वनिषेधात्क्वचिच्च साधनत्वप्रतिपादनात्परस्परविरोधे सति धर्मात्सुखश्रेयादिपरम्परावचनानुसारेण ज्ञानजनकत्वमेव कर्मणां ज्ञानमेव तु मोक्षसाधनमभ्युपगन्तव्यमित्यत आह—" तत एव " इति, ज्ञानस्यैव मोक्षसाधनत्वे केवलविद्यानिन्दा न स्यादित्यर्थः । का तर्हि परम्परावचनानां गतिरित्यत आह—" किन्तु " इति, उभयोः साधनत्वे तमेवेत्यादिकर्मनिषेधवचनानि तर्हि कथमित्यत आह—" षड्यागवत् " इति, यथाग्नेयादीनां साक्षात्स्वर्गसाधनत्वं न तथा कर्मणामपवर्गसाधनत्वं किन्तु प्रयाजादिवत्करणोपकारतया, तथा च विज्ञानसाम्येनान्यःपन्था नास्तीति साक्षात्साधनत्वाभावपराणि तानीत्यर्थः । साक्षात्साधनत्वमङ्गीकृत्याप्याह—" अभ्युपगमेपि " इति, यस्तद्वेदोभयं सहेति ज्ञानकर्मणोरुभयोरपि समुच्चयप्रतिपादनादन्यः पन्था नास्तीति वचनमसमुच्चितकर्मविषयमिति न विरुद्धमित्यर्थः । ननु कर्मसाध्यत्वे मोक्षस्य कृतकत्वेनानित्यत्वं स्यात् एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति श्रुतेरित्यत आह—"न च"

मू०-याच्चेति युक्तं, कर्मक्षयांशे कर्मणामुपयोगाङ्गीकरणात् । नच सहस्राक्षोऽपि क्षयं क्षेप्तुं क्षम इति । तस्मात् प्रापकसद्भावाद्बाधकाभावाच्च कर्मसमुच्चितमेव ज्ञानं मोक्षसाधनमिति ।

तदेतदयुक्तम् । तथाहि, यत्तावद्व्यवधानं करणोपकारो न तदुत्पत्तिरिति । न तदुचितम् । काष्ठेन पिपक्षत्यश्वेन जिगमिषति, दात्रेण लुलूषतीतिवद् यज्ञेन विविदिषन्तीत्यत्रापि सन्वाच्येच्छायाः करणसम्बन्धाऽनुपपत्तावुभयवादिसिद्धायां साधकतमार्थया तृतीयया काष्ठादेरिव पाकादाविष्यमाणवेदनोत्पादे यज्ञादेरपि करणभावेन विनियोगावगमात्, करणे च मुख्यायास्तृतीयायाः परिनिष्पन्नकरणोपकारार्थताश्रयणे भङ्गप्रसङ्गात् ।

---

टी०—इति । तस्यापि तर्हि कृतकत्वादनित्यता किं न स्यादित्यत आह—"नच सहस्रे" ति । प्रध्वंसस्यानित्यत्वे नष्टानिष्टप्रसङ्गादित्यर्थः । अश्वेन जिगमिषतीत्यादिवद् यज्ञेन विविदिषन्तीत्यादितृतीयाश्रुत्या यज्ञादीनामिष्यमाणज्ञानसाधनत्वप्रतीतौ करणोपकारकत्वकल्पनं न युक्तमिति दूषयति सिद्धान्ती—"तदेतद्" इति । प्रत्ययवाच्या विविदिषैव यज्ञादिसाध्या किं न स्यादित्यत आह—"सन्वाच्या" इति । अयोग्यत्वादित्यर्थः । तृतीयाश्रुतिरुपकारकत्वविषया किं न स्यादित्यत आह—"करणे च" इति ।

मू०—स्यान्मतमिह तावद्वर्तमानापदेशे साध्यसाधनभावानवगतेरानर्थक्यप्रसङ्गात् । अपूर्वत्वेन च विद्यास्तुतित्वानुपपत्तेर्विधिपरमिदं वाक्यम् । सन्निधिके च वाक्ये विध्यवच्छिन्नभावनारूपवाक्यार्थानुप्रवेशपूर्वक एव पदानां परस्परसंबन्धः । अन्यथा, दध्ना होम इतिवद् विध्यसंस्पर्शेनानर्थक्यस्य तादवस्थ्यात् ।

---

टी०—मुख्यार्थासम्भवे गौणार्थाश्रयणा तृतीयाया युक्तमेवेति मन्यमानस्य ब्रह्मप्रकाशिकाकारस्य मतमुत्थापयति—"स्यान्मतम्" इति । विविदिषन्तीत्यत्र, ज्ञानेन मोक्षं भावयेदिति वाक्यार्थं दिदर्शयिषुर्वर्तमानापदेशस्य विधिपरत्वमाह—" इह तावद् " इति । तर्हि यज्ञादिभिर्बहुवित्तव्ययाऽऽयाससाध्यैरियं ब्रह्मविद्या प्राप्यत इति विद्यास्तुतिपरतैव किं न स्यादित्यत आह—" अपूर्वत्वेन " इति । यज्ञादीनां विद्यासाधनत्वस्योपांशुयाजवत् प्रमाणान्तरागोचरत्वाद् विधिपरत्वे च सम्भवति स्तुतिपरत्वस्यायुक्तत्वात् पञ्चमलकारस्वीकारेण च विधिपरत्वमेव युक्तमित्यर्थः । ततः किमित्यत आह—" सन्निधिके च " इति । विधिः शब्दव्यापारः प्रेरणारूपः, भावना पुरुषप्रयत्नस्तेन विधिनाऽवच्छिन्नो यो भावनारूपो वाक्यार्थो, भावयेद् भावनां कुर्यादिति, तादृशवाक्यार्थानुप्रवेशेनैवेतरपदानां फलकरणेतिकर्तव्यतासमर्पकाणाम्, इदमनेनेत्थं भावयेदिति परस्परसम्बन्धोऽवगम्यते । फलस्य करणाकाङ्क्षत्वात्, करणस्य चेतिकर्तव्यताकाङ्क्षत्वादित्यर्थः । तथाऽनङ्गीकारे दोषमाह—" अन्यथा " इति । विध्यवच्छिन्नभावनाप्रतिपादकतव्यपदाऽभावे साकाङ्क्षतया वाक्यस्यानर्थक्यमेव स्यादित्यर्थः । ततः किमि-

मू०—सा च भावना मोक्षभाव्यावच्छिन्ना न पुनर्धात्वर्थ एव भावं भजते । तस्यासमीहितत्वात् । तथाचान्यार्थप्रवृत्तभावनाभाव्यत्वलक्षणः करणभाव एव भावनायां धात्वर्थस्य स्यात् । तथाच लब्धश्रौतधात्वर्थकरणायां भावनायाङ्करणत्वेनानुप्रवेशासम्भवात् तदपेक्षितकरणोपकारद्वारेण सम्बन्धो यज्ञादीनामिति । तेन यज्ञादिभिरुपकृत्येति वाक्यार्थः सम्पद्यत इति ।

तदसत् । श्रुत्यन्तरसिद्धशमाद्यङ्गनिबन्धनोपकारनैर-

---

टी०—त्यत आह—"सा च" इति । तमेतमिति निर्वाणरूपोऽयोऽयम् आत्मा भाव्यस्तद्वाच्छिन्नेत्यर्थः । विविदिषन्तीत्येकपदोपादानलक्षणाया श्रुत्या प्रकृत्यर्थस्यैव ज्ञानस्य भाव्यता किं न स्यादित्यत आह—" न पुनरि " ति । श्रुत्याऽऽख्यातत्वेऽप्यपुरुषार्थत्वेन न प्रकृत्यर्थो भाव्य इत्यर्थः । प्रकृत्यर्थस्य कथं तर्हि सम्बन्ध इत्यत आह— " तथाच " इति । फले व्यभिचारनिवारणार्थमन्यार्थपदं, मोक्षोद्देशेन प्रवृत्तया भावनया कारणाकाङ्क्षिण्या वेदनलक्षणधात्वर्थस्यासाध्यत्वाद् वेदनेन मोक्षं भावयेदिति करणतयैव धात्वर्थस्य सम्बन्धः, स्वर्गभावनायामिव यागस्येत्यर्थः ।

तथापि कथं यज्ञादीनामुपकारकत्वमित्यत आह—"तथा च" इति । करणत्वेन संबन्धाभावेन तदुपकारकत्वमेव परिशिष्यत इत्यर्थः । अन्वयप्रकारमाह—" तेन " इति ।

शमादीनामेवेतिकर्त्तव्यतान्वये सति यज्ञादीनां विधेयधात्वर्थं प्रति करणतयैवान्वयस्य वक्तव्यत्वादिति परिहरति—"तदसद्"

मू०—पेक्ष्यात् तत्तद्द्वारेण यज्ञादीनां सम्बन्धानुपपत्तौ विधेयधात्वर्थकरणभावद्वारेणैव यज्ञादेर्भावनानुप्रवेशात्। एवञ्च यज्ञेनेति तृतीयाया मुख्यसाधकतमार्थतोपपत्तेः। उपकृत्येति च व्याख्याने साध्याहारयोजनापातात्।

यत्पुनरिच्छायाः प्रपञ्चेन न यज्ञादिभिः सम्बन्धः किन्तु वेदनेनैवेति साधितं, तथापि न नः काचन हानिः। तत्रापि करणभावेनैव सम्बन्धोपपादनात्।

---

टी०—इति। नच प्रयाजानुयाजादाविवागृह्यमाणविशेषतया यज्ञादीनामपीतिकर्त्तव्यतात्वेनान्वयः। नच करणशरीरनिर्वर्तकव्रीह्यादिसद्भाववदिह विधेयज्ञानस्य निर्वर्त्तकान्तराभावात्। नच श्रवणादय एव तथा। यज्ञादिभिरक्षपितकल्मषस्य ज्ञानानुपदेशादिति भाव.। यज्ञादीनामपीतिकर्त्तव्यतात्वेनान्वये, व्रीहिभिर्यजेतेतिवद्, यज्ञेन विविदिषन्तीति तृतीयाश्रुतेरिष्यमाणज्ञानं प्रति करणताबोधकत्वादुपकारकत्वं च करणत्वाभावेन तृतीयाश्रुतिविरोधः स्यादित्याह—" एवं चे "ति। नच हेतावपि तृतीयाविधानात्तद्विशेषाकाङ्क्षायामुपकारकत्वेन संबन्धः। उभयत्र तृतीयाविधानेऽपि करणस्य फलं प्रति साधनतया पुरःस्फूर्तिकत्वेन तत्परिग्रहस्यैव युक्तत्वादिति भावः। दूषणान्तरमाह—" उपकृत्ये " ति।

सम्प्रत्ययवाच्येच्छाया वेदानुवचनादिभिः संबन्धासम्भवेनेष्यमाणवेदनेनैव संबन्ध इत्युक्तमनूद्य दूषयति—" यत्पुनरि "ति।

ननु फलोपकारित्वेन संबन्धो हानिरेवेत्यत आह—" तत्रापी "ति।

केवलविद्याया मोक्षसाधनत्वे ततो भूय इति निन्दानुपपत्तिरि-

मू०—यत्तु विद्यासाधनत्वेन यज्ञाद्यन्वये, तस्या एव च केवलाया मोक्षसाधनत्वे, ततो भूय इवेत्यादिना केवल-विद्यानिन्दानुपपत्तिरिति । तदयुक्तम् । आञ्जस्या वृत्त्या तृतीयाश्रुत्यनुसारतो विद्याकरणभावे कर्मणां सिद्धे, ततो भूय इवेत्यादिना देवताविज्ञाननिन्दाद्वारेण तस्यैव कर्मसमुच्चयः प्रतिपाद्यत इत्यभ्युपगमेऽप्यविरोधात् ।

यत्तु परमात्मनः प्रक्रान्तत्वाद्देवताविज्ञानप्रक्रमानऽनुगुणत्वान्न स्वीकरणीयमिति । तदपि न चारु । साधकतमाऽर्थतृतीयाश्रुतिभङ्गभयादेव प्रक्रममात्रभङ्गाऽङ्गीकरणेऽपि विरोधाभावात्,

यत्तु न विरोधपरिहारार्थानि परम्परावचनानि, किन्तु सर्वथाऽपेक्षितत्वप्रतिपादनपराणीति । तदप्यनुचितम् ।

---

टी०—त्युक्तमनूद्य दूषयति—"यत्त्वि" ति । यज्ञादीनां श्रुत्या विद्याकारणाभावस्य सिद्धत्वाद्विद्यानिन्दाया देवताविज्ञानविषयतया तस्यैव कर्मसमुच्चयप्रतिपादनेऽपि विरोधाभावादित्यर्थः ।

देवताविज्ञानस्य समुच्चयप्रतिपादनं प्रकरणाननुगुणमिति यदुक्तं तद् दूषयति—" यत्तु परमात्मन" इति । श्रुतेर्बलीयस्त्वेन प्रकरणस्य तया बाधात् परमात्मप्रकरणेऽप्यायुर्होपासतेऽमृतमिति प्रकरणविच्छेदेनोपासनस्य प्रतिपादनवदिहापि देवताविज्ञानसमुच्चयप्रतिपादने विरोधाभावादित्यर्थः । परंपरावचनानि सर्वथाऽपेक्षितत्वप्रतिपादनपरतया न विरोधपरिहारार्थानीति यदुक्तं तद् दूषयति—" यत्तु न विरोधे " ति । आनर्थक्यमेव दर्शयति—

मू०—अपेक्षितत्वमात्राभिप्राये परम्पराभिधानानर्थक्यात् । न हि साक्षात्साधनस्यापेक्षितत्वं परम्पराभिधानमन्तरेणाऽशक्यं प्रतिपादयितुं, येन तदर्थमसत्यपि परम्पराभिधीयेत।

यदपि षड्यागवत् साक्षात्साधनत्वानभ्युपगमेन, तमेव विदित्वा, नान्यः पन्था इत्यादीनि वचनान्युपपन्नानीति । तत् सत्यमुपपन्नान्येव, व्यवधानं तु विज्ञानसाधनत्वमित्युक्तम्।

यच्च साक्षात्साधनत्वाभ्युपगमेऽपि न कर्माणि मोक्षसाधनानि, विद्यासहितानि तु साधनानीत्युक्तेर्गोबलीवर्दन्यायेन सामान्यवचनस्यानियतवृत्तेरदोष इति, तदपि साक्षात्साधनत्वपराकरणत्वादेव पराकृतम् ।

यत्तु कर्मक्षयांश एव कर्मणामुपयोगाङ्गीकरणान्न कर्म-

---

टी०-" न ही " ति ।

नान्यः पन्था विद्यते इत्यादिवचनानि माक्षात्साधनत्वाभावविषयाणीति यदुक्तं तद् दूषयति—" यदपी " ति । तथैवाङ्गीकारे को विरोध इत्यत आह—" व्यवधानन्त्वि " ति ।

उक्तवचनानां गोबलीवर्दन्यायेनार्थवत्त्वमुक्तमनूद्य दूषयति—" यच्च साक्षाद् " इति ।

कर्मक्षयांश एव कर्मणामुपयोगान्मोक्षस्य नानित्यत्वदोष इति यदुक्तं तद् दूषयति—" यत्तु कर्मे " ति । तथाङ्गीकारे भवतः को

मू०—साध्यत्वेन मोक्षस्यानित्यत्वं, नापि कर्मक्षयस्य क्षयः, क्षयस्य क्षयाभावादिति । तत्तथास्तु नाम, मोक्षस्य तु कर्मसाध्यताभावमात्रेण सिद्ध एवास्मत्पक्षः ।

किञ्च, सत्येन लभ्यस्तपसेति विविदिषावाक्यानुसारेण सत्यादीनां ज्ञानसाधनत्वं ज्ञानस्यैव चात्मलाभसाधनत्वमित्यन्यत्रावसितयोग्यतानुसारेण व्याख्यातव्यम् । तेनैतिब्रह्मवित्पुण्यकृच्चेति ब्रह्मवित्पुण्यकृतोर्मार्गेसमुच्चयः । मार्गश्च कार्यब्रह्मगोचर एवेति राद्धान्तितं, कार्यं बादरिरस्य गत्युपपत्तेरित्यत्र ।

स्मृतयस्तु साधनसाधनत्वविषयाः श्रुत्यनुरोधेन कथञ्चिद्योजनीयाः । तथाचेदशक्ययोजना, अप्रामाण्यमेव तासां,

---

टी०—लाभ इत्यत आह—"मोक्षस्ये"ति ।

सत्येन लभ्यते इति समुच्चयवाक्यस्यान्यपरत्वमाह—"किञ्चे"ति । मार्गसमुच्चयप्रतिपादकवचनस्यान्यपरत्वमाह—"तेने"ति । अस्तु तथेत्यत आह—"मार्गश्च" इति । कथमित्यत आह—"राद्धान्तितम्" इति । गतेर्गन्तृगन्तव्यगमनसाधनभेदे सत्येव सम्भवाद्द्वितीयात्मविज्ञानेन च समस्तभेदः प्रविलीयते इति तदसम्भवान्न तस्य प्राणा उत्क्रामन्तीति च गत्युत्क्रान्त्योः प्रतिषेधात् परमात्मनि न गतिसम्भव इत्यर्थः ।

का तर्हि व्यासदक्षमनुवचनानां गतिरित्यत आह—"स्मृतयस्त्वि"ति । ननु तथा योजयितुं न शक्यन्त इतित्राह—

मू०—श्रुतिविरोधादिति । तस्माज्ज्ञानमेवैकं मोक्षसाधनं, न पुनः कर्मलेशोऽपीति सिद्धम् । तथा च पौराणिकं वचनम्—

धर्मरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः ।
द्वयं ज्ञानाऽसिना छित्वा विदेहः शान्तिमृच्छतीति ॥

तदेवं न्यायागमाभ्यामद्वैतसाक्षात्कारनिबन्धनो मोक्ष इति सिद्धम् ।

"नन्वविद्याक्षतेः सत्त्वे सद्वितीयत्वमात्मनः ।
मिथ्याभावे त्वनिर्मोक्षो मूलाविद्याव्यवस्थितेः ॥ उक्तमेतदविद्यास्तमयो मोक्ष इति । तत्रैतद् विविच्यते,—स किं सत्यो, मिथ्या वेति । यद्याद्यः कल्पस्तदापि किमात्मैव, ततो

---

टी०—"तथा चेद्" इति । समुच्चयनिषेधकवचनान्तरमुदाहरति—"तथा च" इति । धर्माधर्मौ रज्जुर्गमनसाधनत्वात् ।

प्रकृतं महाप्रमेयमुपसंहरति वादान्तरं प्रस्तावयितु—"तदेवम्" इति । अविद्यानिवृत्तिलक्षणो मोक्ष इतियदुक्तं तत्राविद्यानिवृत्तिः सती मिथ्या वेति विकल्प्य क्रमेण दूषयति—"नन्वि" त्यादिश्लोकेन । सत्यत्वे ब्रह्मव्यतिरिक्तत्वे सतीति शेषः । द्वितीये दोषमाह—"मिथ्याभाव" इति । मिथ्याभावस्याविद्यातत्कार्ययोरन्यतरत्वेन मूलाविद्याव्यवस्थितेरनिर्मोक्ष इत्यर्थः । वृत्तकथनपूर्वकं पूर्वार्द्धं व्याचष्टे—"उक्तमेतद्" इति । आद्यं पक्षं द्विधा विकल्पयति—"यद्याद्य" इति ।

तथापि किमविद्यानिवृत्तेरात्मन्यन्तर्भावः ? किं वा निवृत्तावात्मन?

मू०—वान्यः ?। स चेदात्मैव नित्यनिवृत्तिरविद्यायाः । कथञ्चानादेरात्मनो निवृत्तिता । निवृत्तिर्हि निवृत्तिमद्भावपूर्विका । तथाच कथमनादिः । अविद्यानिवृत्तिश्च विद्यासाध्या । तथा च कथमात्माभेदस्तस्यापि तद्भावापातात् । तदभ्युपगमे वा कथमनादितोऽयमज्ञानस्याश्रयः । अनादि चाज्ञानमभिप्रेतम् ।

अथात्मनोऽन्यः । कथं न द्वैतापातः । अथोत्तरः । कः पुनरयं मिथ्यार्थः । यद्यनिर्वाच्यता, न तर्ह्यविद्याकार्याद् अविद्यातश्चान्यदनिर्वाच्यमिति । अविद्याकार्यत्वे तन्मूलाऽवि-

---

टी०—इति विकल्प्याद्यं दूषयति—" नित्ये " ति । द्वितीये दोषमाह—" कथञ्च " इति । काऽनुपपत्तिरित्यत आह—" निवृत्तिरि " ति । तत्रापि कथमनादित्वाभाव इति तत्राह—" तथाच " इति । नन्वात्मवदाविद्यानिवृत्तिरप्यनादिरिति तत्राह—" अविद्ये " ति । फलितमाह—" तथाच " इति । तद्भावापातात्=साध्यत्वापातादस्तु तथैवेति तत्राह—" तदभ्युपगमे " इति । आत्मनः सादित्वेऽनाद्यज्ञानस्याश्रयाभावादसत्त्वमेव, सादित्वं वा स्यादित्यर्थः । अस्तु तर्हि सादित्वमेवेति तत्राह—" अनादि " इति ।

किं वा ततोऽन्य इति पक्षे दोषमाह—" अथात्मन " इति । द्वितीयेऽपि मिथ्याशब्देन किमनिर्वाच्यत्वमुच्यते, किं वा ऽसत्त्वमिति विकल्प्याद्ये दोषमाह—" यदि " इति । अनिर्वाच्यत्वमपि किमविद्याकार्यत्वमुताविद्यात्वमिति विकल्प्य आद्ये दोषमाह—" अविद्याकार्यत्वे " इति ।

मू०-द्याव्यवस्थितेरनिर्मोक्षः। अविद्यैव त्वविद्याव्यावृत्तिरिति गहनेयं न्यायपदवी। अथाऽसत्त्वैव मिथ्यार्थः। सा चेत्तुच्छता कथं कारकव्यापारसाध्यता। यदि तुच्छातिरिक्ताऽभावरूपता, तदाऽपि निर्वाच्यत्वे द्वैतम्, अनिर्वाच्यत्वे त्वनिर्मोक्षः। भावस्यैव चाभावो निवृत्तिरभावस्यैव च भावः। नचाज्ञानं भावोऽभावो वा। तस्यानिर्वाच्यताभ्युपगमात्। नचास्ति भावाभावरूपं वस्तु यदविद्याव्यावृत्तिः। नचान्यो निवृ-

---

टी०—यथा प्रागभावनिवृत्तिर्घट एवमविद्यानिवृत्तिरविद्यैवेति द्वितीयं पक्षमुत्थापयति—"अविद्यैवे" ति। अविद्याया अनादित्वेन निवृत्तेरप्यनादित्वेन निवृत्तेरप्यनादिना स्यात्। निवृत्तितद्वतोरभेदे घटतत्प्रध्वंसयोरप्यविरोधापत्तिरित्यर्थः। मिथ्याशब्देनासत्त्वमुच्यते इति द्वितीयं पक्षमुत्थापयति—"अथे" ति। असत्त्वमपि किं तुच्छत्वमुताभावरूपत्वमिति विकल्प्याद्ये दोषमाह—"सा चेदि" ति। द्वितीयमनुवदति—"यदि त्वि" ति। तदा निर्वाच्यताऽनिर्वाच्यता वा?। आद्ये दोषमाह—"तदाऽपि" इति। द्वितीयं दूषयति—"अनिर्वाच्यत्व" इति। मूलाविद्याव्यवस्थितेरित्यर्थः। पक्ष एवायमनुपपन्न इत्याह—"भावस्यैवे" ति। अज्ञानमपि तदुभयोरन्यतरदिति, तत्राह—"नचे" ति। सदसद्रूपैव तर्हि निवृत्तिरस्त्वित्यत आह—"नचे" ति। उक्तप्रकारविलक्षणैव तर्हि निवृत्तिरस्त्वित्यत आह—"नचान्य" इति।

मू०—त्तिप्रकारः प्रसिद्ध, उत्प्रेक्षितुं वा शक्यः । मिथ्याभावे चाविद्याव्यावृत्तेरनिवृत्तिरेव तात्त्विकी प्रसज्ज्येत । आत्मवत् । अतः कथमविद्याव्यावृत्तिर्मोक्ष इति ।

‘न सन्नासन्न सदसन्नानिर्वाच्योऽपि तत्क्षयः ।
यक्षानुरूपो हि बलिरित्याचार्य्या व्यचीचरन् ॥

अस्ति तावदविद्याव्यावृत्तिर्लोकप्रसिद्धा, न तस्या विकल्पपांशुभिः स्वरूपमेवावकरितुं युक्तम् । तथाच न-चेत् प्रागुक्तप्रकारसंभवः, परिशेषतः प्रकारान्तरमेवास्तु ।

यथा खलु शुक्तिशकलादेः स्वरूपे प्रसिद्धे प्रकारा-

---

टी०-नन्वस्ति पञ्चमः प्रकार इत्यत आह—‘‘उत्प्रेक्षितुम्’’ इति। सदसद्विलक्षणत्वेन त्वऽस्यानिर्वाच्यकोटावन्तर्भाव इत्यर्थः । दूष-णान्तरमाह—“ मिथ्याभाव ” इति ।

सिद्धान्तरमुपक्रमते—“ न सदि ” ति । अविद्यानिवृत्तेः प्रसि-द्धत्वादुक्तप्रकारेष्वनन्तर्भावात् परिशेषादन्यप्रकारैवाविद्यानिवृत्ति-रिति श्लोकार्थः । किमेताभिर्युक्तिभिरविद्यानिवृत्तिर्नास्तीत्युच्यते ? उत एतत्प्रकारान्यप्रकारवती नास्तीत्युच्यते ? न प्रथम इत्याह—“ अस्ति तावदि ” ति । नापि द्वितीय इत्याह—“ तथाचे ” ति भवदुक्तयुक्तिभिरेवोक्तप्रकारासम्भवात् परिशेषतः साऽन्यप्रकारैवे-त्यर्थः । परिशेषाश्रयेऽप्रसिद्ध· प्रकारः कथमङ्गीक्रियत इत्यत आह—“ यथा खल्वि ” तिं । तथा सत्यद्वैतव्याघात इत्यत आह—

मू०—न्तरानिरूपणाच्च परिशेषतोऽनिर्वाच्यता तथाऽविद्यान्यावृत्तिरपि प्रसिद्धिपरिशेषाभ्यां प्रकारान्तरशालिनीति युक्तम् ।

नचैवं सदद्वैतव्याहतिरनिर्मोक्षो वा । तस्याः सद्रूपताऽनङ्गीकाराद् अनिर्वाच्यताभावाच्चानविद्योपादनत्वात् ।

अथ कथमनिर्वाच्यताऽभावः । सदसद्वैलक्षण्यादेवानिर्वाच्यत्वम् । तल्लक्षणत्वादेवानिर्वाच्यतायाः । अतोऽनिर्वाच्या वाऽविद्यान्यावृतिः । अतिव्यापकं चानिर्वाच्यलक्षणमिति ।

अत्र केचित् परिहाराऽऽलोचनकातरान्तःकरणाः पर-

---

टी०–"नच" इति । अनिर्वाच्यतैव तर्हि किं न स्यादित्यत आह—"अनिर्वाच्यते" ति । तदेव कथमित्यत आह—"अनविद्ये" ति । अत्र कार्यत्वे सतीति विशेषणमनुसन्धेयम् । अन्यथाऽविद्यायामनैकान्तिकत्वात् ।

एतदाक्षिपति—"अथ कथमि" ति । कस्मादित्यत आह—"सदसदि" ति । तावता कथमनिर्वाच्यत्वमित्यत आह—"तल्लक्षणत्वादि" ति । ततः किमित्यत आह—"अत" इति । निवृत्तिनद्धतोरतुल्यरूपतया नानिर्वचनीयाऽविद्यानिवृत्तिरित्यत आह—"अतिव्यापकम्" इति । अस्याः सदसद्विलक्षणत्वेऽप्यनिर्वाच्यताऽभावादित्यर्थः ।

एकदेशिनां परिहारमुत्थापयति—"अत्र केचिदि" ति ।

मू०—मात्मैवाविद्यानिवृत्तिरित्याहुः । उदाहरन्ति चाचार्यवचनम्—आत्मैवाज्ञानहानिर्वेति । न तेषां प्रागुक्तदोषान्निर्मोक्षः । नचात्मैवाज्ञानहानिर्वेति वैदिकं वचनं, येन तन्मात्रादर्थसिद्धिः । अनास्थावादस्त्वयम्, आचार्यस्याऽपि स्खलितमेव वा, को दोषः ।

अपरे पुनराहुरस्तु नामानिर्वाच्यताऽविद्यानिवृत्तेः, का नो हानिः ।

अथैषैव हानिरनिर्वाच्यतायामविद्यातद्विलासयोरन्यतरभावापत्तेः । उभयथाप्यविद्यावस्थानादनिर्मोक्ष इति ।

---

टी०—तत्र किं प्रमाणमित्यत आह—"उदाहरन्ती" ति । दूषयति—"न तेषामि" ति । अविद्याया नित्यनिवृत्तिरात्मनो वा सादितेति प्रागुक्तदोषः । ननूदाहृतमेवं तत्र प्रमाणमिति, तत्राह—"नचे" ति । तर्हि किमर्थमाचार्येणोक्तमिति तत्राह—"अनास्थे" ति । अनास्थावादेष्वनुपपन्नं किमर्थमुच्यत इति, तत्राह—"अचार्यस्यापी" ति । अभ्युच्चययुक्तितयानुपपन्नस्याप्युदाहरणसंभवाद् "युक्तियुक्तावबोधश्चेद्वचो ग्राह्यं मनीषिभि"रितिन्यायादनुपपन्नस्योदाहरणेऽपि न दोष इत्यर्थः । स्वमतेन परिहरति—"अपरे पुनरि" ति । पृष्टं मत्वोत्तरमाह पूर्ववादी—"अथैषे" ति । इयमविद्यातद्विलासयोरन्यतरानिर्वाच्यत्वात्तद्वदेवेति प्रसङ्गार्थः । ततः किमित्यत आह—" उभयथापि "

मू०—मैत्रम्। निवृत्तिमदुपाधित्वेनापि तदुपपत्तेरनिर्वाच्यतायाः स्वाभाविकप्रतिबन्धानिरूपणान्निवृत्तेस्तु निवृत्त्यन्तरानङ्गीकारात्। अपरथाऽनवस्थापातात्। अपुनरावृत्तिश्रुतिव्याकोपाच्च।

कथमनिर्वाच्यस्यानिर्वाच्या व्यावृत्तिरितिचेदित्थमेव यथोपपादितम्।

अथापि स्यादन्तरेण वैक्षण्यं कथं निवृत्तितद्वत्त्वात्र इति। तत् किमिदानीं मात्रयापि सालक्षण्येन न भाव्यम्। माभूद् घटतद्ध्वंसयोरपि तद्भावः।

---

टी०—इति। सोपाधिकत्वे हेतुं दूषयति—"मैत्रमि" ति। अनिर्वाच्यत्वेनाविद्यानद्विलासान्यतरत्वसाधने निवृत्तिमत्त्वमुपाधिरित्यर्थः। साधनव्यापकत्वमाशङ्क्य परिहरति—"निवृत्तेस्त्वि" ति। अङ्गीकारे दोषमाह—"अपरथे" ति। श्रुतिविरोधादप्येवमित्याह—"अपुनरावृत्ती" ति।

निवृत्तितद्वतोस्तुल्यरूपतयाऽनिर्वाच्यत्वमनुपपन्नमिति शङ्कते—"कथमि" ति। किमुपपत्तिरन्विष्यते, किं वा वैलक्षण्येन भवितव्यमित्युच्यत इति विकल्प्याद्ये दोषमाह—"इत्थम्" इति। द्वितीयमुत्थापयति—"अथापी" इति। केनचित्प्रकारेण वैलक्षण्यं विवक्षितं? किं वा प्रतियोगिनिष्ठसर्वधर्मराहित्यम्? आद्योऽङ्गीक्रियते निवृत्तिमत्त्वतद्राहित्याभ्यां वैलक्षण्यस्याभिधानात्। द्वितीये दोषमाह—"तत्किमिदानीम्" इति। अस्तु तथैवेति, तत्राह—"माभूदि" ति।

मू०—ज्ञेयत्वाभिधेयत्वादिसालक्षण्योपलम्भात् । अनिर्वाच्यत्वादेव त्वनविद्याव्यावृत्तितां प्रसाधयतः प्रागुक्त एवोपाधिः । न चानिर्वाच्यायां निवृत्तावनिवृत्तिरेव तात्त्विकी स्यादात्मवदिति साम्प्रतम् । आत्मनोऽप्यनिवृत्तेः सत्त्वोपाधिकत्वात् । अतएवोक्तं, मिथ्याभावेन भूतं किं मिथ्यानाशान्न नङ्क्ष्यतीति । तदेवं सदसद्वैलक्षण्येऽप्यनिर्वाच्यलक्षणे न काचनानुपपत्तिः । यदा तु, बाध्यतैवानिर्वाच्यलक्षणमिति स्थितिस्तदाऽनिर्वाच्यविलक्षणैव । अविद्यानिवृत्तेरबाध्यत्वात् । नचैवमनिर्वाच्यलक्षणमप्यतिव्यापकमिति सकलमनाविलम् ॥

नानानिबन्धकुसुमप्रभवावदात-
न्यायापदेशमकरन्दकदम्ब एषः ॥

———

टी०—कुत इत्यत आह—" ज्ञेयत्वे " ति । विमता नाविद्यानिवृत्तिरनिर्वाच्यत्वादविद्यावदित्यत आह—" अनिर्वाच्यत्वादेव " इति । निवृत्तिमत्त्वमत्रोपाधिरित्यर्थः । दुर्निरूपनिवृत्तित्वे सत्यात्मवद् अविद्यानिवृत्तिरेव न स्यादित्यत आह—" नचे " ति । दुर्निरूपनिवृत्तिमत्त्वमप्रयोजकं, सत्त्वस्यैव तत्रोपाधिता । नच साधनव्यापकता, सत्यत्वसाधनबाधादित्यर्थः । निवृत्तेरनिर्वाच्यताया मिथ्यासिद्धिकारवचनमुदाहरति—" अत एवे " ति । यदुक्तमतिव्यापकं वा लक्षणमिति तदुपसंहारव्याजेन परिहरति—" तदेवमि " ति । अविद्यानिवृत्तेरप्यनिर्वाच्यतया नातिव्यापकं लक्षणमित्यर्थः ॥

आनन्दबोधयतिना निधिना गुणाना
मानन्दहेतुरकलङ्कधियां व्यधायि ॥ १ ॥
सेवन्तां मतिमन्तः सरस्वतीं चन्द्रिकां विशदाम् ॥
आनन्दबोधकृतिनः शमयन्तीमान्तरं तिमिरम् ॥ २ ॥
आनन्दबोधसुकवेः सूक्तिं के नाभिनन्दन्ति ॥
नो चेदरुचिनिदानं मत्सरसंज्ञं महापित्तम् ॥ ३ ॥
इति श्रीमदानन्दबोधभट्टारकविरचितो न्याय-
मकरन्दः समाप्तः ॥ शुभं भवतु ॥

---

टी०—रूपकालङ्कारेण नामकथनपुरःसरं ग्रन्थकरणमुपसंहरति—"नानेति। नानानिबन्धा एव कुसुमानि तेभ्यः प्रसव उत्पत्तिर्यस्य स तथोक्तः। स चासाववदातन्यायापदेशमकरन्दकदम्बकः। न्यायापदेशो न्यायाभिधानो मकरन्दस्य कदम्बकः समूहः। कीटाद्युपद्रवपर्युषितादिदोषराहित्यमितरमकरन्दकदम्बेऽवदातत्वम्। अत्र पुनरुपाधिबाधितत्वप्रतिकूलतर्कपराहतिवैधुर्यमनुकूलतर्कसद्भावश्चावदातत्वं, तादृशो मकरन्दकदम्बो गुणानां निधिना व्यधायि विहित इति यावत्। कुसुमान्यपि गुणानां निधानानि। अयमपि गुणानां "शुश्रूषाश्रवणञ्चैव ग्रहणं धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणा" इति प्रतिपादितानां निधिः। तेषां ग्रन्थकरणोपयुक्तत्वात्केषां किंप्रयोजनहेतुनयाऽयं ग्रन्थो विहित इत्यत आह—" आनन्दहेतुरि "ति। अकलङ्कधियां सन्देहविपर्यासासूयादिकलङ्करहितबुद्धीनां भृङ्गायमाणानामानन्दहेतुरित्यवगन्तव्यम्। लोके मकरन्दस्य भ्रमरानन्दहेतुत्वादकलङ्कधियामानन्दहेतुत्वप्रदर्शनेन च ग्रन्थस्य निर्दुष्टता प्रतिपादितेति मन्तव्यम्। दुष्टस्य तदानन्दहेतुत्वाभावात् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्येण श्रीमच्चित्सुखेन मुनिना कृता न्यायमकरन्दटीका सम्पूर्णा ॥

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 38. 62. 87 & 117.

---

# न्यायमकरन्दः ।

श्रीमदानन्दबोधभट्टारकाचार्य्यसङ्ग्रहीतः ।

आचार्य्यचित्सुखमुनिविरचितव्याख्योपेतः ।

प्रमाणमाला—न्यायदीपावली च ।

श्रीमदानन्दबोधभट्टारकाचार्यनिर्मिते ।

NYAYAMAKARANDA,

*A Treatise on Vedanta Philosphy,*

BY ŜREE ÂNANDA BODHA BHAṬṬÂRAKÂCHÂRYÂ

WITH A COMMENTARY BY CHITSUKH MUNI,

PRAMÂNAMÂLÂ *and* NYÂYADÎPÂVALÎ

EDITED BY N. S. N. SWÂMI BÂLARÂMA UDASEÊN MÂNDÂLIKA.

---

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKṚIT BOOK-DEPÔT

BENARES:

AGENTS -OTTO HARRASSOWITZ, LEIPZIG

PAṆḌITA JYESHṬHÂRÂMA MUKUNDJÎ BOMBAY.

*Printed by Harî Dâs Gupta, Proprietor,*

AT THE VIDYÂ-VILÂSA PRESS,

BENARES.

---

1907

हरिः ॐ नमः श्रीकृष्णाय ।

अथ आचार्यचित्सुखमुनिविरचितव्याख्योपेतः श्रीमदानन्दबोध-भट्टारकाचार्यसंगृहीतो न्यायमकरन्दोऽनेनैव निर्मिते प्रमाणमाला-न्यायदीपावली चेति निबन्धरत्नानि संमुद्र्य प्रकाशितानि वरीवृतति।

तत्र सव्याख्यो न्यायमकरन्दः श्रीमदुदासीनप्रवरश्रीसत्प्रकाश-स्वामिशिष्यश्रीबालरामस्वामिभिः संशोधितः । अनन्तरं तेषु स-माधिस्थेषु तैरेव लेखयित्वा संशोधितं प्रमाणमाला न्यायदीपावलि-श्चेति ग्रन्थद्वयं समवलम्ब्य तदनुसारेणैव संशोधितवानस्मि ।

अत्र संशोधने जातानां मदीयस्खलितानां क्षमायै सन्तो मया-ऽभ्यर्थ्यन्त एव ।

सत्पक्षपातिनो हंसा नूनं नालीकवल्लभाः ।
गुणं गृह्णीत मा दोषं नीरक्षीरविवेकिनः ॥ १ ॥

रत्नगोपालभट्टः ।

॥ श्रीगणेशायनमः ॥

# प्रमाणमाला ।

श्रीमदानन्दबोधभट्टारकसुधीकृता ।



आनन्दमात्मानमसत्यभेदं प्रणम्य विज्ञानतनुं मुकुन्दम् ॥
प्रसाधने तस्य सदोपयुक्तां प्रमाणमालां रचयामि रम्याम् ॥ १ ॥

आनन्दो दुःखाभावो न भवति । तदनिरूप्यत्वात् । यदित्थं तत् तथा । यथा घटः । यद्वा, आनन्दो भावरूपः । प्रतियोग्यनिरूप्यत्वात् । घटवत् । अवाच्ये सत्यपदवदानन्दपदस्य दुःखाभावे प्रवृत्तेः प्रतियोग्यनिरूप्यत्वमसिद्धमितिचेन्मैवम् । अकस्मादुपनतविपञ्चीस्वरश्रवणादावन्तरेणापि दुःखाभावावमर्शमानन्दसंवेदनात् । आनन्दाऽभाव एव दुःखमिति पूर्वन्यायेन विपरीतप्रसङ्गात्तत्रानुभवविरोध इति चेत् । अत्रापि समं समवधानमन्यत्राभिनिवेशात् । प्रतियोग्यऽनिरूप्यस्याऽप्यभावत्वे सत्यतिप्रसङ्गात् । किञ्च, आनन्दो भावरूपः । सातिशयत्वात् । दुःखवत् । नच निवर्त्यदुःखोपाधेरतिशय इति युक्तम् । अन्यथापि दर्शनात् । तथाहि । क्लेशावाप्ते हि न तथा प्रतीयते लोको, यथान्तरेण प्रयासं प्राप्ते । व्याप्तिः पुनरुपाधिनिरसनेन समर्थनीयेति । एवं स्थिते विज्ञानमानन्दं ब्रह्मेति श्रुतावानन्दशब्दस्य स एवार्थो, लोकानुसारात् ।

बाधकादन्यथात्वमितिचेन्न । तदनिरूपणात् । ब्रह्मात्मभावरूपे मोक्षे तदानन्दरागात् प्रवर्तमानस्य संसारप्रसङ्गो बाधकः स्यात् । रागनिबन्धना च प्रवृत्तिः संसारबीजमिति हि शास्त्रस्थितिरितिचेन्मैवम् । अस्य परमानन्दगोचरत्वे तत्प्रवृत्तिविरोधित्वात् । परमो हि ब्रह्मानन्दः । सोऽस्य परम आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः । तथा च तद्गोचरो रागः कथमल्पीयस्यऽनेकदुःखसम्भिन्ने सांसारिके सुखे प्रवर्तयेत् । तदलाभे कदा-

चिदन्यत्र प्रवृत्तिर्भवेत् । 'अलाभे मत्तकामिन्या दृष्टा तिर्यक्षु काम्यते'ति न्यायादिति चेत् । भवत्येवं कस्यचिन्न तु सर्वस्य महारम्भस्याऽत्यग्रमनसो वशीकृतेन्द्रियग्रामस्य प्रकृत एवार्थे प्रवृत्तिसम्भवात् । तादृश एवाधिकारी मोक्षशास्त्रे विवक्षितः । नच सर्वाधिकारं किमपि शास्त्रं सम्भवतीति ।

यस्त्वेवमपि दर्शनकथाङ्गमबोधरहितो यथा दर्शनपूजकः प्राह रागनिबन्धनत्वादेवेयं प्रवृत्तिः संसारबीजमितरप्रवृत्तिवदिति, तस्य च दुःखोच्छेदमात्रेऽपि मोक्षे तद्द्वेषनिबन्धना प्रवृत्तिर्द्वेषनिबन्धनत्वेन कथं न संसारबीजं भवेत् । तथाभूतेतरप्रवृत्तिवत् । न तत्र द्वेषात् प्रवृत्तिः, किन्तु संसारासारतातत्त्वदर्शननिष्पन्नादुद्वेगात् मिथ्याज्ञाननिदानो हि द्वेष इति चेद् अत्रापि तर्हि न रागात् प्रवृत्तिरपि तु परमार्थदर्शननिदानाया परमानन्दश्रद्धाया एव । न हीच्छामात्रं रागः, किन्तर्हि मिथ्याज्ञाननिदानैव सा । अत एव भगवान् पतञ्जलिरविद्याक्षेत्रत्वमाह स्म परेषां क्लेशानाम् । अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणामिति । तस्मान्मुख्यार्थे बाधकाभावाद् ब्रह्मण्यानन्दश्रुतिर्न दुःखाभावपरतयोपचरणीयेति सिद्धम् ।

ब्रह्मेति च तत्र तत्र परमात्मोच्यते । तथाचायमानन्दस्वभावः स्यादात्मत्वादपरात्मवत् । तत्त्वमसीत्यसकृदैकात्म्यश्रुतेश्च । न खल्वानन्दात्मनो जीवादभिन्नः परमात्मा तद्विपरीतो भवितुमुत्सहते, विरोधात् । जीवश्च परमानन्दस्वभावः । परप्रेमास्पदत्वात् । य उक्तसाध्यो न भवति, नासावुक्तसाधनः । यथा घटः । न चायमुक्तसाधनो न भवति तस्मान्नोक्तसाध्य इति । नचाऽयमसिद्धो हेतुः । परो हि निरतिशयः स्वात्मनि सर्वस्य प्रेमा दृश्यते । कथमपरथा तादर्थ्येनैवापरः सर्वोऽपि प्रेमगोचरः स्यात् । नो खल्वानन्दमपि लौकिकं रूपतो रोचयन्ते, किन्त्वात्मार्थमन्यथा रूपाभेदेन स्वपरानन्दयोरविशेषापत्तेः । यदा त्वानन्दस्यापीदृशी दशा, तदा किमन्यत्र वक्तव्यमिति । भवति चात्र श्रुतिः — आत्मनस्तु कामाय सर्वं प्रियं भवतीति । यश्च यदर्थं प्रियं भवति स ततोऽप्यतिशयेन प्रिय इति लोके दृष्टम् । यथा पुत्रार्थतया प्रियात् तन्मित्रादेः पुत्र इति ।

भवत्वेवं परप्रेमगोचर आत्मा, तथापि परमानन्दस्वभावो मा

भूत् किं बाधकमिति चेद् उच्यते । न तावत् सुसाधनस्य दुःखस्योपेक्षणीयस्य वा प्रेमगोचरता युक्ता । द्वेषाद्, उपेक्षणाच्च । दुःखाभावस्य तु यद्यपि सा युक्ता, तथापि न तद्रूपत्वेनात्मनि सा सम्भवेत् । तस्य भावरूपत्वात् । यद्यपि च सुखसाधने प्रेमास्ति, तथापि सुखगोचरान्न्यूनः सातिशयश्च । स्वात्मनि तु सुखगोचरादप्यधिका निरतिशय एवायमीक्ष्यते । सुखगोचराच्च प्रेम्णोऽयमतिशयानः सुखातिशयानुसारी दृश्यत । सार्वभौमोपक्रमेषूत्तरोत्तरशतगुणेष्वानन्देष्विति सकललौकिकसुखप्रेमातिशायी निरतिशयोऽयमात्मनि प्रेमा सर्वानन्दातिशायित्वेनाऽनतिशयानन्दरूप एवावभासमाने तस्मिन्नवकल्पत इत्यनिच्छताऽप्यच्छमतिनाऽभ्युपेतव्यम् । तदेवमपरात्मनि परानन्दस्वभावे सिद्धे तदभिन्नः परमात्मापि तद्रूप एव भवितु युक्त इत्यभिप्रायेणोक्तम्–" आनन्दमात्मानम्" इति ।

कथं पुनर्जीवपरमात्मनोरभेदे संसार्यसंसार्यादिभावेन तयोर्भेदः सङ्गच्छते, कथं वा जीवानामपि च परस्परं पण्डितमूर्खादिभावेनेत्यत इदमुक्तम् " असत्यभेदम् " इति । नायं तादात्म्यश्रुतिबाधितत्वात् सत्यो भेदः, किं तर्हि बिम्बप्रतिबिम्बयोः प्रतिबिम्बानामिव च परस्परमलीकनिर्भास एवोपपद्यत इत्यर्थ । किञ्च, जीवाः परमात्मनस्ततश्चान्ता न भिद्यन्ते । आत्मत्वात् । परमात्मवत् । परस्परं भेदनिरासायोच्यते–विवादास्पदीभूतानि भोगायतनानि उभयवाद्यविवादास्पदस्यैव भोगायतनानि । भोगायतनत्वात् । प्रतिवादिभोगायतनवत् । यद्वा, विवादपदानीन्द्रियाणि उभयसिद्धस्यैव भोगसाधनानि । भोगसाधनत्वाद्, इन्द्रियत्वाद्वा । प्रतिवादीन्द्रियवत् । एव प्रत्येकं चक्षुरादिकमपि पक्षीकृत्य प्रयोक्तव्यम् । विपर्यये त्वेकेनैवोपपत्तावाकाशादाविव कल्पनागौरवं बाधकमुन्नेयम् ।

अननुसन्धानं तु जीवान्तरे जीवस्य शिरोऽवच्छिन्न इवात्मभागे पादावच्छिन्नस्यौपाधिकभेदप्रयुक्त्यैवोपपत्स्यते । परमेश्वरस्य त्वभोक्तुरनुसन्धानेऽपि न प्रवृत्तिसङ्करप्रसङ्गः शरीराणामपि प्रपञ्चितमन्यत्र । किञ्च । विवादाध्यासिता जीवाः प्रतिवादिनस्ततश्चान्तो न व्यतिरिच्यन्ते । जीवत्वादात्मत्वाद्वा । प्रतिवादिवत् । न चामुष्माच्चेष्टाद्यनुमितात् । प्रयतमानादप्रयतमानोऽहं भिन्न इत्यादिप्रत्यक्षविरोधः । परात्मनां प्रत्यक्षत्वानभ्युपगमात् । प्रत्यक्षाप्रत्यक्षयुगधर्मस्य

च भेदस्य प्रत्यक्षत्वानुपपत्तेर्वायुवनस्पतिसंयोगवत् । उपपत्तौ वा शाश्वतिकबाधाभावलक्षणस्य तात्त्विकत्वस्य प्रत्यक्षीकर्तुमशक्यतया प्रकृताप्रतिपक्षत्वात् । नच कालान्तरवर्ती बाधः संप्रति योग्यो, येन तदनुपलम्भात् तदभावो निश्चीयेत । नच स्वरूपमेव भावानां भेद इति विवक्षितयुगधर्मत्वासिद्धिः । तथा सति प्रतियोग्यनपेक्षत्वप्रसङ्गात् । न हि पटादिस्वरूपं प्रतियोग्यपेक्षं प्रतिभासते । घटाद्यप्रतिभासेऽपि पट इत्यादिप्रतीतिदर्शनात् । भेदस्तु नियमेन प्रतियोग्यपेक्षः प्रतिभाति । घटात् पटो भिन्न इति । तस्मादपेक्षानपेक्षालक्षणविरुद्धधर्माध्यासान्नानयोरैक्यं सम्भवति ।

किञ्चास्मिन् मते स्वरूपाणामानन्त्यात् कथं तेष्वेकं भिन्नपदं प्रवर्तेत । इतरेतरभावोपाधिनेति चेत्, स एव तर्हि प्राप्ताप्राप्तविवेकेन भेदः स्यात् । तथा सति, घटो भिन्नो, घटस्य भेद इति च विशेषणविशेष्यभावसम्बन्धावभासावाञ्जस्येनोपपादितौ भवेताम् । नचात्र लौकिकानामुपचाराभिमान इति सर्वं समञ्जसम् ।

अथवा सर्वभेदनिराकरणायेदमुक्तम् " असत्यभेदम् " इति । सर्वोऽपि हि भेदः श्रुत्या बाध्यते । एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चनेति । नच ब्रह्माधिकरणस्य नानाभूतस्य निषेधेऽपि ततोऽन्यत्र तद्भवेदिति शङ्कनीयम् । कारणादन्यत्र कार्यानुपपत्तेः । ब्रह्मणश्चाकाशादिकारणताया अशेषोपनिषत्प्रसिद्धत्वात् । एतदेवोक्तं गुरुभिः—

नान्यत्र कारणात् कार्यं न चेत् तत्र क तद्भवेदिति ।

प्रतिष्ठितप्रामाण्यप्राचीनप्रत्यक्षादिविरोधात् । तदपेक्षपराचीनमागमवाक्यं कथं तद्गोचरं भेदमपबाधत इति चेत् । मैवम् ।

तत्परत्वात् परत्वाच्च निर्दोषत्वाच्च वैदिकम् ।
पूर्वस्य बाधकं, नायं सर्प इत्याप्तवाक्यवत् ॥

तत्परत्वं चोपक्रमादिषड्विधतात्पर्यलिङ्गावगम्यम् । अवगमितं चान्यत्रास्माभिरिति नेह विपञ्च्यते । संग्रहाधिकारात् ।

अत्राऽद्वैतसाधनश्लोकः—

विमतं तात्त्विकध्वान्तभेदहीनं मितत्वतः ।
यदित्थं तत्तथा यद्वत् खं तथेदं ततस्तथा ॥

विमतं विप्रतिपन्नम् । मितत्वतो ज्ञातत्वात् । यद्वत् खं, यथा

आकाशमित्यर्थः। अत्र च समुदायस्य सन्दिग्धसाध्यतया पक्षत्वे-ऽपि तदेकदेशस्याप्याकाशस्य भङ्ग्यन्तरेण निश्चितसाध्यतया व्याप्तिग्रहणास्पदत्वाद् दृष्टान्ततायां न काचिदप्यनुपपत्तिरिति गमयितव्यम्। भेदस्य तु तात्त्विकत्वेन तावदयं वस्तुनः स्वभाव इत्युदितम्। अस्वभावत्वे तु न तावदयं स्वतन्त्र. प्रतिभाति, इदमस्माद्भिन्नमित्ययमनयोर्भेद इति वा वस्तुविशेषणत्वेन विशेष्यत्वेन वा प्रतिभासानियमात्। विशेषणविशेष्यत्वेन तु प्रतिभासो भेदान्तरग्रहणपूर्वक एव स्यात्। दण्डयादौ तद्भावप्रतिभासस्य भेदग्रहणपूर्वकत्वनियमात्, तस्य च सम्बन्धगर्भत्वात् सम्बन्धस्य च भिन्नाधिष्ठानत्वेनैव प्रतीतिसम्भवात्। अनाकलितभेदसम्बन्धयोश्च दूरस्थयोर्वनस्पत्योः कदाचिदपि विशेषणविशेष्यभावेनानिश्चयात्। प्रत्युतैकत्वेन प्रतिभासात् सन्देहाद्वा विशेषणविशेष्यभावस्य च गुणप्रधानभावगर्भत्वेनानुभवात् तस्य च नियमेन भिन्नाधिष्ठानतयैव प्रतिभासात्। भवतु तर्हि भेदग्रहणस्य भेदान्तरग्रहणपूर्वकत्वनियमस्तथापि किमायातमिति चेदिदमायातं तस्यापि भेदस्य भेदान्तरग्रहणपूर्वकत्वं, तस्यापि तस्यापीत्यनवस्था मूलक्षयकरीति॥

स्वभावास्वभावसमुच्चयः पुनरस्वभावभागप्रयुक्ताऽनवस्थितेरेवायुक्तः। परस्परप्रतिषेधात्मकयोर्विधिनिषेधयोरेकत्वविरोधाच्च। अविरोधे वा जगति विरोधोच्छेदप्रसङ्गात्। भावाभावयोः साक्षाद्विरोधस्तदनुषङ्गादन्यत्रेति स्थितिः। असमुच्चयात्मनोऽपि प्रकारस्यानयोः प्रतिस्पर्द्धिनोरसम्भव एव। स खलु स्वभावाद्व्यतिरिक्तश्चेद् अस्वभाव एव स्यात्। तस्य तन्मात्रलक्षणत्वात्। अनतिरेके स्वभाव एवेति कथमयं तृतीयः स्यात्। स्वभावास्वभावविलक्षणात्मा अयमस्त्विति चेन्मैवम्। परस्परविरुद्धानां निषेधेऽपि विधाविव समुच्चयविरोधस्य गीर्वाणैरप्यवारणात्। एतेन चतुष्कोटिविनिर्मुक्तो भेद इति परास्तम्। चतुष्कोट्यात्मनोऽपि प्रसक्तेर्विरोधस्योभयत्राविशेषात्। न च तर्हि चतुष्कोट्यात्माऽस्त्विति वाच्यम्। एकैककोटिनियमस्य तात्त्विकत्वातात्त्विकत्वयोस्तदनुपपत्तेः। यदि खल्वेकैककोटीनां तदात्मकत्वनियमस्तात्त्विकः कथमेकश्चतुष्कोट्यात्मा भवेत्। अनियमेऽपि न चतस्रः कोटय इति कथं चतुष्कोट्यात्मैकः स्यात्। सदसद्विलक्षणताद्यभ्युपगमोऽप्येवमेव जडस्यानु-

पपन्न इति चेत्। सत्यम्। तात्त्विकत्वे तथैव। अत एव तत्त्वतो युक्त्या निश्चित्य वक्तुमशक्यत्वादनिर्वचनीयमेव जडमुच्यते। सदसद्वैलक्षण्यादिवाचोयुक्तिरपि तत्तद्रूपनिरूपणासहिष्णुत्वमात्रप्रकटनाय, न तु तत्तद्विरहसमुच्चयात्मना रूपान्तरस्य तात्त्विकत्वप्रकटनायेति न किञ्चनास्माकं दुष्यति। तस्मादस्मन्मतमेवानुसृत्य, भेदोऽपि वस्तुस्वभावादिविकल्पानुपपत्तेश्चानिर्वाच्य एवाभ्युपगन्तव्यो, न तात्त्विक इति सिद्धम्॥

किञ्च। अस्मादिदं भिन्नमित्यवध्यवधिमद्रूपावच्छिन्नो भेदः प्रतिभासते। विशेषणप्रतिभासपूर्वकश्च विशिष्टप्रतिभासस्तयोः कार्यकारणभावनियमात्। नच वस्तुमात्रमविभागं दृश्यमानमवधित्वेनावधिमत्त्वेन वाऽध्यवसातुं शक्यम्। तत् खल्ववधित्वेनाऽवसीयमानं तथैव पर्यवस्येदवधिमत्त्वेनापि तथैव, न त्वखण्डमेकमन्योन्याभावाऽविनाभूतत्वेनान्योन्यविरुद्धावध्यवधिमद्रूपद्वयावच्छिन्नमधिगन्तुं शक्यम्। तथाचाधाराधारभेदं प्रतिपन्ने भिन्नाधारमसङ्कीर्णमवध्यवधिमत्त्वं चाधिगन्तव्यम्। अवध्यवधिमद्रूपावच्छिन्नश्च भेदोनुभूयत इत्युक्तम्। तथाचावध्यवधिमद्भावप्रतिभासे भेदप्रतिभासस्तत्प्रतिभासे चावध्यवधिमद्भावप्रतिभास इति इतरेतराश्रयप्रसङ्गः। एतेनेदमपास्तं, यदाहुरेकं नीलं नीलतया, पीतं पीततया च विदित्वा अस्मादिदं भिन्नमिति प्रत्येष्यत इति। न हि नीलं नीलतयैव पीतं पीततयैव भेदमवच्छिनत्ति, किं तर्हि अवधित्वेनावधिमत्त्वेन च, अवधित्वमवधिमत्त्वं चाविभागेन प्रत्येतुं शक्यमित्युक्तम्। तथाच कथं प्रागुक्तः परस्पराश्रयप्रसङ्गो न भवेत्। किञ्च, नीलं नीलतया पीतं च पीततयेति निर्विकल्पकं वा नीलादिरूपमुपलक्ष्यते। किञ्चाऽनीलत्वाद्यवच्छिन्नं शब्दानुविद्धं सविकल्पकं, पूर्वस्मिन्कल्पे तशब्दाऽनुत्थाधवति संसर्गप्रत्यये तयोरवच्छेद्यावच्छेदकभावेन प्रतिभासो भवेत्। न हि निर्विकल्पकाः पदार्थाः प्रतिभान्ति। वाक्यार्थस्तु सविकल्पक इति दृष्टचरम्। उत्तरस्मिंस्तु नीलत्वादियोगादतद्व्यावृत्तिमुखेन परस्परमपि व्यावृत्तयोरेव तयोः प्रतिभाससम्भवः। तत्प्रतिभासश्चावध्यवधिमद्भावप्रतिपत्तिपूर्वक इति कथं स एव दुरुत्तरात्मा परस्पराश्रयो न प्राप्नुयादिति। अनयैव दिशा परोऽप्यत्राऽनुकूलस्तर्को ज्ञेयः॥

यद्वा विवादध्यासितो भेदो मिथ्या भेदत्वात्। दर्पणादिगत-मुखादिभेदवदिति। विपर्ययेतु बाधकमुक्तम्।

यद्वा, विवादपदं भेदसंवेदनं मिथ्या, भेदसंवेदनत्वात्। स्वप्नभेदसंवेदनवदिति सत्यत्वे तु भेदसंवेदनस्य लब्धरूप इ-त्यादिशास्त्रीयन्यायानुगृहीतान्वयव्यतिरेकपरिकल्पिततद्वर्गनिष्ठकार-णदोषनिदानताऽनुपपत्तेराकस्मिकत्वप्रसक्तिर्बाधिका॥

अथैवं भेदप्रपञ्चस्यालीकानिर्भासत्वे तदपबाधे शून्यमेवावशि-ष्यते? किं वा सल्लक्षणं ब्रह्म? इति। किमत्र विनिगमने कारण-म्?। उच्यते। विवादाध्यासिता घटादिभेदाः सद्रूपे परिकल्पिताः। प्रत्येकं तदनुविद्धत्वात्। ये येन प्रत्येकमनुविद्धास्ते तत्र परिकल्पि-ताः। यथा प्रत्येकं चन्द्ररूपानुविद्धास्तत्र परिकल्पिता जलतरङ्गच-न्द्रमसः। तथा चामी घटादिभेदाः सद्रूपानुविद्धास्तस्मात् तत्र प-रिकल्पिताः। तदनुविद्धत्वं च तदनुरागेणैव विधीयमानत्वम्। न-चेद तदादिवाच्यताद्यपेक्षमप्यस्तीति विशेषः। दूरा तरवो निरन्तरा वनाकारानुविद्धाः प्रतिभासन्ते। नच ते तत्र परिकल्पिता इति त-द्व्यवच्छेदार्थं प्रत्येकमित्युक्तम्। न हि प्रत्येकं तरुषु वनमिति म-तिः, किन्तु मिलितेष्वेवेति। विपर्यये तु निरधिष्ठानो भ्रमो निरवधि-कश्च बाधो भवेत्। तथाच तयोरधिष्ठानावभासतदवधिकप्रमाणल-क्षणप्रसिद्धनिमित्तासम्भवादनिमित्तत्वप्रसक्तिर्बाधिका। नच शू-न्यमधिष्ठानमवधिश्च स्यात्। यदनुविद्धं ह्यारोपित प्रतिभासते तदधिष्ठान स एवावधिस्तस्य। यथा शुक्तीदमंश रूप्यस्य। न क-दाचिच्छून्यानुविद्धमारोपितं प्रतिभातीति कथं तत्तथा स्यात्। न हीदमित्यपि शून्यं कचिद्भवति, किं तर्हि शुक्त्यादिकम्। अन्यथा भ्रान्तस्य तदुपादानानुपपत्तेरिति, विवादाध्यासिताभावाः स्वानुग-तप्रतिभासे वस्तुनि परिकल्पिताः। विभक्तत्वात्। यदित्थं तत् तथा। यथा सर्पधारादण्डमालाबलीवर्दमूत्रितत्वादीनि स्वानुगत-प्रतिभासे रज्ज्वा इदमंशे परिकल्पितानीति। विपर्यये तु बाधक-मुक्तम्॥

अत्राह कश्चित् स्यादेतदेवं यदि सर्पादयः परिकल्पिताः स्युः। न त्वेवम्। तत्प्रत्ययानामपि यथार्थत्वात्। तथाहि। विवा-दाध्यासिताः प्रत्यया यथार्थाः। प्रत्ययत्वात्। उभयवादिसिद्धप्रत्यय-

वत् । न च सर्वोऽप्ययथार्थ एव प्रत्यय इति दृष्टान्तासिद्धिः । अस्यैव प्रत्ययस्य यथार्थत्वविपर्ययस्वयोर्व्याघातात् । यदि ह्ययं यथार्थः स्यात् कथं तदा सर्वोऽप्ययथार्थः । यदि त्वयमयथार्थस्तदाऽन्यस्य विषयवैपरीत्याय केनचिद्यथार्थेन प्रत्ययेन भवितव्यमिति कथं न व्याघात इति । तदिदमसङ्गतम् । विवादास्पदविभ्रमाद्यभ्युपगमे राद्धान्तविरोधात् । यथार्थशब्देन च सदर्थविवक्षायां, नाय सर्प इत्यादिबाधविरोधात् । तुच्छव्यावृत्तार्थविवक्षायां चास्मान् प्रति सिद्धसाधनत्वात् । विवादास्पदविभ्रमाद्यनभ्युपगमे तु हेतोराश्रयासिद्धिरिति ॥

किञ्चायथार्थः प्रत्ययोऽस्तीत्यस्मदीयः प्रत्ययो यथार्थः स्याद्? अयथार्थो वा? प्रथमे तेनैवायथार्थत्वसिद्धिः । चरमेऽप्यस्यायथार्थत्वे कथं सर्वप्रत्ययायाथार्थ्यमिति नैवंविधः प्रत्ययोऽस्ति । किं तर्हि व्यवहारमात्रमेतत्पदार्थानामसंसर्गाग्रहमूलमिति चेत् । नैवम् । व्यवहारमात्रस्य परस्परान्वितत्वेन व्यवह्रियमाणपदार्थप्रत्ययमूलत्वात् । तथा हि । विवादाध्यासितो व्यवहारः परस्परान्वितत्वेन व्यवह्रियमाणपदार्थज्ञानपूर्वकः । व्यवहारत्वात् । मध्यमवृद्धव्यवहारवत् । न च साध्यविकलो दृष्टान्तः । तथा सत्युत्तमवृद्धप्रयुक्तशब्दानामन्वितप्रत्ययाजननेन व्युत्पत्तिवैधुर्ये शब्दप्रामाण्याच्छेदप्रसङ्गात् । संवादिनि व्यवहारे संसृष्टप्रत्ययोऽपि कारणमस्तु, न सर्वत्रेति चेत् । कुत एतत्? कार्यवैलक्षण्यस्य व्यवहारसंवादस्य कारणवैलक्षण्यापेक्षणादिति चेत्। अस्तु तर्हि संसृष्टयोरसंसर्गाग्रहः संवादिव्यवहारस्य कारणं,विपरीतस्तु विपरीतस्येति व्यवस्था, किं संसृष्टप्रत्ययाभ्युपगमेन । तस्माद् व्यवहारमात्रस्य संसृष्टप्रत्ययः कारणं, तद्विशेषस्तु संवादी संवादिन इति स्वाभ्युपगतशब्दप्रामाण्यालाभादेवाश्रयणीयम् । अन्यथोन्नीतन्यायेन तदसिद्धिरिति स्थितम् । तथापि रजतादिसमारोपसद्भावे किं प्रमाणमिति चेद्, एतावन्तं कालमिदमेव शुक्तिशकलं मिथ्यैव रजतमभादित्युत्तरकालानुसन्धानात्मकं प्रत्याभिज्ञापरपर्यायं प्रत्यक्षं तावदेकम् । अपरं चानुमानमनन्तरन्यायसूचितम् ॥

किञ्च । शुक्तिकाशकलं रजतात्मना प्रतिभासते । रजतार्थिनो नियमेन प्रवृत्तिगोचरत्वात् सम्यग्रजतवत् । नान्तरीयकप्रवृत्तिगो-

चरस्य शुक्त्यादिमलस्य व्यवच्छेदाय नियमग्रहणम् । किञ्च । विवादाध्यासिता प्रवृत्तिः पुरोवर्त्तिगोचररजतज्ञानपूर्विका । रजतेच्छाधीनपुरोवर्त्तिप्रवृत्तित्वात् । सम्यग्रजतप्रवृत्तिवत् ।

यद्वा विवादाध्यासितं, रजतधीपदम् । रजतव्यवहारपदत्वात् । यदित्थं तत्तथा यथा सम्यग्रजतम् ।

यः पुनराह– शुक्तिकाशकलं तदात्मना न प्रतीयते, तद्रूपेणाऽसत्त्वात् । यद्यद्रूपेणाऽसत् तत्तद्रूपेण न प्रतीयते । यथा घटः पटरूपेण, यथा वा शशविषाणं सद्रूपेणेति।तस्य साध्यविकलो दृष्टान्तः । शाब्दप्रत्यये घटादेरपि पटादिरूपेण प्रतिभासमानत्वात् । अन्यथा परं प्रति दृष्टान्तत्वेनाभिधानस्यैवानुपपत्तेरिति।अस्तु तर्हि समारोपः समारोप्यमाणं तु विचार्यतां, किमसत्, किं वा सत्, किं वोभयात्मकं, किं वोभयविलक्षणम् ? इति। न तावदसत् । तत्र प्रतिभासभेदप्रवृत्त्योरनुपपत्तेः। न ह्यसति नरविषाणादौ अपरोक्षावभासः कदाचिदुपलभ्यते । नापि प्रवृत्तिः । आन्तरालिकाद्वैलक्षण्यादसत्येव कश्चिद्भेदेवमस्त्विति चेन्न । वैलक्षण्याधिकरणत्वे तुच्छरूपाऽसत्त्वानुपपत्तेः । तस्य च निराकारत्वात् । सद्वैलक्षण्यमात्रेणाऽसत्त्वाभिधाने मायावादिमतप्रवेशात् । नापि सत् । बाधविरोधात् । यत्र बाध्यते ततोऽन्यत्रास्तीति चेन्न । तत्रास्याप्रतीतेः कल्पनानर्थक्याच्च । न ह्यन्यत्र सत्त्वमस्यात्र प्रतीतिमुत्पादयेत्। विषयभेदात् । नहि भूमलिनसत्तामात्रान्नभोमलिनं प्रतिभायात् । तथा प्रतिभासे वाऽन्यत्र दृष्टस्याऽन्यत्र सत्ता न कल्पनीया । कल्पितस्यैव तथाभूतस्यानेकस्य सम्भवात् । इह निषेधादन्यत्रास्ति घटादिवदिति चेन्मैवम् । अधिष्ठानारोपिततादात्म्ये व्यभिचारात् । यद्यन्यत्रापि नास्ति, कुतस्तत्रापि न निषिध्यत इति चेद्, अप्रसक्तेस्तादात्म्यवद्, इहापि नेदं रजतमित्याकारेण तादात्म्यमेव निषिध्यते, न स्वरूपमिति चेन्न । तथा सति वनस्पत्योरिव विविक्तयोर्द्वयोरप्यत्रैवानन्तरं प्रतीतिप्रसक्तेः । प्रतिषेधप्रत्ययस्तु कदाचिन्न तत्र दृष्टं सलिलमस्ति, न मया तत्रानुभूतं रजतमस्ति इति वैयधिकरण्येनापि जायत एव । कुत्र चेदमन्यत्र भवेद्, भवेद् बुद्धौ देशान्तरादौ वा । यदि बुद्धौ तर्हि गुञ्जापुञ्जादौ ज्वलनादिसमारोपावसरे शरीरदाहादिप्रसङ्गः । तत्रापि तस्याऽनात्विकत्वान्न प्रसङ्ग इति चेद्, आयातं तर्हि अत्यन्तासत्त्वमनिर्वचनीयत्वं वा । तथाभा-

वस्य गत्यन्तराभावात् सन्नेवायमर्थक्रियाऽक्षम आकार इतिचेद्, गुञ्जापुञ्जादावपि तर्हि तदाकारारोपेण दाहाद्यर्थी न प्रवर्त्तेत । तदाकारस्य सर्वदैवादृष्टशक्तित्वात् । बाह्यसमर्थाकारेण समारोप्यमाणः पुनः प्रवर्तयतीति चेत् । गुञ्जापुञ्जादिरेव तथा समारोप्यमाणः प्रवर्तयतु, किमनेनान्तस्तात्त्विकेन बहिरारोपितेनाऽसमर्थेन समर्थात्मना समारोप्यमाणेन कल्पितेन । भवतु तर्हि देशान्तरादावेव समारोपितस्य सद्भाव इतिचेन्न । तथा सति तस्य ग्राहकं, विप्रकर्षेण द्रष्टुमयोग्यत्वात् । अन्यथाऽतिप्रसङ्गः । दोषसामर्थ्याद्दर्शने नातिप्रसङ्ग इति चेद् दोषेऽप्यसदनिर्वचनीयं वा तादात्म्यवद्दर्शयतु दृष्टान्तानुसारात् । तत्र च गत्यन्तराभावात् तस्मादत्यन्तासतोऽपि सत् समारोपणीयमिति सिद्धम् । सदसद्रूपसमुच्चयस्तु विरोधादेवायुक्तः । अविरोधे वा कथं भ्रान्तिबाधव्यवस्था, पूर्वोत्तरयोरुभयोरप्येकैकांशे यथार्थत्वात् । सदसद्रूपस्य सद्रूपेण प्रतीतिर्भ्रान्तिरिति चेत्, तत् किमिदानीमंशाग्रहणं भ्रान्तिः ? । तथाचोत्तरोऽपि भ्रान्त एव स्यात् । तस्याप्यसदंशस्यैव स्फुरणात् । सर्वज्ञानानि चैवं भ्रान्तानि स्युः । सर्वात्मना अर्थानवभासकत्वात् । नांशाग्रहणं भ्रमं ब्रूमः, किन्त्वंशान्तरव्यवच्छेदेन सदेवेदमिति ह्यवधारणदार्ढ्य संवेदनमिति चेन्न । द्वितीयरूपस्य तत्राप्रसक्तेः । अप्रसक्तस्यापि व्यवच्छेदकत्वेन भ्रमत्वे सर्वस्यापि ज्ञानस्य तथाभावः किं न स्यात् । सर्वस्यापि ज्ञानस्य कियति कियति रूपे वर्तमानस्याप्रसक्तापररूपव्यवच्छेदेन भ्रमत्वोपपत्तेः । तदेवं न सदसद्रूपमध्यारोपणीयमभ्युपेयं, किं तर्हि प्रत्येकसमुच्चयरूपाभ्यां सदसद्विलक्षणमनिर्वचनीयमेव । नचैतादृशमुभयवैलक्षण्यमपि तात्त्विकमभ्युपगच्छामो येन प्रसञ्जयेम विरोधम् । वैलक्षण्यवाचोयुक्तिर्हि प्रतियोगिनिरूपणाद् यौक्तिकत्वप्रकटनफला, न त्वेवंरूपतायाः सामञ्जस्यसम्पादनायेत्यवोचाम ।

नहि स्वरूपत एवातात्त्विकस्य तात्त्विकं किमपि रूपं सम्भवति ।
नो खल्वतात्त्विकस्य सर्पस्य विसर्पणादयस्तात्त्विकाः सम्भवेयुः ।

अत एवोक्तमाचार्यवाचस्पतिना ब्रह्मतत्त्वसमीक्षायां- सदसदुभयानुभयादिप्रकारैरनिर्वचनीयत्वमेव ह्यविद्यानामविद्यात्वमिति । प्रमाणं पुनरत्र- विवादपदमनिर्वाच्यं, बाध्यत्वात् । यदुक्तसाध्यं न

भवति, न तदुक्तसाधनम् । यथात्मा । न तथेदमुक्तसाधनं न भवतीति, तस्मान्नेदं नोक्तमाध्यमिति विपर्यये तु बाधकमुक्तमेव । एतदेवोपजीव्यप्रतीतिबाधान्यथानुपपत्तिः प्रवृत्तिबाधान्यथानुपपत्तिश्चेत्यर्थापत्तिद्वयमपि तद्वादिना प्रत्यभिधातव्यम् । नह्यन्नासति यथोक्तरीत्या प्रतीतिभदप्रवृत्ती स्याताम् । नरविषाणवत् । नापि वस्तुनि सति बाधश्चैतन्यवदिति । भवत्वेव लक्षणमारोपणीयं, तथाप्यस्यानाद्यनन्तत्वे सर्वदोपलम्भापातादबाधापत्तेः । कादाचित्कतायां तु कारणं वाच्यम् । नच ध्वस्तातिरेकिणः कार्यस्य निमित्तमात्रादुत्पत्तिरित्युपादानमपि किञ्चिदभ्युपेयमिति चेत् । अभ्युपेयतां तर्हि कार्यवशादेव तदनुगुणं सनिमित्तमुपादानम् । निमित्तं तावदनादिसन्ततिवाहिनी सविषयस्य विभ्रमस्यैव वासना स्यात् । अपरमप्यधिष्ठानाऽवभासाद्यन्वयव्यतिरेकानुकार्युपादानमप्यनिर्वचनीयमेकं किञ्चिदनादिकार्यानुगुणं कल्पनीयम् । न हि तावत् सत्यं सम्भवति । तथात्वे कार्यस्यापि सत्यतापत्तेः । उपादानोपादेययोस्तादात्म्यदर्शनात् । सुवर्णं कुण्डलमितिवत् । अत्यन्ताऽसतो निरस्तसामर्थ्यस्य न कारणतैव सम्भवति, दूरं हि तद्विशेष उपादानत्वम् । तस्मादनिर्वचनीयमेव कार्यवत्तदुपादानमपि । तच्चानाद्येव युक्तम् । सादित्वे तत्परम्परापत्तेः । आन्त्यात् कार्यादन्वयदर्शनापत्तेश्च स्वकार्यानुगतदर्शनस्यैवोपादानत्वात् सुवर्णवत् । तस्मादनाद्यनिर्वचनीयमेव रजताद्युपादानम् । तच्चाधिष्ठानविद्याविरोधादविद्येति गीयते । तदकार्थतया चाऽज्ञानमिति । तां च सविलासां विलापयदधिष्ठानज्ञानं बाधकमुच्यते । तज्ज्ञानान्तरीयकासिद्धिरेव त्वभावो, नेदं रजतमिति स्वातन्त्र्येणानूद्यत इति रहस्यम् ।

सति चैवं प्रपञ्चोऽपि स्यादविद्याविनिर्मितः ।
अविद्यातो निभिन्नत्वे जडत्वाद्रज्जुसर्पवत् ॥
जाड्यदृश्यत्वहेतुभ्यां मिथ्यात्वं वा प्रसाध्यताम् ।
प्रागुक्त एव दृष्टान्तो मिथ्यात्वे चेह बाध्यताम् ॥

अथायं प्रामाणिकः प्रपञ्चः, किं वा न । आद्ये कथमविद्यामयः स्यात् । अलीकस्यैव रज्जुसर्पादेस्तथाभावात् । उत्तरस्मिंस्तु कथं नाश्रयासिद्धं साधनमिति । उच्यते—

प्रत्यक्षादिप्रमाणानां प्रामाण्यं व्यावहारिकम् ।
आश्रित्याऽयं प्रपञ्चः स्यादलीकोऽपि प्रमाणवान् ॥
अद्वैतागमवाक्यं तु तत्त्वावेदनलक्षणम् ।
प्रमाणभावं भजतां बाधवैधुर्यहेतुतः ॥

न हि सुशिक्षितोऽपि प्रत्यक्षादिरत्यन्ताबाध्यार्थपरिच्छेदलक्षणाप्रमाण्यं स्वतः परतो वा विज्ञातुं क्षमते । न हि तावत् प्रत्यक्षेणैव वेदनेन स्वप्रामाण्यमीदृग् विज्ञायते । परवेदनपक्षे हि तत्स्वात्मानमप्यगोचरयत् कथं स्वप्रामाण्यं गोचरयेत् । स्वसंवेदनपक्षेऽपि स्वार्थस्यात्यन्तिकमबाधमनवगम्य तु कथं तदुपाहितमर्यादात्मनः प्रामाण्यमध्यवस्येत् । नच स्वार्थस्यात्यन्तिकबाधासत्त्वमस्मत्प्रत्यक्षगम्यं सम्भवति । कालान्तरभाविनो बाधस्येदानीमयोग्यत्वेनानुपलम्भसम्भवात् । परमपि प्रत्यक्षान्तरं चेदाद्यसमानयोगक्षेमं कथमत्र प्रवर्तताम् । यदा तु प्रत्यक्षस्यैवैतादृशी गतिस्तदा कैव कथा तद्गोचरव्याप्त्युपजीविनो वराकस्यानुमानादेः ।

परतश्च प्रमाणत्वपरिज्ञानेऽनवस्थितेः ।
परिहारं प्रयत्नेऽपि न पश्यामः सभाक्षमम् ॥

आगमवाक्यं पुनरनियतकालवस्तुपरिच्छेदकत्वादात्यन्तिकाबाध्यत्वलक्षणमपि सत्यत्वं स्वविषयस्याध्यवस्येत् । तदवसायान्वयव्यतिरेकाभ्यां च तत्साधनत्वलक्षणं प्रामाण्यमध्यवसीयते । तथाच श्रूयते, सत्यं ज्ञानमनन्तं ब्रह्मेति। तस्मादद्वैतागमवाक्यमेव तत्त्वावेदनं प्रमाणमुपपद्यते, न प्रत्यक्षादीनीति स्थितम् । एतेन धर्मिग्राहकप्रमाणबाधः प्रकृतस्य परास्त एव । सांव्यवहारिकस्य सत्यत्वस्य तेन सिद्धेः । तस्य च शरीरात्मभाव इवालीकत्वेनाविरोधात् । यत्पुनरप्रामाणिकत्वे प्रपञ्चस्य कथं नाश्रयासिद्धं साधनमिति । तदप्यसत् । प्रसिद्धिमात्रेणाप्याश्रयत्वे बाधकादर्शनात् । नैवम्भूत आश्रयः, प्रमाणशून्यत्वात्खरविषाणवदिति बाधकमितिचेन्न । एतदेव हेतुं प्रति आश्रयत्वानाश्रयत्वयोः प्रकृताबाधात् । यदि त्वेवम्भूतमेव प्रमाणशून्यत्वं भवदीयं हेतुं प्रत्याश्रयः, कथमस्मदीयं प्रति न भवेदविशेषात् । अथ भवदीयं प्रत्यपि नाश्रयस्तर्हि तस्याश्रयासिद्धत्वादसाधनत्वे कथं प्रकृतबाधकतेति । एतेनोदाहरणेऽप्याश्रयहानिशङ्कानिरस्ता, त्वदुदाहरणसाम्यादिति सर्वं सुस्थितम् । तथापीदमुच्यतां कि-

मिदं जडत्वं नाम हेतुकृतं किं वा दृश्यत्वमिति । उच्यते । जडत्वं नामानात्मप्रकाशत्वमसंविद्रूपत्वं वा पर्युदासात्मकं, दृश्यत्वं तु स्वव्यवहारे स्वातिरेकिस्वदर्शनापेक्षानियतिर्विधिमात्रमिति विवेकः । हन्त एवमात्मन्यपि प्रकृतहेतुप्रवृत्तावनैकान्तिकत्वं स्यात् । मैवम् । तस्य स्वप्रकाशत्वात्, संविद्रूपत्वाच्च । अत एव तृतीयाऽप्रसक्तेः । कुतः स्वप्रकाशत्वमिति चेत् । अत्रायं पुरुषः स्वयञ्ज्योतिर्भवतीति श्रुतेः । किञ्च । अस्ति तावन्ममेदमनुकूलमिदं प्रतिकूलमिति च ज्ञानं, यद्वशादनुकूले प्रवृत्तिः, प्रतिकूलाच्च निवृत्तिः । तच्चेदमवच्छेदकप्रकाशाधीनम्, अवच्छिन्नप्रकाशत्वाद्दण्डप्रकाशवत् । अवच्छेदकश्चायमात्मा न स्वाश्रयव्याप्यो भवितुमुत्सहते । वस्तुत्वादसिधारावत् । न ह्यसिधारयैवासिधारा छिद्यते । विषयसंवेदनादेव तदाश्रयः सोऽपि सिध्यत्विति चेन्मैवम् । संवेदिता हि न स्वातिरेकिसंविदधीनप्रकाशः । संवित्कर्मतामन्तरेणापरोक्षत्वात् । संवेदनवत् । अतः पारिशेष्यात् स्वप्रकाशतासिद्धिः ।

यद्वा प्राभाकारं प्रत्येवं प्रयुज्यते । संवेदिता स्वप्रकाशः संवित्कर्मतामन्तरेणापरोक्षत्वात् संवेदनवादिति । विज्ञानरूपश्चायमात्मा वेदान्तेषु गीयते । विज्ञानमानन्दं ब्रह्म । अयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनमिति च । विज्ञानं च स्वप्रकाशमिति कथं तद्रूपस्यात्मनो नात्मप्रकाशता । विज्ञानमेव तावत् कथं स्वप्रकाशमिति चेत् । अत्र साधनश्लोकः

> विमता धीः समाधारकालस्वज्ञानहानितः ।
> न हीना व्यवहारेण धीत्वादविमता यथा ॥

विमता विप्रतिपन्ना धीः संवित्समाधारकालस्वज्ञानहानितः, स्वसमानाश्रयस्वसमानकालस्वगोचरज्ञानाभावादिति यावत्, न हीना व्यवहारेणाऽव्यवहार्या न भवति । धीत्वात् । संवित्त्वात् । अविमता यथा । अविप्रतिपन्ना घटसंविन्ममास्तीति व्यवह्रियमाणसंविद् यथेत्यर्थः ।

एतदुक्तं भवति, विवादाध्यासिता संवित्, स्वसमानाश्रयस्वसमानकालस्वगोचरसंवेदनविरहप्रयुक्तव्यवहारविरहा न भवति संवित्त्वात् । अनन्तरव्यवह्रियमाणसंविद्वदिति । अस्वसंवेदनत्वे तु संवेद्यमानघटप्रकाशसमनन्तरमेव मयेदं विदितमिति विकल्पो न

भवेत्। न ह्यविदिते विशेषणे विशिष्टविकल्पः सम्भवति। न च वेदनान्तरं तद्गोचरमनुभूयते। अनुभवे तद्गोचरमप्यनुभूयतेत्यनवस्था स्यात्। आद्यसमानयोगक्षेमत्वात्। यावती खल्वाद्यग्रहणसामग्री मनःसंयुक्तात्मसमवायलक्षणा दृष्टा, सा द्वितीयादावप्यविशिष्टेति कथं तदपि नानुभूयेतानचाहष्टमात्रवैकल्यादिति शङ्कनीयम्। तन्मात्रवैकल्यात् साक्षात्कारानुत्पत्तेरनुपपत्तेः। उपपत्तौ वा समनस्केन्द्रियसन्निकृष्टाः स्फीतालोकमध्यमध्यासीनाश्च करिनरतुरगादयोऽपि कदाचिन्न वीक्ष्येरन्। तथा च योग्यानुलम्भादभावनिर्णयः क्वापि न भवेत्। तथापि सौषुप्तप्रयत्नवद्व्यान्तरवैजात्यादनुपलब्धिर्भवेदितिचेद्, भवेन्नाम तत्र तथा यद्यनन्यथासिद्धं कार्यमस्ति। तद्वशेन तस्यावश्यं कल्पनीयत्वादनुपलम्भाच्च, नेह तथाविधं कार्यमस्ति। घटो मया विदित इति विशिष्टवेदनमेनान्नापि तथाविधं कार्यमितिचेन्न। तस्य विशेषणवेदनमात्रेण चरितार्थत्वाद् भेदाभेदयोरुदासीनत्वात्। यद्वस्तु तत् स्वातिरिक्तेनैव वेदनेन व्याप्यमितिव्याप्तेर्भेदः कल्पनीय इति चेन्न, अनेनैव व्याप्तिसंवेदनेन व्यभिचारात्। इदं हि वस्तुमात्रं व्याप्नुवदात्मानमपि व्याप्नुयात्। किञ्च। सर्वं सवेदनमस्वसंवेदनं, सर्वं कार्यं सकारणकं सर्वं वस्तु सात्मकमित्यादिसंवेदनानि स्वपरसाधारणप्रयोजकवशात्। स्वात्मगोचराण्यपि बहुलमुपलभ्यन्त इति कथं न व्यभिचारपरम्परा। परं गोचरयन्त्येव स्वात्मानमपि गोचरयन्तीति चेद्, घटसंवेदनमपि तर्हि घटं गोचरयदेव स्वात्मानमपि गोचरयतीति न विशेषः कश्चित्। स्वपरसाधारणप्रवृत्तिनिमित्तगोचरतयैव स्वगोचरत्वं तत्र दृष्टमिति चेन्न। अस्य वैधर्म्यमात्रत्वात्। सर्वथा च साम्यसम्पादनीयत्वे प्रमाणाभावात्। प्रदीपवच्चात्र प्रवृत्त्युपपत्तेः। यथा खलु प्रदीपः परत्र विज्ञानलक्षणं कार्यं कुर्वन् स्वात्मन्यपि स्वभावभेदादेव तत् करोति, न तु दीपान्तरमपेक्षते, तथा विज्ञानमपि परत्र व्यवहारकार्यं कुर्वन् स्वभावभेदादेव स्वात्मनि व्यवहारं कुर्याद् विज्ञानान्तरं तु नापेक्षत इति किं न स्यात्। अत एवोक्तम्—

> एकं कस्य चिदन्यस्य क्रमेण प्रकाशकम्।
> अत्यन्तमनपेक्षस्य नैकमप्यस्तु का क्षतिरिति॥

तस्मादाद्यसंवेदनस्य वेदनान्तरवेदनीयत्वेऽनवस्थाप्रसङ्गलक्ष-

णतर्कोपकृतानुलम्भादेव तस्याभावसिद्धौ परिशेषात् स्वप्रकाशता-सिद्धिः ।

उक्तञ्च— "असंवित्तौ वित्तेर्न खलु तदुपाधिव्यवहृतिः, प्रतीतावन्यस्यां प्रसभमनवस्था प्रसरती"ति । एवञ्चेदमप्यनवकाशं चोद्यम् । यदाहुरेके— स्वात्मनि वृत्तिविरोधान्न स्वसंवेदनं विज्ञानमिति व्याप्त्यादिवेदनवत् प्रदीपवच्चोपपत्तेः । नच तत्र स्वपरसङ्गतकार्यानुकूलात् स्वभावभेदादन्या स्वात्मनि वृत्तिरस्ति या विरुद्ध्येतेति चेत्, प्रकृतेऽपि तर्हि स्वपरव्यवहारानुकूलात् स्वभावभेदादन्या न काचन स्वस्कन्धारोहकल्पा वृत्तिर्या विरुद्ध्येतेति सर्वं समञ्जसम् । एतेनाऽप्रतीतोऽन्यश्च वेदनत्वादिति प्राचामाचार्याणां हेतुः समर्थितः । प्रतिपक्षे बाधकदर्शनात् । एतदर्थमेव चाभिमतविशेषपुरस्कारेणैव तत् प्रदर्शितम् । तस्मात् स्वसंवेदनसंवेदनाभेदादप्यात्मा स्वप्रकाश इति सिद्धम् ।

एतादृशस्य सर्वस्याभिलषितस्य साधनायोक्तं "विज्ञानतनुम्" इति । कथं पुनर्विनाशिनो विज्ञानस्य नित्यात्मस्वभावता सम्भाविनी ? न । विज्ञानस्यापि विनाशासिद्धेः । नीलादिसंवेदनसमसमयपीतादिसंवेदनादर्शनात् । विनाशप्रतीत्या तत्सिद्धिरितिचेन्न । पीतादेस्तदुपहितस्यैव च संवेदनस्यादर्शनाद् विनाशप्रतीतेरपि घटाकाशादिवदौपाधिकगोचरत्वेनैवोपपत्तेः । आजानतश्च संवेदने भेदानुपलम्भादभेदासिद्धेः । प्रयोगश्च— संवित् स्वान्तर्गतभेदशून्या । भेदोपाधिमन्तरेणाविभाव्यमानभेदत्वादाकाशवदिति ।

एवञ्चाभेदससिद्धौ संवित्स्वाभाव्यसम्भवात् ।
आत्मनः स्वप्रकाशत्वमनिवार्यमिति स्थितम् ॥

तथाच कुतः प्रकृतहेतोरनैकान्तिकशङ्कावकाशः । तथापि स्वप्रकाशत्वाद्वितीयत्वादिसाधकस्य प्रमाणस्य तद्धृत्यात्मन्यपि प्रवृत्तेरवर्जनीयं तस्यापि दृश्यत्वमिति कथं नानैकान्तिकं दृश्यत्वमितिचेत्। अहो कथं विस्मरणशीलता देवानांप्रियस्य ।
न हि दर्शनप्रतियोगितामात्रलक्षणं दृश्यत्वे हेतुः, अपि तु स्वव्यवहारे स्वातिरिक्तस्वदर्शनापेक्षानियतिरित्यवोचाम । नचौपाधिकात्मविकल्पे तदुपनायकप्रमाणापेक्षायामपि स्वरूपमात्रव्यवहृतौ तदपेक्षाऽस्तीति कुतो यथोक्तहेतोरनैकान्तिकत्वावकाशः ? । विशिष्टस्फुर-

णेऽपि च स्वरूपमदृश्यमित्युदितमन्यत्र, नेह विपश्चितम् । संग्रहाधिकारात् । अन्यथाऽपि च साध्यस्य समर्थितत्वादिति ॥

जडता दृश्यताचाऽस्तु सत्यस्यैवेति चेन्मतम् ।
मैवं संवित्त्यसम्बन्धे धर्म्यसिद्धिप्रसक्तितः ॥

यस्य हि जडता दृश्यता च निरूपणीया तस्य धर्मिण एवासिद्धौ कस्य ते निरूप्येताम् । नच तदसम्बद्धसंविदा सिद्धं नाम स्यात् । नो खलु तत्स्वयं सिद्ध्येत् । जडत्वादेव । नापि संविदा । तया सह सम्बन्धानिरूपणात् । न हि संवित्संवेद्ययोरन्तर्बहिर्भावेन प्रकाशमानयोः संयोगादिः सम्भवेत् । विषयविषयिभावोऽपि सम्बन्धो भवन्नतीतादौ कथं भवेत् । न ह्यसति सम्बन्धिनि सम्बन्धो नाम भवेत् । नचातीताद्यपि न संविदितम् । नच संविदसंसृष्टं संविदितं चेति प्रयुज्यते । अतिप्रसङ्गात् । हेतुहेतुमद्भावश्चानागतादावसम्भवी सव्यभिचारश्च चक्षुरादिभिः । एतेनैकान्तःकरणसंक्रान्तावस्थैव सम्बन्ध इति निरस्तम् । असतोऽतीतादेस्तत्त्वतः संक्रमायोगात्, सत्त्वे वातीतत्वानुपपत्तेः । संविदश्चासङ्गाया अप्रतिसंक्रमत्वात् । अन्तःकरणस्य तच्छायया तत्र संक्रमणमिति चेत् । अथ कथं तच्छायता नाम । न तावदात्मनस्तादात्म्यं तात्त्विकं, विरोधात् । अतात्त्विके तु तादात्म्ये संसर्गे वा न परमार्थतो दृश्यं दृष्टं स्यात् । असत्यत्वे तु दृश्यस्य गगनगन्धर्वनगरयोराधाराधेयभाव इव संवित्संवेद्ययोरप्यलीक एव सम्बन्धो भविष्यति । तद्वशाच्च तत्संविदितं भवेद् गन्धर्वनगरवदेवेति सर्वमवदातम् ।

एतदप्युदितम्— "असत्यभेदम्" इति । भिद्यत इति भेदः प्रपञ्चः । असत्यो भेदो यस्मिंस्तदसत्यभेदमित्यर्थः ।

अथैवमपि प्रपञ्चस्य मिथ्यात्वे तदन्तःपातिन्याः श्रुतेरपि तथात्वात् कथं सा ब्रह्मणि प्रमाणं भवेत् ? । नायं दोषः । मिथ्याभूतस्यापि प्रतिबिम्बस्य सत्यबिम्बबोधकत्वेन प्रामाण्यदर्शनात् । स्वप्नकामिन्याश्च शुभसूचकत्वेन तथाभावात् ।

पठन्ति हि स्वप्नाध्यायविदः—

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने इति ॥

पारमर्षं चात्र सूत्रमुदाहरणीयम्, सूचकश्च हि श्रुतेराचक्षते

च तद्विदं इति । नच वचनीयं तत्रापि प्रतिबिम्बादिज्ञानं सत्यमेव बिम्बादिज्ञानजनकतया प्रमाणं, न त्वलीको विषय इति । विज्ञानमात्रस्यानवच्छिन्नस्यातिप्रसङ्गित्वाद्, विषयावच्छिन्नस्य च प्रमाणतायां तस्याप्यवर्जनीयत्वात् प्रामाण्यस्य । एतेन प्रमाणोपपत्त्यनुपत्त्योरद्वैतानुपपत्तिरित्यपास्तम् । अलीकेनैव प्रमाणेन तदुपपादनादित्यलमतिप्रसङ्गेन ।

यस्त्वेवमपि शब्दानां सङ्गतिग्रहणसमये कार्यान्वयपरतयैव तद्ग्रहादसति कार्यान्वये न सम्भवति ब्रह्मणि मुख्यया वृत्त्या प्रामाण्यम् । नच लोकवदत्र लक्षणाश्रयणे पुरुषविवक्षानुगतिर्नाम कारणमस्ति । तस्मात् प्रतिपत्तिविधिनिष्ठमेव वेदान्तानामपि प्रामाण्यमिति मन्यते।तत्प्रतिबोधनायेदं प्रयुज्यते।विवादाध्यासितानि पदानि न कार्यान्वितस्वार्थनियतसामर्थ्यानि । पदत्वात् । कार्यपदवदिति । नच साध्यविकलो दृष्टान्त. । एकस्मिन् वाक्ये कृत्युद्देश्यतालक्षणकार्यद्वयासम्भवेन कार्यपदस्य तादृक्कार्यान्तरान्वितस्वार्थगोचरताऽसम्भवात् साध्यमात्रस्य च भावार्थादेस्तत्त्वेनानङ्गीकारात् । विपर्यये तु योग्येतरान्वितस्वार्थमात्रस्य सर्वपदसामर्थ्यप्रयोजकतायां सम्भवन्त्यां कार्यपदातिरिक्तानां कार्यान्वितस्वार्थे सामर्थ्ये, कार्यपदस्य तु स्वरूपेऽन्यान्विते वेति प्रयोजकद्वैविध्याङ्गीकारे गौरवप्रसङ्गो बाधक उन्नेयः । यद्वा । कार्यं न समस्तपदसामर्थ्यप्रतियोगि । अन्वयव्यतिरेकित्वात् । पदार्थान्तरवत् । अत्रापि सत्यसति च कार्ये योग्यतामात्रेण परस्पर पदार्थानामन्वयोपपत्तौ कार्यस्यापि समस्तपदसामर्थ्यप्रतियोगिताकल्पने गौरवमेव दूषणं स्यात् ।

यद्वा विवादाध्यासितः, शब्दव्युत्पत्तिगोचरः । प्रमेयत्वादुभयाभिमतप्रमेयवत् । विपर्यये तु व्युत्पत्तिदशायां योग्यान्वितस्वार्थे पदसामर्थ्यमङ्गीकृत्य कार्यस्यापि तत्र दर्शनमात्रेण योग्यकार्यान्वित इति प्रयोजकोपादाने भावार्थरूपस्यैव च कार्यस्यान्वयिनस्तदा दर्शनात् । योग्यभावार्थरूपकार्यान्वयप्रयोजकमुपादेयं स्यात् । तथाच वेदे भावार्थातिरिक्तनियोगकार्यान्वयो न स्यादिति दूषणम् । एवं स्थिते, सिद्धेऽप्यर्थे प्रामाण्याय प्रयुज्यते–विवादाध्यासितो मुख्यया वृत्त्या शब्दप्रमेयः । प्रमेयत्वादुभयाभिमतप्रमेयवत् । विपर्यये तु तत्र तत्र दृश्यमानोपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिङ्ग-

भङ्गप्रसङ्गः। पूर्वोक्तनीत्या मुख्यत्वसम्भवे लक्षणाश्रयणं च बाधकमिति। एतच्च पराभिमतं कार्यमङ्गीकृत्य अवोचाम, वस्तुतस्तु तदनङ्गीकारेऽपि प्रयुज्यते। वेदः सिद्ध एवार्थे प्रमाणं, प्रमाणत्वात्। चक्षुर्वत्। पराभिमतकार्यविपरीतश्च सिद्धोऽर्थो विवक्षितो, न तु निष्पन्नादिः। तथात्र भविष्यदनुमानेन नानैकान्तिकत्वं, नापि विधिवाक्येन बाधितविषयत्वम्। तत्रापि प्रयत्नपरतन्त्रश्रेयःसाधनविशेषात्मनो वाक्यार्थस्याभ्युपगमात्। विपर्यये तु पराभिमतकार्यस्येन्द्रियासङ्गतेर्लिङ्गाद्यभावाच्चाऽसिद्धौ तत्र सङ्गतिग्रहणानुपपत्तेरगृहीतसङ्गतिकानां पदानामपि बोधकतानुपपत्तिर्बाधिका। नच ममेदं कर्तव्यमिति ज्ञानादेव तत्सिद्धिरिति वाच्यम्। चिकीर्षाया एव केवलमेव प्रतिभासनात्। तदतिरेकिण. प्रमाणविज्ञातस्य एवंविधस्य सद्भावे प्रमाणाभावात् तत. प्रमेयभेदासिद्धेः। चिकीर्षायाश्च प्रयत्नपरतन्त्रश्रेयःसाधनतावबोधादेव लौकिककार्यज्ञानकारणभावेनाभ्युगमादुत्पत्त्युपपत्तौ तदर्थमपि कार्यज्ञानकल्पनानुपपत्तेः। कृतियोग्यतामात्रस्य तु कार्यस्य कृत्यन्वयव्यतिरेकावसेयस्यानिष्टादावपि सम्भवेनाप्रवर्त्तकत्वाल्लिङाद्यर्थतानुपपत्ति.। कृत्युद्देश्यताऽपि तु तदतिरेकिणी फलाद्यधिकरणा मनसाऽवसीयते एवेत्यपि प्रलापमात्रम्। तस्या उभयसिद्धचिकीर्षागोचरतामात्ररूपाया एवानुभवात्। विपर्यये प्रमाणस्यादर्शनात्। वाङ्मात्रस्य च विप्रतिपन्नं प्रत्यप्रतिपादकत्वात्। तस्मात् पराभिमतकार्यस्यैवाप्रमाणकत्वात्तत्र सङ्गतिग्रहणानुपपत्तेर्न कर्मभागोऽपि तद्बोधकः, किं पुनर्ब्रह्मभाग इति सिद्धम्।

यत्तु वेदान्तानामपि प्रतिपत्तिविधिनिष्ठत्वमिति। तदप्यसत्। ब्रह्मणि हि प्रतिपत्तयस्तिस्रः सम्भवेयुः शाब्दी, भावनात्मिका, साक्षात्काररूपा चेति। तत्र शाब्द्यास्तावच्छब्दादेवोत्पत्तौ विधिवैयर्थ्यमनुत्पत्तौ चाशक्यत्वमविज्ञानस्वरूपरूपत्वात्। भावनायास्तु भाव्यसाक्षात्कारहेतुभावस्यान्वयव्यतिरेकगम्यत्वादनर्थक एवात्रापि विधिः। साक्षात्काररूपा पुनः परमानन्दगोचरभावात् फलमेवेति कथं तत्रापि विधेरवकाशः। स्वर्गवत्। किञ्च यत्पुरुषप्रयत्नपरतन्त्रं कर्तुमकर्तुमन्यथा कर्तुं शक्यं, तद्विधेय, यथा ज्योतिष्टोम.। प्रतिपत्तिस्तु प्रमाणादिमात्रपरतन्त्रा न तादृगिति कथं सा विधीये-

त । तस्मादात्मा द्रष्टव्य इत्यादयो विधिस्वरूपा वेदान्ते भासमानाः शब्दाः कथञ्चिदर्हार्थत्वेन, विष्णुरूपांशु यष्टव्य इत्यादिवदर्थवादवत्तथा व्याख्येयाः । अन्यथोपक्रमोपसंहारगतासिद्धात्मतत्त्वाख्यानैकरूप्यविरोधादिति ॥

तस्माददैतविज्ञानसुखरूपे प्रमाणताम् ।
ब्रह्मणि प्रतिपद्यन्ते वेदान्ता इति साम्प्रतम् ॥

अथैवमनेकपदार्थसम्भेदात्मनि वाक्यार्थे कथमद्वैतपरमागमवाक्यं प्रमाणं स्याद्, अद्वैतभेदयोरत्यन्तविरोधात् । अत्रोच्यते । द्विविधं तावद्वेदान्तवाक्यम् । एकं पदार्थनिष्ठमपरं तस्यात्मनाद्वात्म्यरूपवाक्यार्थनिष्ठमिति । तत्राद्यस्याखण्डार्थतायामनुमानमुच्यते— विज्ञानादिवाक्यम्, अखण्डार्थनिष्ठं, लक्षणवाक्यत्वात् । पृथुबुध्नोदराकारो घट इत्यादिवाक्यवत् । नच साध्यविकलो दृष्टान्तः स्यात् । घटप्रातिपदिकार्थमात्रं पृच्छन्तं प्रति तावत एव प्रतिपाद्यत्वात् । अन्यथा आम्रान् पृष्टः कोविदारानाचष्ट इत्यनवधेयवचनत्वप्रसङ्गात् । नच पृथुत्वादिकं घटपदार्थ, किन्तु तद्धर्म । पृथुर्व घटस्येत्यादिप्रयोगदर्शनात् । तथाप्यनिष्टव्यवच्छेदेनैक एव घटप्रातिपदिकार्थः पृथुत्वादिभिरनेकैरुपलक्षणात्मभिः पदार्थैरुपलक्षणीय इत्यखण्डार्थतासिद्धिः । एवं विज्ञानानन्दादिवाक्येऽपि विज्ञानत्वादिसामान्यान्यऽनिष्टाऽविज्ञानादिव्यवच्छेदेन तदाधाररूपामेकामेवानन्दव्यक्तिं ब्रह्मत्वेन लक्षयन्तीति । विपक्षे त्वत्रापि लिलक्षयिषिताद्वितीयार्थासिद्धिप्रसक्तिर्बाधिका । द्वितीयेऽप्यखण्डार्थत्वसिद्ध्यर्थमुच्यते तत्त्वमसिवाक्यमखण्डार्थनिष्ठम् अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात् । सोऽयं देवदत्त इत्यादिवाक्यवत् । नच साध्यविकलो दृष्टान्तः । तदेतद्देशकालोपलक्षणीयस्यैकस्यैव देवदत्तस्य स्वयंप्रत्यभिज्ञातस्य विभेदविभ्रमनिरासेन परस्मै प्रतिपाद्यमानत्वात् । अपरस्य तत्र कस्याप्यंशस्य विधित्सितस्यासम्भवात् । एकत्वस्यापि वस्तुसहभाविनः प्रागेव सिद्धत्वात् आरोपितभेदाभावमात्रस्य त्वतिरेकेण प्रतिभासेऽपि विरोधाभावाद् भावांश एव विभागानभ्युपगमात् । तत्त्वमसिवाक्येऽप्यनयैव दिशाऽखण्डार्थनाऽभ्युपगमादिति । विपर्यये त्वत्रापि विवक्षितार्थासिद्धिर्दूषणमिति सर्वं निर्मलम् ॥

एवमानन्दरूपोऽयं विज्ञानत्वात् स्वयं प्रभुः ।
विष्णुरात्मात्मनः श्रुत्या विमोक्षाय निरूप्यते ॥

कः पुनरयं मोक्षो नाम नित्यनिरतिशयसुखाभिव्यक्त्यात्मा निःशेषदुःखोच्छेदः । स चाविद्यास्तमय एव । न ह्यविद्यातोऽन्या स्वसंवेदनस्य सुखस्यानभिव्यक्तिर्नाम । साऽपि कथमनभिव्यक्तिरितिचेत् । अभिव्यक्तिकार्यस्यास्ति प्रकाशत इति व्यवहारस्य प्रतिबन्धेन तद्विरुद्धस्य, नास्ति न प्रकाशत इति व्यवहारस्य कारणत्वात् कार्यविरोधं पुरस्कृत्य पर्युदासेन, न तु प्रसज्य प्रतिषेधाभिप्रायेण । स्वसंवेदनस्य नित्यस्य तदसम्भवात् । एवं दुःखमपि स्वात्मनि न स्वाभाविकं भवति । आनन्दस्वभावविरोधात् । नाप्यागन्तुकम् । वास्तवम् । अद्वैते कारणान्तरासम्भवात् । द्वितीयाद्वै भयं भवतीति श्रुतेः । कार्याणां चाऽऽगन्तुकानां तदधीनत्वनियमात् । तस्मादाध्यात्मिकादिदुःखत्रयमप्यविद्यात्मकमेव । नच कारणनिवृत्तिमन्तरेणाऽपि कार्यस्यात्यन्तिकी निवृत्तिर्भवति । तस्मादविद्यानिवृत्तिरेवानतिशयसुखाभिव्यक्तिरशेषानर्थनिवृत्तिश्चेति गीयते । अनभिव्यक्तिपदवेदनीयाविद्यानिरासात्मकत्वादशेषानर्थनिवर्त्तकतदुपादाननिवृत्यात्मकत्वाच्च। भवत्वेवमविद्यास्तमयो मोक्षः, भवतु चायमशेषदुःखोच्छेदरूपत्वात्पुरुषार्थः, सुखस्वभाववस्त्वत्र कथं पुरुषार्थः स्यात् । आत्मातिरेकिण एव तस्य तथादर्शनात्, न प्रतीचः प्रकाशमानस्यानतीतस्य तथाभावात्, अतिरेकस्याप्रयोजकत्वात्, अन्यथा परसुखस्यापि पुमर्थत्वप्रसङ्गात् । आत्माऽसमवेतं तत्तथेति चेत् न । अतीतस्यापि तस्य तथात्वापत्तेः । अनतीतमात्मसमवेतं तथेतिचेत् न । समवायस्य सम्बद्धासम्बद्धविकल्पासहत्वेन दुर्निरूपत्वात्, सम्बद्धत्वे प्रत्यक्षपराहतसम्बन्धपरम्पराप्रसङ्गात् । सम्बन्धिनोर्विभक्तयोरवच्छेदेन प्रत्यक्षयोः सम्बन्धस्याप्रत्यक्षतानुपपत्तेः । असम्बद्धत्वे च तयोरयमिति व्यवस्थानुपपत्तेः, निरूप्यनिरूपकभावस्य च सम्बन्धान्तरगर्भत्वात्, अन्यथा सौधसितिम्नोऽपि परिज्ञाततालफलकालिम्ना निरूपणापातात्, नाशस्यापि नाशिनां तदीयतयाध्यस्तस्यैव निरूपणमित्यव्यभिचारात् । तस्मात्प्रत्यक्षप्रकाशमानमनतीतं सुखं पुरुषार्थ इति वाच्यं, वर्त्तमानेऽपि प्रमानुवृत्तेरनागतस्य चाध्यर्यमानतया पुरुषार्थत्वात् एतावता चोपपत्तौ किमतिरेकग्रहणेन दर्शनक-

थन्तासम्बोधमन्तरेण च दृष्टत्वादेव तदाश्रयणे दुःखानुषङ्गोऽपि सर्वपुरुषार्थानुबन्धी तत्त्वे प्रयोजकः स्यात् । ततश्च न जात्वयं मोक्षाय प्रवर्त्तेत । अत्यल्पमिदमुच्यते । स्वर्गार्थमप्ययं न प्रवर्त्तेत । ऐहिकस्यैव पुरुषार्थत्वदर्शनात्, आमुष्मिकं सुखं भवदप्यपुरुषार्थो न दृश्यत इति चेत्, प्रत्यक्षप्रकाशमानमनतीतं सुखं भवदप्यपुरुषार्थः क दृश्यते येनातिरेकोऽप्यपेक्ष्यते । नत्सिद्धमेतत् । विवादाध्यासितः पुरुषार्थः प्रत्यक्षप्रकाशमानानतीतानन्दत्वात्, तादृग्विषयानन्दवदिति । तस्मादानन्दसङ्कीर्तनमप्यत्र सोपयोगमेव, अन्यथा सकलदुःखोच्छेदवत्सकलसुखोच्छेदस्यापि सम्भवादप्रवृत्तिरेवात्र प्रेक्षावतां भवेत् । अत्यन्तदुःखोद्विग्नानां भवेदेवात्र प्रवृत्तिर्मरण इव पृथग्जनानामिति चेत् । मैवम् । दृष्टान्तवैषम्यात्, तीव्रपापरोगग्रस्तां दुःखमयीमिव मूर्त्तिमुद्वहन्तः सुखलेशमप्यलभमानास्तथा प्रवर्त्तन्तां नाम, संसारिणः पुनरल्पदुःखानुविद्धमनेकविधमपि हैरण्यगर्भाद्यानन्दं लभमानाः कथं तथाविधविषये मोक्षे प्रवर्त्तेरन् । न ह्यजीर्णभयादाहारपरित्यागो, भिक्षुकभयाद्वा स्थाल्यनधिश्रयणं, यूकाभयाद्वा परिधानविमोकः शीतार्तस्येति ।

तस्मात्—

अविद्यास्तमयो मोक्षो नित्यानन्दप्रतीतितः ।
निःशेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः ॥

स चायं केवलज्ञानसाध्यः स्यात्, अविद्यास्तमयत्वात् । रज्ज्वविद्यास्तमयवदिति । न हि रज्जुसाक्षात्कारेऽपि तदविद्यास्तमयः कदाचिद्विलम्बते येन तत्र सहकार्यन्तरापेक्षाऽभ्युपेयेत । विपर्यये तु यस्मात्राद् यज्जातीयं दृष्टं तज्जातीयस्यैव कदाचित्तदतिरिक्तादप्युपपत्तौ तस्य कारणलक्षणं व्याहन्येत । व्यतिरेकासम्भवात् । तस्माद‌द्वैतात्मसाक्षात्कार एव मोक्षकारणम् ।

अत एवोक्तं, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति, तमेव विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यत इति च, ज्ञानादेव तु कैवल्यं, प्राप्यते येन मुच्यत इति च । कर्मणां पुनरधिष्ठाननिकटोपसर्पणादिवत्परम्परयैवोपयोगः । तथा च श्रूयते तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति । विविदिषासाधनत्वेन कर्मणामुपयोगो, न तु साक्षान्मोक्ष इ-

त्यर्थः। अद्वैत जिगामिषतीतिवद् व्याख्यानेऽपि वेदनसाधनतैव स्याद्, न तु मोक्षसाधनता। स्मर्यते च–

धर्मात् सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते इति ।
कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत इति ॥
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यत इति च ॥

निषिध्यते च साक्षात्कारणभावः कर्मणाम्—

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति। एके संसारविरक्ता अमृतत्वमानशुः। केन कर्मादित्यागेन, न तु कर्मादिनेति योजना। न त्वेके त्यागेन, अपरे त्वन्यथा यान्ति "नान्यत्र सर्वसंत्यागान्मोक्षं विन्दन्ति मानवाः" इत्यादिविरोधप्रसङ्गात्। त्यागस्य च विज्ञानद्वारेणैव मोक्षकारणताऽभिमतेति, ज्ञानादेव तु कैवल्यमित्यादेरविरोध एव। अत एवोक्तम्—

अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ।
ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूय इति।

केवलस्य तु त्यागस्य ब्रह्मलोकप्राप्तिहेतुतैव । संन्यासाद् ब्रह्मणः स्थानमित्यादिवचनादवसीयते ॥

ये तु विज्ञानकर्मणोः समुच्चयाय पठन्ति "अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते, ततो भूय एव ते तमो य उ विद्यायां रताः। विद्यां चाविद्यां च यस्तद्वेदोभयं सह, अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत इति। तदप्येकैकनिन्दयाऽपि क्रमसमुच्चयपरमेव। अविद्यया मृत्युं तीर्त्वा पश्चाद्विद्ययाऽमृतमश्नुत इति पौर्वापर्यश्रवणात्।

सह वेदेति वेदन एव सहभावश्रवणात् । केवलविद्यानिन्दा तु प्राचीनाऽपरिपक्वविद्याविषया भविष्यति । अत्रैषाऽक्षरयोजना—अन्धन्तमः संसारं प्रविशन्ति येऽविद्यामूलत्वाद्विद्याविपरीतत्वाद्वाऽविद्यां कर्मोपासते आद्रियन्ते अनुतिष्ठन्तीत्यर्थः। ततस्तस्मादपि तमसो भूय इव बहुतरमिव ते तमः प्रविशन्ति, य उ ये तु विद्यायामपरिपक्वात्मज्ञानलक्षणायां रता आसक्तास्तन्मात्रेण कृतकृत्यम्मन्या यथा स्वविहिताशेषकर्मत्यागिन इत्यर्थः। एतदुक्तं भवति विद्यायाः परि-

पाकात् प्रागेव यथा स्वविहित नित्यादिकर्म त्यजन्ति तेषामुपात्तदुरित-क्षयाभावाद्विहिताकरणनिमित्तस्य च पाप्मनः प्रत्यहमुपचीयमान-त्वादशुद्धान्तःकरणानां विद्यापरिपाकस्य शुभविषयप्राप्तेरपि कार-णाभावनासम्भवादात्यन्तिक एवाधः पातः स्यादिति । कस्तर्ह्यमृतत्वं भजतीत्यत आह—

विद्यां च परिपक्वात्मज्ञानलक्षणामविद्यां च कर्मलक्षणां तदु-भयं यः सहापायोपेयभावेन वेद जानाति, असावविद्यया कर्मणा मृ-त्युं विद्योत्पत्तिप्रतिबन्धकं पापं तीर्त्वा विद्यया परिपक्वब्रह्मसाक्षात्कार-लक्षणया अमृतं निर्वाणमश्नुत इति। तदिदमत्र तत्त्वम्।आत्मविद्यापरि-पाकात् प्राग्यथास्वं विहितं कर्मानुष्ठेयं, विद्या तु परिपक्वा कर्मनिरपे-क्षैव मोक्षं साधयिष्यतीति । यत्तु "तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने" इत्यादि।अत्रापि साक्षाज्ज्ञानं तद्द्वारेण च कर्मेति गमयित-व्यम् । अन्यथा, ज्ञानादेव तु कैवल्यं, नान्यः पन्था विद्यते इत्यादि-विरोधप्रसङ्गात् ।

यत्पुनः—

यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम् ।

एवं तपश्च विद्या च संयुक्तं भेषजं महद् इत्याहत्य समुच्चय-परं प्रतिभाति । तत्सर्वं परिपक्वात्मविद्याव्यतिरिक्ताया विद्यायाः क-र्मणां च तदुत्पादे समुच्चयं प्रतिपादयतीत्यभ्युपेयम् ।

तथाह्युक्तम्—

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।

ज्ञानं च विमलीकुर्वन्नभ्यासेन तु पाचयेत् ॥

अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः, इति । यत्तु, कर्मणै-व हि संसिद्धिमास्थिता जनकादय इति । तत्र संसिद्धिस्तत्त्वावबोध एव भविष्यति । सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे इति-प्राप्तव्यस्य पृथगभिधानादिति सकलमनाकुलम् ।

तस्मात्,

अविद्यास्तमयो मोक्षो भवेद्विद्यैकहेतुकः ।

युक्त्या श्रुतिस्मृतिभ्यां च स्वीकर्तव्यो मनीषिभिः ॥

सदादिभ्यश्च भिन्नोऽस्य प्रकारः परिशेषतः ।

यथा समुपपद्येत तथैव परिकल्पताम् ॥

प्रमाणमाला गुणसङ्गतेयमपेतदोषा विहिताऽऽदरेण।
प्रसाधयन्तीपरमं पुमांसं प्रकल्पतां प्रार्थितसिद्धये वः ॥ १ ॥
आत्मस्वभावमधिकृत्य मुकुन्दमेषा
मानाभिधाननवरत्नमनोज्ञमाला ॥
आनन्दबोधयतिना निधिना गुणानाम्
आनन्दहेतुरकलङ्कधियां व्यधायि ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दबोधाचार्य-
कृतं प्रमाणमालाख्यं प्रकरणम् ॥ शुभम् ॥



श्रीगणेशाय नमः ।

# न्यायदीपावलिः ।

श्रीमदानन्दबोधभट्टारकसुधीनिर्मिता ।



जगदङ्कुरकन्दाय विशदानन्दमूर्त्तये, ॥
गलिताखिलभेदाय नमः शान्ताय विष्णवे ॥ १ ॥
दुस्तर्कतिमिरश्रेणीविदारणविशारदाम् ॥
रुचिरां न्यायदीपानामावलिं रचयाम्यहम् ॥ २ ॥

विवादपदं मिथ्या, दृश्यत्वात् । यदित्थं तत्तथा । यथोभयवाद्यविवादपदं रजतम् । तथैतत्, ततस्तथा । विवादपदस्यानेकरूपत्वेऽपि साध्यविशेषोपादानेन तद्विशेषसिद्धिः । सत्यविवेकस्य मिथ्याभावस्य साध्यत्वान्नाप्रसिद्धविशेषणता, नाऽपसिद्धन्तोऽपि, सत्यमबाध्यं, बाध्यं मिथ्येति तद्विवेकः । प्रतिपन्ने च धर्मिणि न्यायप्रवृत्तेः प्रमाणप्रतिपन्न इत्यसमर्थविशेषणत्वाद्, नाप्रसिद्धविशेष्यतापि । एतच्चाश्रयासिद्धिनिरासे निपुणतरं निरूपयिष्यते । नच प्रमाणविरुद्धः प्रतिज्ञातार्थ, इति कालातीतोद्धारे । नापि हेतुरसिद्धः । दृश्यत्वस्य पक्षवृत्तित्वनिश्चयात् । प्रमाणदृश्यत्वे बाधासिद्धिरिति चेन्न । साधारणप्रयुक्ते हेतौ विशेषविकल्पेन निराकरणे सर्वसाधारणप्रसङ्गात् । तथाहि धूमाद्धूमध्वजसाधनेऽप्यनेतद्देशकालसंलग्नो धूमो हेतुः, किं वा एतद्देशकालसंलग्नो धूमो हेतुःअसिद्धिराद्ये । द्वितीये साधनशून्यं निदर्शनमिति पर्यनुयोगस्याविवक्षितविशेषधूममात्रं हेतुरित्येव परिहारः, स च समः प्रकृतेऽपि । नच प्रमाणागोचरो धर्मीत्याश्रयासिद्धिरिति साम्प्रतम् । प्रतीतिगोचरमात्रस्याश्रयतोपपत्तौ प्रमाणविशेषणस्यासमर्थत्वात्।सुरभितासाधने तु गगनारविन्दस्यानाश्रयता न प्रमाणविरहादपि त्वनुपाख्यत्वात्, तद्विलक्षणता तु प्रकृते प्रतीतिसिद्धा ।नच स्वाश्रयघातितया दृश्यत्वहेतुराश्रयासिद्धिमात्मनः स्वयमेवासादयतीतिसाम्प्रतम् । यदि त्वा-

श्चर्यं निरुपाख्यतापादनमाश्रयघातिता तन्न । अनभ्युपगमात् । अथ प्रतिपन्नस्वभावानुपमर्देन सत्यविवेकापरपर्यायधर्मसाधने कथमाश्रयाभावः । निरुपाख्यत्वेऽप्यव्यादेवाश्रयतोपपत्तेर्निषेधकहेतोस्तु निषेधात्मनो निरुपाख्यमप्याश्रय एव । यथा हि वन्ध्यासुतो वक्ता न भवति । अचेतनत्वात् पाषाणवत् । नावस्तुनि प्रमाणाविषयत्वेन विधिनिषेधयोः शक्यक्रियत्वमिति चेन्न । विधिव्यवहारविरहेऽपि तत्र निषेधव्यवहारदर्शनात् । तथाच वस्तुवदवस्तुन्यपि नासौ विसंवादी। यद्यवस्तुनि नायमस्तीत्यभिदधान, तत्र कुत एतदिति पर्यनुयुक्तो हेतुं कञ्चिदुपाददीत । तदा नाश्रयासिद्धिपरिहारः । मूकीभावे तु न वादिनः प्रतिस्पर्धी ।

किञ्च नास्त्येवावस्तुनि निषेधव्यवहार इति वदन्नेवावस्तुनि निषेधव्यवहारमङ्गीकुरुत । न ह्यन्यो निषेधादर्थो नञः शक्यो निरूपयितुम् । विधिनिषेधव्यवहाराऽभावे चावस्तुनि मूकताप्रसङ्गः। प्रमाणाविषयत्वेन च वस्तुनि विधिनिषेधयोरशक्यक्रियतेत्युक्तम् । तत्र प्रमाणाविषयत्वं हेतुर्यद्यवस्तुनि वर्तेत कथमाश्रयासिद्धिर्न भवेत् । यदि न वर्तेत कथमयं व्यवहारमत्र निषेधेत् । प्रमाणाविषयत्वावृत्तौ च प्रमाणविषयत्वापातः।नच विधिनिषेधाववधूयापरः सम्भवी प्रकारः तदुक्तम् ।

विधानं प्रतिषेधं च मुक्त्वा शाब्दोऽस्ति नापरः ।
व्यवहारः स चासत्सु नेति प्राप्ताऽत्र मूकतेति ॥

यदपि मतं, न प्रमाणबुद्ध्या प्रमाणाविषयत्वाद्युपन्यासो येन हेतोराश्रयाऽसिद्धिदोषावकाशः, किन्त्वचेतनत्वादिकमप्रमाणमुपन्यस्य परं व्यामोहयन्तं भवन्तं व्यामोहयितुमेवाप्रामाणिको जल्पकथायां व्यवहारः । तदुक्तम् " अहृदयवाचामहृदया एव प्रतिवाचो भवन्ति " इति । वादकथायां प्रामाणिकव्यवहारमपेक्ष्याभिहिता मूकतैवोचितेति । तदप्यसत् । तथाहि परं व्यामोहयितुमिति कोऽर्थः-- परमार्थतो वन्ध्यासुतावक्तृत्वानुमानस्यानिराकरणमिति चेत्, सिद्धं नः समीहितम् । वास्तवनिराकरणं तु नायमप्रामाणिको व्यवहारः । नच जल्पेऽपि सर्वस्याप्रामाणिकाद् व्यवहाराद् व्यामोहः सम्भवी । विमलचेतसो वचनमात्रेणाऽव्यामोहात् । तत्र जल्पेऽपि मूकताप्राप्तेः। अवक्तृत्वानुमाने तु न व्यामोहहेतुरस्माभिराश्रीयते तेन समौ पर्य-

नुयोगपरिहारौ । तदेवमनुपाख्यस्याप्याश्रयतोपपत्तिरिति स्थितम् । किं पुनः सोपाख्यस्यासत्यपि मानसम्बन्धे ॥ नापि भागासिद्ध । पक्षव्यापित्वात् । नाप्यन्यथासिद्धः । निरुपाधित्वात् । नच बाधितत्वमुपाधिः । तस्यैव मिथ्यापदार्थतया साध्यताऽभिधानात् साध्यस्य चानुपाधित्वात् । नापि दोषगम्यत्व, साधनव्यापकत्वात् । तथाभावे चानुपाधित्वात् । इन्धनभेदस्याप्यन्यथा धूमोपाधितापातात् । उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्त. । मिथ्यात्वं मा भूद्, दृश्यत्वं च भविष्यतीति का दोष. । तथाच विपक्षबाधकानुकूलतर्कासम्भवादप्रयोजक इति चेद्, न । सत्यत्वे जडस्य दर्शनानुपपत्त' । न तावत् स्वदृश्यत्वम् । जडताहानेर्वृत्तिविरोधाच्च । नापि स्वातिरिक्तदर्शनदृश्यत्वम् । संसर्गानिरूपणात् । नच दृशिसंसर्गमन्तरेण दृश्यं दृष्टमिति युज्यते । अतिप्रसङ्गात् । संसर्गस्तु न संसर्ग्यतिरेकी । तस्य संसर्गिसंसर्गेऽनवस्थानात् । असंसर्गे तत्संसर्ग इत्यनुपपत्तेः । अनतिरेके वस्तुनी एव न संसर्गो नामाति स्यात् । अतिरेकानतिरेकौ तु विरुद्धौ । संयोगादिविकल्पायोगाच्च । न तावद् दृश्यदर्शनयोः संयोग: । दर्शनस्याऽद्रव्यत्वात् । नापि समवायः । दर्शनस्यात्मैकगुणाभिमतस्य घटादिना तदयोगात् । तादात्म्यमपि द्रवकठिनवद्विरुद्धरूपयोर्जडाजडयोः कथं स्यात् । विषयविषयिभावमपि न तत्त्वतो जानीम । तस्य हि द्रव्यादिष्वन्तर्भावे सामान्यादिभिः सह तत्संवेदनस्य संसर्गो न स्यात् । अनन्तर्भावो योगस्य कृतान्तविरोधी । योऽप्यदृष्टादिवशात् कर्मकारक विषयस्तज्जनितं ज्ञानं विषयीति ब्रूयात्, तस्यापीश्वरज्ञानस्याविषयत्वप्रसङ्गो नित्यत्वात् । अस्मदादिज्ञानस्याप्यतीताद्यर्थैरसंसर्गप्रसङ्ग । नचापरः प्रकारः सम्भवी । सम्भवे वा कथं प्रध्वस्तानागतयोस्तत्सम्भव । नचासितसम्भवो, नास्ति संसर्गी संसर्गश्चास्तीति । नच दृग्दृश्ययोरेकान्त.करणसंक्रान्तिः संसर्ग' । चितेस्तात्त्विकसंक्रमायोगात् । अविक्रियत्वात् । अतात्त्विकसंक्रमेऽलीकसंसर्गप्रसङ्गात् । एवञ्च अतात्त्विकतापत्तिः । दृश्यदृष्टे. । असत्यप्यपरसंसर्गे निरूप्यनिरूपकभावो भवेदिति चेन्न तथा सति सौधसितिम्नोऽपि परिणततालफलकालिम्ना निरूपणप्रसङ्गात् । अभाववदिति चेन्न । अनभ्युपगमात् । न ह्यभावस्याप्यसति संसर्गे तात्त्विकं प्रतियोगिना निरूपणमभ्युपगच्छामः । तस्माच्चिदात्मन एवैकस्याना-

ह्यविद्यावशादविचारितरमणीयोऽयमतदाकारावभास इत्यवदातम् । तदेवं नाप्रयोजक इति स्थितम् ।

नापि विरुद्धः । साध्यविपर्ययाव्याप्तत्वात् । ननु दृश्यता सत्यता व्याप्तेति प्राभाकरः । सत्यम् । तमपि दुरावारमख्यातिनिराकरणनाम्ने निर्भर्त्सयिष्यामः । नाप्यनैकान्तिकः । व्यभिचारासम्भवात् । नचात्मनि सत्येऽपि दृश्यतास्तीति वाच्यम् । तस्याऽपराधीनप्रकाशत्वात् । तदेव कथं, ममेदमनुकूलं प्रतिकूलमिति वा विज्ञानस्यावच्छिन्नप्रकाशत्वेनावच्छेदकात्मप्रकाशनान्तरीयकत्वात् । तस्य च मानसवेदनीयतायां वृत्तिविरोधात्संवित्कर्मतामन्तरेण चाऽपरोक्षत्वस्य संविदधीनप्रकाशताविरोधात् संवेदनवत्स्वसंवेदनतासिद्धेः । विस्तृतमेतदन्यत्र ।

नेह नानेति च प्रतिपत्त्रोपाधौ श्रौतनिषेधात्मनो बाधादविद्यानिवृत्तेरप्यलीकत्वादात्मातिरेके तादात्म्ये तूक्तयुक्तेर्न तयाऽप्यनैकान्तिकत्वम् ।

स्यान्मतं व्यतिरेकासिद्ध्या सन्दिग्धव्यतिरेकोऽयमनैकान्तिकताभेदः । तथाहि न तावन्नरविषाणे व्यतिरेकनिश्चयः । तस्य दृश्यत्वे व्यतिरेकाभावात् । अदृश्यत्वे तदनिश्चयात् । नात्मन्यप्यत एव । अधिकश्च दृश्यत्वेऽपसिद्धान्तः । नचोपाधिविधूननेन व्यतिरेकावगतिः । अदृश्योपाधिविधूननस्याशक्यत्वात् । नच विपक्षे बाधकाद् व्यतिरेकाधिगतिः । स हि भवन्नुपाधिकोटौ, तदायत्तव्यभिचारकोटौ वा भवेत् । अदृश्योपाधावविरोधान्नाग्रिमः कल्पः । नाप्याहत्य व्यभिचारे विरोधानुपलम्भादन्तिमः । सम्बन्धाभाव. सत्यस्य दृश्यतायां बाधक इति चेद्, नैवमपि । स्वदृश्यतोपपत्तेः । तथा सति वृत्तिविरोध इति चेन्न । स्वसंवेदनसंवेदनाश्रयणात् । न हि स्ववृत्तिव्यतिरेकी स्वसंवेदनार्थः । स्वयं च तत्संवेदनं चेत्यङ्गीकारे वेदनान्तरवेद्यताया अविरोधात् । स्वस्य संवेदनमित्याश्रयणे तच्चेत् स्वयं स्वात्मनि वृत्त्यापत्तिः । अन्यच्चेदपराद्धान्तः । स्वसंवेदनं संवेदनमिति च सामानाधिकरण्यानुपपत्तिः । स्वम् आत्मीयं संवेदनं यस्येत्यभ्युपगमे घटस्यापि स्वसंवेदनतापत्तेः । संविद्विशेषणवैयर्थ्यम् । तस्मात् स्वस्य स्वयमेव संवेदनमिति स्वसंवेदनार्थः । तथाच सत्यं स्यात् स्वसंवेदनत्वाद् दृश्यं चेति, न विरोधः । तेन विपक्षे बाधकादपि न

व्यतिरेकोपपत्तिरिति । नैतत् । आत्मनि व्यतिरेकोपपत्तेः । तस्य तु स्वप्रकाशत्वेऽपि व्यतिरेकावच्छिन्नस्य स्यादेतद्दृश्यता । तस्य निरुपाधिरूपमपराधीनप्रकाशं सोपाधिकं तु पराधीनप्रकाशमपि । तदेतदभिप्रेत्योक्तम् । सर्वप्रत्ययवेद्ये वेति । यदि पुनरित्थं स्वयूथ्यो नाङ्गीकुर्यात् कथमसौ दृश्यत्वमेवोपपादयेत् । दृगवच्छिन्नस्य दृश्यत्वात् । अवच्छेदकदृश्यतानुपपत्तौ अवच्छिन्नस्यापि तदनुपपत्तेः । उपाधिनिरासादपि व्यतिरेकोपपत्तिः । उपाधिस्तु दृश्यो दृश्यानुपलम्भनिरसनीयः । यदितरस्तु तर्कनिराकरणीयः, स खलूपाधिकोटौ तदायत्तव्यभिचारकोटौ वाऽऽहत्य प्रवर्त्तमानो विपक्षविरोधी भवेद् व्यभिचारसिद्धेरङ्गम् । अदृश्योपाधौ विरोधः क इति चेत् । समः पर्यनुयोगो, दहनानुमानेऽपि नोपलभ्यमानस्य नियमेनानुपलभ्यो भवत्युपाधिः । तथाच शिष्याचार्ययोरिव प्रत्यासत्तौ अध्ययनम् । धूमदहनयोरपि कदाचिदुपलभ्येतेति चेत्, समः समाधिः । सर्वदाऽनुपलभ्योऽपि शक्यत इतिचेत् पर्यनुयोगसाम्यम् । स यदि स्वरूपमात्रानुबन्धी तथाप्यव्यभिचारसिद्धिः । तत्कृतस्यापि सम्बन्धस्य यावत्साधनभावित्वात् । अथाऽऽगन्तुकः, तत्कारणान्यपि प्रतीयेरन् उपाधिस्तत्कारणानि च सर्वाण्यत्यन्तादृश्यानीति गुर्वीयं कल्पना स्यादिति चेत् । तुल्यमुत्तरमन्यत्राभिनिवेशात् । आहत्यापि व्यभिचारे बाधकं तर्कमवोचाम ।

यत्तु सम्बन्धाभावात् परदृश्यताऽभावेऽपि स्वदृश्यतोपपत्तिरिति तन्न । स्वात्मनि वृत्तिविरोधात् । कथं तर्हि स्वसंवेदनं संवेदनमिति चेत्, स्वप्रतिबद्धव्यवहारे नान्यसंविदपेक्षेति, न तु स्वात्मनि वृत्तिः स्वसंवेदनार्थः । स्वयमेव स्वस्मिन् संवेदनमित्यपि हि स्वसंवेदनव्युत्पादनेन वेदनान्तरव्यावृत्तिर्विवक्षिता । स्वयंदासास्तपस्विन इत्युक्त इव दासान्तरव्यावृत्तिः । नच कुम्भादयो जडस्वभावाः संविदमन्यामपेक्षन्त इति संविदोऽपि तथाभावप्रसङ्गः । सन्तमसविदारणद्वारेण, चक्षुराप्यायनेन वा स्वाप्रकाशने तेषामेव प्रदीपाद्यपेक्षायामपि न यथा प्रदीपादेस्तथाभावस्तथा परेषामपरसंविदपेक्षत्वेऽपि स्वव्यवहारे न संविदस्तथा भाव इति किमनुपपन्नम् । प्रपञ्चितमेतदन्यत्र । तदेवं व्यतिरेकासिद्धेर्न सन्दिग्धानैकान्तिकत्वं, नापि धर्म्यादेः सत्यत्वे तेनैव दृश्यत्वमनैकान्तम् । असत्यत्वे वाऽसाधनाङ्ग

त्वमिति सांप्रतम् । असत्यस्यापि प्रतिबिम्बादेर्बिम्बादिसिद्ध्यङ्गतोपलम्भात् । सत्यमेव विज्ञानं तत्र साधनाङ्गमिति चेन्न । ज्ञेयभेदावच्छिन्नस्य ज्ञानमात्रस्यातिप्रसङ्गित्वात् । तदवच्छिन्नस्य सिद्ध्यङ्गतायां तस्यापि तदङ्गत्वात् । धूमभानस्य साधनाङ्गत्वं नासत्यत्वात्, अपि त्वव्याप्यत्वात्, बहुलोर्ध्वत्वादिवदाभासनिवर्तकस्यापि व्याप्त्युपयोगात् । व्याप्तस्य त्वसत्यस्यापि सत्यबिम्बादिसिद्ध्यङ्गतामवादिष्म । व्याप्तिरप्यसत्या कथमुपयोगिनीति चेत्, सत्यापि कथमिति समानः पर्यनुयोगः । सत्यत्वादेवेति वदतां, मिथ्यात्वादेवेत्युत्तरम् । न दृष्टान्तसिद्धिरिति चेत् । समानमेतत् । व्याप्तिश्च व्याप्यव्यापकनिष्ठा तयोरन्यतराभावेऽपि न सम्भवेत् । व्याप्यं च प्रतिबिम्बाद्यसत्यमिति तन्निष्ठा व्याप्तिरसत्या कथं न दृष्टान्तः । तथा चोष्ट्रलकुटन्यायापातो भवताम् । तथापि स्वयमसत्यं कथमन्यत् साधयतीति चेत् । स्वयं सत्यं वा कथमिति समानम् । तस्य सत्स्वभावत्वादिति चेत् । तुल्यमितरत्रापि । निस्तत्त्वमसत्यमिति चेन्न । सत्यविवेकेन तत्त्वोपपत्तेः । सत्यविवेकान्निस्तत्त्वाङ्गीकारे त्वसत्याविवेकात् सत्यस्यापि तथा भावः स्यात् । मायामरीच्युदकादेश्चानुभवसिद्धेर्निरुपाख्याविवेकस्य नरविषाणादेस्तु निस्तत्त्वस्य तथा प्रतिभासासम्भवात् । तन्नायमनैकान्तिको, नाप्यनध्यवसितः । सपक्षगामित्वात् । नापि कालात्ययापदिष्टः । प्रत्यक्षाद्यनपह्नुतविषयत्वात् । कुम्भादिसत्यताग्राहिणा प्रत्यक्षेणैवापह्नुतविषय इति चेत् । केयं कुम्भादेः सत्यता, या प्रत्यक्षस्य गोचरा सत्तेति चेत् । सामान्यसत्ता चेत् सामान्यादेरसत्यतापातः । स्वरूपसत्ता चेत् स्वरूपाणां परस्परव्यावृत्तेरव्यापकत्वादलक्षणम् । तदनुगामिधर्माङ्गीकरणे सामान्यसत्तावैयर्थ्यम् । तेनैव सद्व्यवहारानुगत्युपपत्तेः । तस्य च सामान्यरूपतापातस्तल्लक्षणोपपत्तेः । निःसामान्यस्य च सामान्यादेरसत्यतापत्तिः । विधिप्रत्ययविषयत्वमिति चेत् स्रक्सर्पादेरपि सत्यतापातस्तदभावस्य चासत्यतापातः । विभ्रमाविभ्रमविपर्ययपातश्च । बाधाभावश्चेदापाततः, सर्वथा वा । नाद्यः । मरीच्युदकादावतिव्याप्तेः । नाप्युत्तरः । तस्यास्मदादिप्रत्यक्षागोचरत्वात् । निरुपाख्यविवेकश्चेद्विरोधः । ननु घट इत्यादिप्रत्ययस्य कीदृग् गोचर इति चेत्, सप्रपञ्चश्चन्द्रमाः, सद्गन्धर्वनगरमित्यादेर्यादृक्तादृगिति संतोष्टव्यम् । नानुमानमपि बाधकम् । प्रबलानुमाना-

ऽनिरूपणात्। आगमस्तु तद्विपर्यये तत्सत्यमित्यवधारणात्। वाचारम्भणं विकारो नामधेयमिति चापरस्य साक्षादसत्यताऽभिधानात्। मृत्तिकेत्येव सत्यं, प्राणा वै सत्यमिति च भिक्षुकपादप्रसारणन्यायेन सांव्यवहारिकसत्यतानुपमर्देनैव, स वा एष पुरुषोऽन्नरसमयोऽन्योऽन्तर आत्मा प्राणमयोऽन्योऽन्तर आत्मा मनोमय इत्यादावान्तरान्तरात्मत्वाभ्युपगमेन बहिर्बहिरनात्मत्वप्रतिपादनवत् कुम्भाद्यलीकभावस्य विवक्षितत्वात्। अन्यथा वाचारम्भणश्रुतेर्दार्ष्टान्तिकाननुगुणत्वप्रसङ्गात्। एवं सोम्य स आदेश इति च दार्ष्टान्तिकव्याकोपप्रसङ्गाच्च। मृत्तिकाव्यतिरेकेण तद्विकाराभाववन्मूलकारणातिरेकिणस्तद्विकारस्यापि मृत्तिकादेरसत्यतायां तात्पर्यात्। प्राणा वै सत्यमन्त्राणि, सत्यस्य सत्यं तेषामेव सत्यमिति चोपक्रमोपसंहारयोः प्राणानां मुख्यसत्यताङ्गीकारे विरोधात्। स्पष्टं च व्यावहारिकसत्यताङ्गीकारे वाक्यस्योपपत्तेः। मायां तु प्रकृतिमिति च मायोपादानत्वेन, नेह नानेति च निषेधेन साक्षाद्विलापनात्। द्वा सुपर्णेत्यादेस्तु अविद्यासिद्धद्वैतानुवादेनान्यत्र तात्पर्योपपत्तेः सत्यत्वाश्रयपातात्। अपुरुषार्थे चाऽतात्पर्यात्। द्वितीयाद्वै भयं भवतीति च स्वयम् अपुरुषार्थताभिधानात्। उपमानस्य तु सादृश्यस्वरूपोपक्षीणस्य सत्यत्वासत्यत्वयोस्ताटस्थ्यात्। अर्थापत्तिरपि बाधिका भवन्ती का भवेत्, संव्यवहारान्यथानुपपत्तिरिति चेन्न। स्वप्नवदुपपत्तेः। तदविसंवादानुपपत्तिरिति चेत्, कोऽयमविसंवादो नाम मानान्तराविरोधश्च। सोऽप्यसिद्धः। श्रुत्यैव विरोधात्। प्रातिभासिकबाधवैधुर्यं चेत्। आपाततस्तत्स्वप्नेऽपि समानम्। सर्वथा त्वशक्यज्ञानमित्युक्तम्। सुखदुःखपर्यन्तता तु स्वप्नेऽपि समाना। आशामोदकोपर्जितमोदकयोरस्येव स्वप्नेऽपि किमद्विलक्षणयम्। रसवीर्यविपाकादिवैषम्यमप्येवम्। एवमसत्यतानुपमर्देनाऽवान्तरभेदोऽस्तु। जागरे का नाम वस्तुक्षतिः। सत्यताविशेष इवाऽसत्यताविशेषेऽपि प्रतिव्यक्तिगम्यता च भेदस्य गोमयपायसीयन्यायेनापाकरणाप्रसङ्गात्। प्रसङ्गे वा जगद्वैचित्र्यस्यैव विलोपप्रसङ्गात्। अद्वैतज्ञानमसत्यादेव प्रमात्रादेर्भेदादुपपन्नम्। असत्यस्य सत्यगोचरज्ञानकारणतोपवर्णिता। वर्णितं च स्वप्नकामिनीसन्दर्शनादेरसत्यस्यैव सत्यार्थसूचकत्वम्। न च विज्ञानस्यापि स्वरूपसत्यता प्रमात्वोपयोगिनी, विषयसत्यता तु तथा। त-

स्या अव्यभिचारित्वात् । अभावोऽपि न भावरूपप्रपञ्चसत्यतागोचरः सम्भवी । प्रपञ्चे धर्मिणि बाधगोचरताऽभावः । सत्यत्वं सम्भवीति चेन्न । आपाततस्तद्भावस्यातल्लक्षणत्वात् । अन्यस्मिंश्चायोग्यानुपलब्धेः । तदेवं न कालातीतः । नापि सत्प्रतिपक्षः । प्रतिप्रयोगानिरूपणात् । प्रतिभाससमानत्वहेतोर्मायादिना व्यभिचारात् । विपश्चितत्वादन्यत्र । विपर्ययज्ञानसद्भावस्य, अबाध्यत्वस्य च सत्यतापरपर्यायस्य साध्यत्वेनाहेतुत्वात् । अर्थक्रियाकारित्वस्यालीकस्वप्नकामिनीसंयोगादिभिरनैकान्त्यात् । सत्यस्य चात्मनस्तदनङ्गीकरणे सपक्षाप्रवेशिनो विपर्ययव्याप्त्या विरुद्धत्वादिति हेत्वाभासोद्धारः ।

उभयासिद्धमिथ्याभावस्य दृश्यस्य च शुक्तिरजतादेः सम्भवात् साध्यधर्मिवद् दृष्टान्तधर्मिणोऽपि प्रसिद्धतामात्रेणोपपत्तेः । प्रमाणविशेषणवैयर्थ्येन्न साध्यसाधनोभयवैकल्याद्यो दोषाः । यदित्थं तत् तथेति च साधारणप्रयोगादेव सर्वोपसंहारसिद्धेः । यद्यदितिवीप्साया वैयर्थ्यात् । गौर्न पदा स्प्रष्टव्येत्यादिनिदर्शनोपपत्तेः क्वचिद्वीप्सायाः स्पष्टार्थत्वात् । अनन्वयविपरीतान्वययोरत्यन्तानाशङ्कनीयत्वात् । यथालक्षणं चोपनयादिविन्यासान्नवाचनिकोऽपि दोष इत्यशेषमतिमङ्गलम् ।

श्रीमदानन्दबोधस्य विबुधानन्ददायिनी ।
स्रवन्त्यमृतधारेव सेव्यतां कृतिभिः कृतिः ॥

भो भो दुर्दर्शनाभ्यासविपर्यासितमतयः! सर्वलोकावसितमपि विपर्यासमनङ्गीकुर्वाणा! विवेकाग्रहमेवायथाव्यवहारमाचक्षाणा! कथं प्रतिबोधनीयाः । उच्यते । विवादाध्यासिता प्रवृत्तिः, पुरोवर्तिगोचररजतज्ञानपूर्विका । रजतेच्छाधीनपुरोवर्तिप्रवृत्तित्वात् । यदुक्तसाधनं, तदुक्तसाध्यम् । यथा सम्यग्रजतप्रवृत्तिस्तथेयं ततस्तथा । नायमसिद्धो हेतुः । विशिष्टप्रवृत्तित्वस्योभयासिद्धत्वात् ।

स्यादेतत् पुरोवर्तिगोचररजतज्ञानपूर्वत्वं मा भूद्, भवतु च रजतार्थिनस्तत्र प्रवृत्तिस्तथा च विपक्षबाधकतर्काभावादप्रयोजक इति चेन्न । तादृग्रजतज्ञानमन्तरेण तथाप्रवृत्त्यङ्गीकरणे तस्या आकस्मिकत्वप्रसङ्गात् । न हीदमिति साधारणज्ञानं विशेषार्थिनं प्रवर्तयत्यतिप्रसङ्गात् । नापि तटस्थ रजतस्मरणं पुरोवर्तिनि प्रवृत्तिकारणम् । अशुक्तिशकलेऽपि तादृशि तत्प्रसङ्गात् । अथ विवेकाग्रहं प्रवृत्तिहेतुं

ब्रूयात् स प्रतिवक्तव्यः । कोऽयं विवेकाग्रहः? । किं भेदाग्रहः, किं वा भेदकाग्रहः, किंस्वित् परस्पराभावग्रहः, किमसंसर्गाग्रहः? यदि भेदाग्रहः स यद्यप्रतिभासमानयोरतिप्रसङ्गः । प्रतिभासमानयोरपि यदि प्रतिभास्ययोः स्वस्वभावभूतः कथं न प्रतिभासेत । प्रतिभासयोरपि स स्वप्रतिभासयोः स्वभावोऽसौ भास्यत एवेति न भेदाग्रहसम्भवः । यदि भेदकाग्रहः । भेदोत्पादकश्चेद्भेदस्य स्वरूपत्वात् कारणाग्रहणं कार्ये प्रवर्त्तयति कार्यान्तरार्थिनमित्यापन्न एवश्चातिप्रसङ्गः । यदि भेदज्ञापकस्तथापि स्वरूपभेदज्ञापकचक्षुराद्यग्रहात् प्रवृत्तिरिति स एव दोषः । अथ भेदज्ञापको भेद्य धर्मौ विवक्षितः । यदि भेद्याविदमंशरजतांशौ तद्धर्मा यदि न ज्ञातास्तत्स्वभावभेदं ज्ञापयन्ति तत्स्वभावज्ञानात् तेऽपि ज्ञाता एवेति कथं तदग्रहः । यद्यज्ञातास्ते नयनसंयोगादय एवेति तदग्रहः स्यादतिप्रसङ्गी । अप्रतिभासमानयोरप्यंशयोर्भेदकाग्रहणं, तादृगेव असाधारणधर्मग्रह एव विवक्षित इतिचेत् । सोऽपि नाप्रतिभासमानांशयोरुक्तदोषात् । प्रतिभासमानांशयोस्तु कतिपयासाधारणधर्माग्रहणं चेत् कुम्भादावपि स्तम्भार्थिनः प्रवृत्तिः स्यात् । प्रातिस्विकनयनसंयोगाद्यग्रहणात् । प्रातिस्विकाऽऽकारभेदेऽपि संयोगाद्यात्मना साधारण्ये सर्वाऽसाधारणधर्मेषु केनचिदात्मना तथा भावः स्यात्कस्यचिदप्यग्रहणं स्वसाधारणधर्मस्य प्रकृतेऽप्यसिद्धम् । रजते रजतत्वस्य पुरोवर्तिनि च देशभेदसंयोगादेरसाधारणधर्मस्य स्फुरणात् । अथ पुरोवर्तिनो यः सामान्यविशेषो रजतासम्भवी शुक्तित्वादिस्तस्याग्रहणं विवक्षितमिति । एवमपि पुरोवर्तिनि पाषाणत्वाग्रहणाद् रजतस्मरणाच्च, पाषाणे प्रवृत्त्यापातः । नच सादृश्यसहकारिणी विशेषाग्रहस्य प्रवर्तकता । विसदृशपीतशङ्खादिभ्रमे व्यभिचारात् । संस्कारोद्बोधद्वारेण तु रजतस्मरणे तदुपयोगि । एतच्चेत् कथञ्चिदन्यतो जातं, न सादृश्यस्य प्रवृत्त्युपयोगः । यादृग्धर्मग्रहणान्निवृत्तिस्तदग्रहणात् प्रवृत्तिरित्यप्ययुक्तम् । न खलु कस्यचिद्धर्मस्य ग्रहणान्निवृत्तिरपि स्यादाप्तवाक्यजनितादपि रजताभावज्ञानादसत्यपि विशेषग्रहे निवर्त्तते । तथा प्रत्यक्षबाधेऽपि रजतप्रतिषेध एव निवर्तकस्तस्याव्यभिचारात् । अस्तु तर्हि नेदं रजतमिति परस्पराभावाग्रहणमेव प्रवर्तकम् । मैवम् । स्मर्यमाणे रजते पुरोवर्तितन्मा-

त्रावस्थोपलम्भस्यैवाभावोपलम्भत्वात् । स च प्रागेव जात इति कथमभावग्रहणम् । तथापि नञुल्लेखेन न जात इति चेत् । न । नञुल्लेखस्याप्रयोजकत्वात् । अन्यथा कुम्भोऽयं स्तम्भोऽयमित्यादिज्ञानत. परस्परव्यावृत्तरूपप्रतिभासे नास्ति नञुल्लेख इत्ययथाव्यवहारापातः । नच विशेषाग्रहण प्रवर्तकमित्युक्तम् । अथापि नेदं रजतमित्येवमाकार प्रत्यय. प्राग नासीद्भवति च पश्चादिति प्रवृत्तिनिवृत्तिव्यवस्थेति चदभिधीयते, तत्रापि वक्तव्यम्-इदं रजतं, नेदं रजतमित्यनयोरस्ति कश्चिद्विषयभेदो, नञः प्रवृत्त्यप्रवृत्ती किं वा न नञ एवोल्लेखानुल्लेखवैषम्यम् । यद्याद्य. कल्पः, कस्तर्हि पूर्वस्मादुत्तरस्य तादृग् विलक्षणो विषयः । शुक्तित्वादिरसाधारणो धर्म इति चेन्न । तस्याऽनञर्थत्वात् । अन्यथा तदप्रतिभासे, नेदं रजतमित्याप्तवचनजा धीर्न स्यात् । तस्मादिदं रजतमिति तादात्म्यप्रतिभासः । पश्चान्नेदं रजतमिति तदभावप्रतिभास इत्येव युक्तो विषयभेदः । अन्यथेदमंशरजतांशस्वरूपमात्रानतिरेकी परस्पराभावो भवतां तयोरिति न तस्याऽप्रतिभासप्रतिभासकृतः प्रागुत्तरप्रत्ययभेदः ।

तथा च, नेदं रजतमिति विलक्षणविषयप्रतीत्यनुदयात् प्रवृत्तावव-श्यमाश्रयणीयो विपर्यासः । नञ एवोल्लेखानुल्लेखवैषम्यस्य त्वप्रयोजकमुक्तं पुरस्तात् । नच प्रतियोगिरजतस्मरणेऽपि तादृश्यताऽभावान्न प्राञ्चोति व्याहारव्यवहारप्रतिभासाः । पुरोवर्तितन्मात्रावस्थापलम्भेऽपि पश्चात्तु तदृदृश्यतया तथा भविष्यतीति वाच्यम् । तादृक्प्रदेशनिवेशिनि रजते तथाविधकरणस्यैव पुंसो रजतत्वोपलम्भात् । अन्यथा परस्परसन्निहितयो रजतशुक्तिकयो रजते रजतव्यवहारो न स्यात् । यदि वाऽसंसर्गाग्रहाद् व्यवहारः । स यदीदमिति रजतमिति च प्रतिभासमानांशयोस्तादात्म्यस्यासमवायस्य वाऽग्रहस्तर्हि संसर्गाभावापरपर्यायस्यासंसर्गस्य संसर्गिमात्रानतिरेकाद्, अतिरेके वापसिद्धान्तात् । इदमिति रजतमिति च संसर्गिमात्रग्रहे कथ तदभिन्नासंसर्गाग्रहाद् व्यवहारः । अप्रतिभासमानांशयोस्त्वसावतिप्रसङ्गी । तदेवं न विवेकाग्रहादयथाव्यवहार. साक्षात्पारम्पर्येण वा । विवेकानुपपत्तेश्च । न तावद्विवेकाग्रह. साक्षाद्व्यवहारमुपजनयेत् । रजतेच्छानिबन्धनो हि तदर्थिन. प्रयत्नस्तन्निबन्धनश्च शरीरपरिस्पन्दः । नापि परम्परया विपर्ययानुत्पादेन हि

पुरोवर्तिनि रजतत्वाग्रहे, कुतः समीहितसाधनतानुमानद्वारेणेच्छा । रजतत्वस्यापक्षधर्मत्वात् । अथ इच्छागोचररजतांशाविवेकसारूप्यात् प्रवृत्तिः साक्षादेव । नच निवर्तकसारूप्याद्भेदाग्रहणान्निवृत्त्यापातोऽपि । न हि प्रवर्तकेन निवर्तकेन वा सारूप्यमित्येव प्रवृत्तेर्निवृत्तेर्वा हेतु', किन्तु प्रवृत्तिहेतुरूपसारूप्यात् प्रवृत्तिनिवृत्तिरप्येवं मन्यरजते च प्रवर्तमानो रजतव्यक्त्यन्तरादविलक्षणाकारां पुरोवर्तिनीं व्यक्तिमवगच्छति जानाति च रजतत्वम् । इच्छति च रजतम् । नच तयोरसम्बन्धमान्तरालिकं च व्यक्त्यन्तरमवगच्छतीति तावन्मात्रादेव तत्र प्रवृत्तिः । तत्राप्यस्ति प्रवृत्तिकारणं निवृत्तिकारणं तु भेदग्रहो नास्तीति न निवृत्तिः । नच तादात्म्यबाधात् समीहागोचरेण रजतांशेन समवायबोधाद्वा समवायव्यापकलिङ्गबोधाद्वा प्रवृत्ति. । तादात्म्यस्याप्रामाणिकत्वात् । समवायस्य चाप्रत्यक्षत्वात् । प्रत्यक्षत्वस्य चक्षुषा प्रतिपन्नस्य सम्बद्धविशेषणप्रतीतिजनकत्वस्य कल्पयितुमशक्यत्वाच्च समवायाप्रत्यक्षत्वासिद्धेः । समवायप्रतीतेश्च लिङ्गादेवावधारितोऽनौपाधिकसम्बन्धाऽसम्भवात् । लिङ्गस्य तु साधारण्येन क्लृप्तशक्तिकत्वात् । इन्द्रियस्य तु साधारण्येनाप्यक्लृप्तशक्तिकत्वात् । सत्यपि सम्बन्धे रसादिप्रतीत्यजनकत्वात् । विषयविशेषे तु कल्पनीयत्वात् । कल्पनायाश्च गौरवदोषादयुक्तत्वात् । समवायव्यापकलिङ्गस्य चाविसंवादिपरस्परसाकाङ्क्षरूपरूपिणोर्नियमेन सहोपलब्धेः साकल्येनानवभासनात् । अविसंवादित्वविशेषणस्य व्यवहारोत्तरकालमध्यवसेयत्वात् । तदेकदेशावगमस्य सम्भ्रमेऽपि वर्तमानत्वात् । सत्यपि समवायबोधे तस्योभयाननुगतस्याप्रवृत्तिहेतुत्वात् । अन्यथाख्यातेश्च प्रतीतिपराहत्यादिदोषदूषितत्वाद् उभयानुगतस्यैव प्रवृत्तिकारणत्वोपपत्त । विभ्रमे भेदज्ञानं विहाय प्रवृत्तेरदर्शनाच्चोभयाननुगतस्याभेदाग्रहस्य कारणताकल्पनायोग. ।

तदेतदयुक्तम् । तथाहि इदमत्र सम्प्रधार्यम् । इच्छा स्वगोचरे प्रवृत्तिजनिका, किं वा तदविवेकिनीति । यद्याद्यः कल्प , कथं रजतार्थी शुक्तिकामादत्ते । यदि द्वितीयस्तदभेदाग्रहोऽपि तर्हि निवृत्तिं किन्न प्रयोजयेत् । लोष्टादौ तथोपलम्भात् । भेदग्रहस्तत्र निवर्तक इति चेत् । अभेदाग्रहेऽपि सम्भवति कुतो विनिगमनम् । अभे-

द्राग्रहस्य प्रयोजकतायां गौरवमितरत्र लाघवमिति चेत् । तर्हीच्छा स्वगोचरे प्रवृत्तिजनिकेति लाघवमिति स्वागोचरेऽपि कथमविवेकमपेक्ष्य प्रवर्तयेत् । उभयानुगतिलाभादित्थमाश्रीयते इति चेत् । न । अयथाज्ञानाङ्गीकारेण पुरोवर्तिनीच्छासम्भवे स्वगोचर एवेच्छा प्रयोजिकेति प्रयोजकाङ्गीकारेऽप्युभयानुगतिलाभात् । प्रतीतिपराहत्यादिदोषादयथाज्ञानमयुक्तमिति चेत्, कथं प्रतीतिपराहतिः । शुक्त्याकारस्य रजतात्मना प्रतिभासाभ्युपगमे सा स्यात्, सितभास्वरस्य वा पुरोवर्तिद्रव्यमात्रस्य । नाग्रिमः कल्पोऽनभ्युपगमात् । पश्चिमानभ्युपगमेन भवत एव प्रतीतिविरोधः । तदुक्तम् ।

यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ।

सामानाधिकरण्येन बोधाद् रूप्यमिदं सितमिति।अनाश्वासस्त्वख्यातिमते समानः । दोषाभावभावाभ्यां विवेकसिद्धिरपरत्रापि स्यात् । नच दोषाभावेऽप्यग्रहाशङ्काऽव्यावृत्तिर्न ह्यदुष्टमित्येव कारणं कार्यं जनयेत्, समग्रन्तु । तथा समग्रता तु कार्यप्रसवावसेया । तथैव च कार्यमनुमिमानस्य परस्पराश्रयप्रसङ्गः । कारणानुमेयत्वे ज्ञानस्य स्वसंवेदनसमयहानिः एतेन बाधकज्ञानादूर्ध्वमालम्बनाभावात् प्राङ् नाऽजनि तज्ज्ञानमिति कल्प्यत इत्यपास्तम् । दोषाभावनिश्चये त्वयथाज्ञानानुत्पत्तिनिश्चयः स्यात् । असति कारणे कार्यानुत्पादनियमात् । औत्सर्गिको व्यवहारो विसंवादाद् व्यावृत्तिरित्यपि तुल्यम् । आलम्बनमप्यनिर्वाच्याङ्गीकारे यथाप्रतिभासमस्त्येव अविद्यामयं रजतम् । अन्यथाख्यात्यङ्गीकारे तु पुरोवर्तिन एव रजतात्मनालम्भनत्वे को दोषः । तेनाकारेणासतः कथं तथालम्भनत्वमिति चेत् । तदाकारेणाऽसतस्तदुचितव्यवहारयोगोऽपि कथम् । व्यवहारः प्रत्यक्षसिद्धो विषयश्च तथा नास्तीत्यन्यथासिद्धत्वादयथाव्यवहाराङ्गीकार इति चेत् । अयथाज्ञानेऽपि समः समाधिः । ज्ञानं न प्रत्यक्षमङ्गीक्रियत इति चेत् । नित्यानुमेयविज्ञानवादिनो मीमांसकस्य शिरसि पतत्वयं वज्रपरिहारः । मानसवेदनीयत्वे स्वसंवेदनत्वे साक्षिवेद्यत्वे वा न कोऽपि दोषः, तथापि न विभ्रमस्थले ज्ञानविशेषः प्रत्यक्ष इति चेन्न । एतावन्तं कालं रजतमित्यभादित्यनुसन्धानात्, प्राक् च बाधात् सत्यज्ञानाद्विशेषानुपलम्भात्।तदुपलम्भे वा तथाव्यवहारानुपपत्तेः । संवादविसंवादाभ्यां संवेद्यसत्त्वा-

ऽसत्त्वविनिश्चयेन संवित्तिसत्तासत्तयोर्निश्चये स्वसंवेदनसंवेदनाभ्युपगमहानि. । व्यभिचारि च ज्ञेयं न ज्ञानमनुमापयेद्, ज्ञानप्रत्यस्तसमयेऽपि सद्भावात् । नच न ज्ञानं ज्ञेयानुमेयं ज्ञेयाभावानुमेयस्तु ज्ञानाऽभाव इति सांप्रतम् । प्रत्यक्षप्रतियोग्यधिकरणस्य प्रतिषेधस्यापि प्रत्यक्षतोपपत्तावनुमानवैयर्थ्यात् । असति च ज्ञेये ज्ञानोत्पत्तिविरोधाऽसिद्धावव्यापकस्य ज्ञेयस्याभावाद्व्याप्यस्य ज्ञानस्याभावानुमानाऽयोगाद् अतिप्रसङ्गात् । उक्तं हि ।

अन्यथैकनिवृत्त्यान्यविनिवृत्तिः कथं भवेत् ।
नाश्ववानिति मर्त्येन न भाव्यं गोमतापि किमिति ॥

नासति ज्ञेये ज्ञानोत्पत्तिस्तत्कारणत्वादिति चेत् । न । अतीतादौ व्यभिचारात् । अपरोक्षज्ञाननिष्ठोऽयं नियम इति चेद् अपरोक्षज्ञानमपि दोषोपेतादिन्द्रियाद् यथाज्ञानं ज्ञेयसत्तामन्तरेणाप्यस्तु को दोष इति शङ्काया. को निवारयिता । दोषाणामौत्सर्गिककार्योत्पादसामर्थ्यविघातितैव न विपरीतकार्योत्पादकतेति चेत् । न । एकस्यापि विरुद्धसहकारिसहितस्य विरुद्धकार्यजननाविरोधात् । यथा भवन्मत एव सहकारिभेदात् कदाचिद् यथार्थव्यवहारजनकं ज्ञानं कदाचित्त्वयथार्थव्यवहारजनकम् । एवमिन्द्रियमपि सहकारिभेदानुरोधेन कदाचिद्यथार्थं कदाचिदयथार्थं वा ज्ञानं जनयेदिति को दोषः । तथापि विवादाध्यासितं रजतविज्ञानं नाऽयथार्थं ज्ञानत्वादुभयवादिसिद्धसमीचीनरजतज्ञानवत् । यद्वा रजतं न शुक्तिकात्वेन प्रकाशते, शुक्तिर्वा रजतत्वेन, तद्रूपणासत्त्वात् । यत् तद्रूपेणासत् तत् तेनाकारेण न प्रकाशते यथा व्योमकमलमित्यादेः का गतिरिति चेत् । विवादाध्यासितो व्यवहारो नायथार्थो, व्यवहारत्वादुभयवादिसिद्धसमीचीनव्यवहारवत् ।

यद्वा शुक्तिर्न रजतव्यवहारयोगिनी । तद्रूपेणासत्त्वात् । यद् यद्रूपेणासत्, तत् तदुचितव्यवहारयोगि न भवति । यथा कुम्भः स्तम्भोचितव्यवहारयोगी न भवतीत्यादेर्या गतिः सैवेति सन्तोष्टव्यम् । यदेतावन्तं कालं रजतमिति व्यवहृतं तच्छुक्तिशकलमित्युत्तरकालानुसन्धानबाधश्चेत् । तत्रापि यदेतावन्त रजतमित्यभात्, सैषा शुक्तिरित्यनुसन्धानबाध इति समं समाधानम् । किञ्च । अयथार्थप्रतिषेधो यथार्थत्वं, तच्च तत्त्वतो ज्ञानस्यार्थसमुत्थत्वमुपद-

शिनार्थसमुत्थत्वमबाधनीयार्थत्वं वा । नाद्यः । सिद्धसाधनात् । द्वितीये तु साक्षाद्रजतसमुत्थत्वम् । यदि रजतज्ञानस्य साध्यमध्यक्षबाध । रजताभावस्याध्यक्षत्वात् । परम्परया चेत् । सिद्धसाधनम् । रजतानुभवसंस्कारोद्बोधद्वारेणेदं रजतमिति ज्ञानं प्रति रजतस्य कारणत्वोपपत्तेः । तृतीये प्रत्यक्षबाध स्पष्ट एव । नेदं रजतमिति बाधस्य सिद्धत्वात् । नायं ज्ञानार्थयोर्बाधः, किन्तर्हि, व्यवहारस्येति चेत्र । अतदर्थिनो व्यवहारानुत्पत्तौ, नेदं रजतमिति ज्ञानस्याबाधकत्वप्रसङ्गात् । अपि च । पराभ्युपगतभ्रान्तिपक्षीकरणे स्याद् आश्रयासिद्धिः । रजतस्मरणपक्षीकरणे तु यथार्थत्वसाधने सिद्धसाधनमिति । तदेवं विपरीतज्ञानसम्भवात् स्वगोचर एवेच्छा प्रवर्तिकेति प्रयोजकाङ्गीकारेऽपि उभयानुगतिसिद्धेः ।

एतेनैतदपास्तं यदाहु — समीहितसाधनरजताविवेका पुरोवर्तिनीच्छा ततः प्रवृत्तिरिति पारम्पर्येणाविवेकः प्रवृत्तिं प्रसूत इति विवेकाग्रहनिबन्धनायामिच्छायामभेदाग्रहबन्धनोपेक्षापि किं न स्याल्लोष्टवत् । तथा चोपादानोपेक्षाभ्यामभित आकृष्यमाणो विषमां दशामाविशेत् । भेदग्रहादुपेक्षा, नाभेदाग्रहादिति चेद्, इच्छापि समीहितसाधनेन पुनस्तदविवेकेति । नियामकानुपलम्भश्चेद् इतरत्रापि तुल्यः पर्यनुयोगः । लघुप्रयोजकाङ्गीकारे तु अस्मन्मतेऽपि समं समाधानम् । विपरीतज्ञानसम्भवाच्चोभयानुगतिलाभः ।

यत् पुनरुच्यते— विपरीतख्यातिपक्षे ज्ञानं साकारमापतेदिति । तदप्यसत् । अनिर्वाच्यपक्षे खल्वलीकयोर्ज्ञानज्ञेययोरङ्गीकाराद्ध दूषणम् । अन्यथाख्यातिपक्षेऽप्ययथाव्यवहारवदयथाज्ञानस्यापि विषयाकारविधुरस्य सम्भवे किमनुपपन्नम् । न हि यथाव्यवहारं विषयो नास्तीति व्यवहारस्तदाकारस्तथैव यथाज्ञानं विषयाभावेऽपि न विज्ञानस्य विषयाकारताप्रसङ्गः । पुरोवर्तिनि रजताकारमन्तरेण रजतोचितव्यवहारगोचरतावदन्तरेणैव रजताकारं तथाविधज्ञानगोचरतोपपत्तेः ।

तदेष विपक्षबाधकतर्कोपपत्तेर्नाप्रयोजक इति स्थितम् । न च विरुद्धः । साध्यविपरीतव्याप्तिवैधुर्यात् । स्यान्मत रजतवत्तदुपायेऽपि पुरोवर्तिनि रजतार्थिताधीना प्रवृत्तिः । न च सा पुरोवर्तिगोचररजतविज्ञानपूर्विकेत्यनैकान्तिकता हेतोरिति । तदसत् । न हि रजतोपाये

रजतार्थिताधीना प्रवृत्तिरपि तु तदुपायार्थिताधीना । यस्तु फलार्थितामेव साधनप्रवर्तिकां मन्येत तस्यान्यार्थिता चेदन्यत्र प्रवर्तिका स्यादतिप्रसङ्गः । तत्साधने एवेति नियम इतिप्रसङ्ग इति चेन्न । अज्ञातेऽपि तत्साधने प्रवृत्त्यापातात् । तत्साधनज्ञानमपि तत्सहकारीति चेत् । एवमपि प्रतिग्रहकृषिवाणिज्यधातुप्रयोगाद्यनेकोपायपरिज्ञानसम्भवेऽपि कथं कस्य चिदेव कुत्रचिदेव धातुप्रयोगकृषिमेवादौ प्रवृत्तिर्न चेत् साधनभेदेच्छा नियामिका । तस्मात् फलेच्छोत्पादनमनन्तरं सज्ञानसाधनभेदममीहयैव साधनभेदे प्रवृत्तिरिति सांप्रतम् । तथाच नाऽनैकान्तिक इति । नाप्यनध्यवसितः । सपक्षगामित्वात् । नापि कालातीतः । बाधकप्रमाणानिरूपणात् । नापि सत्प्रतिपक्षः । प्रतिप्रयोगाभावात् । विवादा त्यम् रतं ा प्रवृत्तिर्विवक्षितरजतज्ञानपूर्विका न भवति शुक्तिप्रवृत्तित्वा वि र्यासद्धशुक्तिप्रवृत्तिवदिति चेन्न । शुक्तिगोचरत्वाविशेषेऽपि भ्रा जतार्थिनो विवक्षितरजतज्ञानपूर्विका, नान्यस्येति व्यवस्थायां विरोधाभावाद् व्याप्यत्वासिद्धः । अन्यथा रजताविवेकानिबन्धनत्वानिराकरणेऽप्युक्तहेतुप्रवृत्तौ कः प्रतीकारस्ततो न सत्प्रतिपक्षताऽपीति सिद्धम् । सम्यग्रजतप्रवृत्तौ च साध्यादिसम्प्रतिपत्तेर्न साध्यविकलतादिदृष्टान्तदोषोऽपीति सर्वम् अनवद्यम् ॥

सेवन्तां मतिमन्तः सरस्वतीचन्द्रिकां विशदाम् ।
आनन्दबोधकृतिनः प्रसरन्तीं पूर्णदिक्चक्रम् ॥ १ ॥

इति श्रीमदानन्दबोधभट्टारकसुधीकृता न्यायदीपावलिः
सम्पूर्णा ॥ शुभं भूयात् ।

